# ॥ श्रीमद्रत्नशेखरसूरिवर्यविवृतं श्राद्धप्रतिक्रमणसूत्रं ॥

इति श्रेष्ठि-देवचन्द्र लालभाइ-जैनपुस्तकोद्धारे ग्रन्थाङ्कः—४६

॥ १४ ॥ वरचूर्णिविविधवृत्त्याद्यनुसृत्य कृतेयमल्पमतिनाऽपि । उत्सूत्रमत्र विबुधैः शोध्यं जीयादियं च चिरम् ॥ १५ ॥

॥ इति श्रीतपागच्छनायकपरमगुरुश्रीसोमसुन्दरसूरिशिष्यश्रीभुवनसुन्दरसूरिविनेयोपाध्यायश्रीरत्नशेखरगणिविरचितायां श्राद्धप्रतिक्रमणसूत्रवृत्तौ शेषाधिकारः पञ्चमः ॥ ५ ॥ संवत् १६०३ श्रावण सुदि ५ रवि श्रीजीराउलागच्छे लिखितं कीका जाउरनगरे ।

॥ समाप्ता चेयमर्थदीपिकानाम्नी श्रावकप्रतिक्रमणसूत्रटीका ॥ ॥ सर्वग्रन्थः ६६४४ ॥ श्री ॥ श्रीरस्तु ॥

इति श्रेष्ठि-देवचन्द्र लालभाइ-जैनपुस्तकोद्धारे ग्रन्थाङ्कः—४६

विख्याततपेत्याख्या जगति जगच्चन्द्रसूरयोऽभूवन् । श्रीदेवसुन्दरगुरूत्तमाश्च तदनु क्रमाद्विदिताः ॥ १ ॥ पञ्च च तेषां शिष्यास्तेष्वाद्या ज्ञानसागरा गुरवः। विविधावचूर्णिलहरिप्रकटनतः सान्वयाह्वानाः ॥२॥ श्रुतगतविविधालापकसमुद्धृतः समभवंश्च सूरीन्द्राः। कुलमण्डना द्वितीयाः श्रीगुणरत्नास्तृतीयाश्च ॥३॥ षड्दर्शनवृत्तिक्रियारत्नसमुच्चयविचारनिचयसृजः। श्रीभुवनसुन्दरादिषु भेजुर्विद्यागुरुत्वं ये ॥४॥ श्रीसोमसुन्दरगुरुप्रवरास्तुर्या अहार्यमहिमानः । येभ्यः सन्ततिरुच्चैर्भवति द्वेधा सुधर्मभ्यः ॥ ५ ॥ यतिजीतकल्पविवृतश्च पञ्चमाः साधुरत्नसूरिवराः । यैर्मादृशोऽप्यकृष्यत करप्रयोगेण भवकूपात् ॥ ६॥ श्रीदेवसुन्दरगुरोः पट्टे श्री सोमसुन्दरगणेन्द्राः । युगवर इव विजयन्ते, तेषां शिष्याश्च पञ्चैते ॥ ७ ॥ मारीत्यवमनिराकृतिसहस्रनामस्मृतिप्रभृतिकृत्यैः । श्रीमुनिसुन्दरगुरवश्चिरन्तनाचार्यमहिमभृतः ॥ ८ ॥ श्रीजयचन्द्रमुनीन्द्रा निस्तन्द्राः सङ्घगच्छकार्येषु । श्रीभुवनसुन्दरवरा दूरविहारैर्गणोपकृतः ॥ ९ ॥ एकाङ्गा अप्येकादशाङ्गिनश्च जिनसुन्दराचार्याः । निर्ग्रन्था: ग्रन्थकृतः श्रीमज्जिनकीर्त्तिगुरवश्च ॥ १० ॥ एषां श्रीसुगुरूणां प्रसादतोऽब्दे षडङ्कविश्व १४९६ मिते । श्रीरत्नशेखरगणिर्वृत्तिमिमामकृत कृतितुष्ट्यै ॥ ११ ॥ चातुर्विद्योदधिभिर्दधिभिर्दधिशुद्धपरमपरभागम् । साऽशोध्यत प्रयत्नाल्लक्ष्मीभद्राह्वविबुधेन्द्रैः ॥ १२ ॥ विज्ञाऽवतंसविहितप्रशंसगणिसत्यहंसविबुधाद्यैः । गुरुभक्त्याऽस्याः प्रथमादर्शे सान्निध्यमाधायि ॥ १३ ॥ एतस्यां टीकायामनुष्टुभामर्थदीपिकानाम्न्याम् । षट्षष्टिशतीचत्वारिंशच्चतुरुत्तराऽनुमिता

ष्यादि ? इति चेत् तन्नावश्यकदशवैकालिकादिदशशास्त्रीव्यतिरेकेण शेषाणां निर्युक्त्यभावादौपपातिकाद्युपाङ्गानां च चूर्णेरप्यभावाद् अनार्षत्वप्रसङ्गस्तस्मान्न किञ्चिदेतत्। श्राद्धप्रतिक्रमणसूत्रस्य च विक्रम ११८३ वर्षे श्रीविजयसिंहसूरिश्रीजिनदेवसूरिकृते चूर्णिभाष्ये अपि स्तः, वृत्तयश्च बह्व्यः, अतः श्रुतस्थविरकृतत्वेन सर्वातीचारविशोधकत्वेन श्रावकैरेतदुपादेयमेव, साधुभिः स्वप्रतिक्रमणसूत्रमिव, एवं सति ये स्वकदाग्रहमात्राभिनिविष्टदृष्टयः पाश्चात्येन केनचित् कृतं सर्वथा चानुपादेयमिदमिति ब्रुवते न विद्मस्तेषां का गतिः ?, सर्वज्ञप्रणीतप्राचीनस्थविराचरितसम्यग्मार्गस्योपमर्दनात्, तदूचे-"रन्नो आणाभंगे इक्कुच्चिअ निग्गहो हवइ लोए। सव्वन्नाणाभंगे अणंतसो निग्गहं लहइ ॥ १ ॥" ननु श्रावकस्य प्रतिक्रमणकरणमेवासङ्गतं दूरेऽस्तु प्रतिक्रमणसूत्रविचारः, तदपि प्रलापमात्रं, सिद्धान्ते श्राद्धानामनेकत्र तस्योक्तत्वात्' यदनुयोगद्वारं-"से किं तं लोउत्तरिअं भावावस्सयं ?, २ जन्नं समणो वा समणी वा सावओ वा साविआ वा तच्चित्ते जाव उभओ कालं आवस्सयं करेइ"त्ति, तथा तत्रैव-"समणेण सावएण य अवस्सकायव्वयं हवइ जम्हा। अंतो अहो निसस्सा तम्हा आवस्सयं नाम ॥ १ ॥" नवाङ्गवृत्तिकृदभयदेवसूरिकलिकालसर्वज्ञश्रीहेमसूरिप्रमुखपूर्वाचार्यरचितेषु पञ्चाशकवृत्तियोगशास्त्रप्रभृतिग्रन्थेषु च श्राद्धानां प्रतिक्रमणं साक्षादुक्तं सर्वप्रसिद्धमेव, तत् पञ्चभेदं-दैवसिकं १ रात्रिकं २ पाक्षिकं ३ चातुर्मासिकं ४ सांवत्सरिकं ५ चेति, एषां कालविध्यादि मत्कृतविधिकौमुद्या अवधार्यम् ॥

वए इंदिअनिग्गहो अ, चत्तारि एआणि सुदुद्धराणि ॥ १ ॥" क्षमाफलं च कूरगड्डुकादीनामिव तद्भवेऽपि केवलज्ञानलाभादि प्रतीतमतः क्षमामादृत्य धर्मार्थिना वैरं त्याज्यमेवेत्येकोनपञ्चाशगाथार्थः ॥ ४ ॥ सम्प्रति प्रतिक्रमणाध्ययनमुपसंहरन्नुत्तरोत्तरधर्मवृद्ध्यर्थमन्त्यमङ्गलमाह—

५०गाथायां उपसंहारः

एवमहं आलोइअ निंदिअ गरहिअ दुगंच्छिउं सम्मं। तिविहेण पडिक्कंतो वंदामि जिणे चउव्वीसं ५०

॥ इति श्रीश्राद्धप्रतिक्रमणसूत्रं सम्पूर्णम् ॥

'एवमह'मिति, 'एवम्' अनेन प्रकारेणाहं सम्यग् 'आलोच्य' गुरोर्निवेद्य 'निन्दित्वा' दुष्ठु कृतमिति स्वसमक्षं गर्हित्वा–तदेव गुरुसमक्षं जुगुप्सित्वा–धिग् मां पापकारिणमित्यादिना, सम्यगिति सर्वत्र योज्यं, 'दुगुंछिअं' इति पाठे तु एवमालोच्य निन्दित्वा गर्हित्वा जुगुप्सितं दुश्चिकित्सितं वाऽतिचारजातं सम्यक् 'त्रिविधेन' मनोवाक्कायलक्षणेन 'प्रतिक्रान्तः' कृतप्रतिक्रमणश्चतुर्विंशतिजिनान् वन्दे इति प्रान्तगाथार्थः ॥ ५० ॥

अत्राह परः–इदं प्रतिक्रमणसूत्रं केन कृतम् ?, उच्यते, यथाऽपरप्रतिक्रमणसूत्राणि श्रुतस्थविरकृतानि तथैतदपि, यदुक्तमावश्यकबृहद्वृत्तौ–'अक्खरसन्नी'तिगाथाव्याख्याने–अङ्गप्रविष्टं गणधरकृतमाचाराङ्गादि, अनङ्गप्रविष्टं तु स्थविरकृतमावश्यकादीनि, अथ श्रावकप्रतिक्रमणसूत्रस्य यद्यार्षत्वं तदा किं न तस्य निर्युक्तिभा-

कादीनपि द्वेष्मि, ज्ञाततत्त्वत्वात्, उक्तं हि ज्ञानाङ्कुशे–"मन्निन्दया यदि जनः परितोषमेति, नन्वप्रयासजनितोऽयमनुग्रहो मे । श्रेयोऽर्थिनो हि पुरुषाः परितुष्टिहेतोर्दुःखार्जितान्यपि धनानि परित्यजन्ति ॥ १ ॥" मैत्रीस्वरूपं चैवमाहुः–"मा कार्षीत् कोऽपि पापानि, मा च भूत् कोऽपि दुःखितः । मुच्यतां जगदप्येषा, मतिर्मैत्री निगद्यते ॥ १ ॥" वैरं च स्वल्पमप्यनल्पानर्थकृद्भवद्वयेऽपि, तत्रात्र कौरवपाण्डवादीनामिवाष्टादशाक्षोहिणीक्षयादिहेतुश्चेटककोणिकयोरिव वा, यदुक्तं पञ्चमाङ्गादिसंवादि–"चेडयकोणिअजुज्झे चुलसी छन्नउअ लक्ख मणुआणं । रहमुसलंमि अ नेआ महासिलाकंटए चेव ॥१॥ वरुणो सोहम्मंमी तस्स य मित्तो अ माणुसगईए । नवलक्ख मच्छउअरे सेसा पुण तिरिअनरएसु ॥ २ ॥ कालाइओवि मरिउं चउत्थपुढवीइ दसवि उप्पन्ना । तत्तो ते उवट्टा सिज्झिस्संति विदेहंमि ॥ ३ ॥ तेसिंपि अ जणणीओ वीरसगासंमि पव्वइआओ । उस्सप्पिणी इमीसे न एरिसो अन्नसंगामो ॥ ४ ॥" परत्र तु वैरं भवपरम्परानुयायि कमठमरुभूत्यादीनामिव, पठन्त्यपि–"वैरवैश्वानरव्याधिवादव्यसनलक्षणाः । महाऽनर्थाय जायन्ते, वकाराः पञ्च वर्द्धिताः ॥ १ ॥" क्षमाप्रधानश्च जैनधर्मः, श्रीवीरजिनेन स्वयं तथादर्शितत्वात्, 'इच्छामि खमासमणो' इत्यादौ च तस्याः प्राधान्येन भणनात्, अभाणि च–"खंती सुहाण मूलं मूलं धम्मस्स उत्तमा खंती । हरइ महाविज्जा इव खंती दुरिआइं सव्वाइं ॥ १ ॥" समर्थस्य च क्षमा बहुफला, यतः–"दाणं दरिद्दस्स पहुस्स खंती, इच्छानिरोहो मणइंदिअस्स । पढमे

निगोदादिसूक्ष्मार्थानामश्रद्धाने ३, तथा विपरीतप्ररूपणा–उन्मार्गदेशना, इयं च दुरन्तदुःखहेतुर्मरीच्यादेरिव, यथोक्तं–"दुब्भासिएण इक्केण मरीई दुक्खसागरं पत्तो। भमिओ कोडाकोडिसागरसरिनामधिज्जाणं ॥ १ ॥" अस्यां चानाभोगादिना कृतायां प्रतिक्रमणं भवति ४, ननु श्रावकस्य धर्मकथनेऽधिकारोऽस्ति ?, अस्तीति ब्रूमः, गुर्वादिभ्यः सम्यक् सूत्रार्थानवबुध्य गुरव एवमादिशन्तीति धर्मकथने को नाम नाधिकारः ? "पढइ सुणेइ गुणेइ अ जणस्स धम्मं परिकहेई"त्यादिवचनप्रामाण्यात्, तथा चावश्यकचूर्णिः–"सो जिणदाससावओ अट्ठमीचउद्दसीसुं उववासं करेइ पुत्थयं च वाएई"त्यादि अष्टचत्वारिंशगाथार्थः ॥ ४८ ॥ उक्तं सविषयं सहेतुकं च प्रतिक्रमणं, सम्प्रत्यनादिसंसारान्तर्गतानां सर्वेषां जीवानां नानाभवेष्वन्योऽन्यवैरसंभवात्तत्क्षमणेन प्रतिक्रमणमाह—

खामेमि सव्वजीवे, सव्वे जीवा खमंतु मे। मित्ती मे सव्वभूएसु, वेरं मज्झ न केणई ॥ ४९ ॥

'खामेमी'ति 'क्षमयामि' मर्षयामि सर्वान् जीवाननन्तभवेष्वज्ञानमोहावृतेन पीडितानहं, सर्वे जीवाः 'क्षमन्तु' मर्षन्तु दुश्चेष्टितम्, एतावता मामाश्रित्याक्षान्तिहेतुकस्तेषां कर्मबन्धो मा भूदिति कारुण्यं सूचितं, हेतुमाह–यतो मैत्री मे 'सर्वभूतेषु' सर्वसत्त्वेषु, 'वैरम्' अप्रीतिर्मम न केनचित्प्राणिना सह, कोऽर्थः ?–मुक्तिलाभहेतुभिस्तान् सर्वान् यथाशक्ति मुक्तिं लम्भयामि, न च केषाञ्चित्तद्विघ्नकृतामपि विघाते वर्त्तेऽहं, न च निन्द-

४८गाथाया व्रताभावेऽपि प्रतिक्रम्यस्थानानि
४९गाथायां क्षामणं मैत्री च

अकाउस्सग्गो परमिट्ठीणं च कयनमुक्कारो। वेयावच्चगराणं दिज्ज थुई जक्खपमुहाणं ॥ १ ॥" प्रकरणकृतः श्रीहरिभद्रसूरयोऽप्याहुर्ललितविस्तरायां–"चतुर्थी स्तुतिर्वैयावृत्त्यकराणा"मिति, तदेवं प्रार्थनाकरणेऽपि न काचिदयुक्तिरिति सप्तचत्वारिंशगाथार्थः ॥ ४७ ॥ ननु येनैतानि व्रतानि स्वीकृतानि स प्रतिक्रामतु न त्वन्यः अस्वीकृतेऽतिचारासम्भवाद्, ग्रामसद्भावे हि सीमाकरणमर्हति, तदयुक्तं, द्वावपि प्रतिक्रामेतां, यतो नातिचारेष्वेव प्रतिक्रमणं, किन्तु चतुर्षु स्थानेष्वपि, तान्येवाह–

**पडिसिद्धाणं करणे किच्चाणमकरणे अ पडिक्कमणं। असद्दहणे अ तहा विवरीअपरूवणाए अ ॥४८॥**

'पडिसिद्धाणं' इति। श्राद्धस्यापि सिद्धान्ते प्रतिषिद्धानि स्थूलप्राणातिपातादीन्यष्टादश पापस्थानानि, तेषु प्राणातिपातादयः पञ्च क्रोधाद्याश्च चत्वारः प्रागुक्ताः, एवं प्रेम–अव्यक्तमायालोभोदयरूपं १० द्वेषः–अव्यक्तक्रोधमानोदयरूपः ११ अभ्याख्यानं–असद्दोषाधिरोपणं १२ रत्यरती–इष्टानिष्टेषु प्रीत्यप्रीती १३।१४ पैशून्यं–द्रोहेण परदोषोद्घट्टनं १५ परपरिवादो-मौखर्येण परनिन्दनं १६ मायामृषावादो-मायया मृषाभाषणं १७ मिथ्यात्वं प्रागुक्तं १८ उच्चैःस्वरराट्यादिरूपः कलहोऽपि पापस्थानेषु क्वचित् पठितः श्रूयते, तत्र रत्यरत्योरेकत्वगणनं संभाव्यते, एवं प्रतिषिद्धानां करणे १ तथा कृत्यानां–'नवकारेण विबोहो' इत्यादिश्रुतोक्तश्राद्धदिनकृत्यानां स्वीकृतदेवार्चादिनियमानां वाऽकरणे, दिनकृत्यव्यक्तिस्तु मत्कृतश्राद्धविधिप्रकरणवृत्तेर्ज्ञेया २ तथा आज्ञाग्राह्याणां

निवारणेन स्यादिति तत्प्रार्थना, 'बोधिं' परलोके जिनधर्मप्राप्तिं, यतः-"सावयघरंमि वर हुज्ज चेडओ नाणदंसणसमेओ। मिच्छत्तमोहिअमई मा राया चक्कवट्टीवि॥१॥" कश्चिद्ब्रूते-ते देवाः समाधिबोधिदाने किं समर्था न वा?, यद्यसमर्थास्तर्हि तत्प्रार्थनस्य वैयर्थ्य, यदि समर्थास्तर्हि दूरभव्याभव्येभ्यः किं न यच्छंति?, अथैवं मन्यते-योग्यानामेव समर्था नायोग्यानां, तर्हि योग्यतैव प्रमाणं किं तैरजागलस्तनकल्पैः?, अत्रोत्तरं, सर्वत्र योग्यतैव प्रमाणं, परं न वयं विचाराक्षमनियतिवाद्यादिवदेकान्तवादिनः, किन्तु सर्वनयसमूहात्मकस्याद्वादवादिनः, 'सामग्री वै जनिके'ति वचनात्, यथा हि घटनिष्पत्तौ मृदो योग्यतायामपि कुलालचक्रचीवरदवरकदण्डाद्योऽपि सहकारिकारणमेवमिहापि जीवस्य योग्यतायां सत्यामपि तथा तथा प्रत्यूहव्यूहनिराकरणेन देवा अपि समाधिबोधिदाने समर्थाः स्युः, मेतार्यस्य प्राग्भवमित्रसुर इवेति फलवती तत्प्रार्थना, ननु देवादिषु प्रार्थनाबहुमानादिकरणे कथं न सम्यक्त्वमालिन्यम्?, उच्यते, नहि ते मोक्षं दास्यन्तीति प्रार्थ्यन्ते बहु मन्यन्ते वा, किन्तु धर्मध्यानकरणेऽन्तरायं निराकुर्वन्तीति, न चैवं कश्चिद्दोषः, पूर्वश्रुतधरैरप्याचीर्णत्वादागमोक्तत्वाच्च, उक्तश्चावश्यकचूर्णौ श्रीवज्रस्वामिचरित्रे-"तत्थ य अब्भासे अन्नो गिरी तं गया, तत्थ देवयाए काउस्सग्गो कओ, सावि अब्भुट्ठिआ, अणुग्गहत्ति अणुन्नाय" मिति, आवश्यककायोत्सर्गनिर्युक्तावपि-"चाउम्मासिअवरिसे उस्सग्गो खित्तदेवयाए अ। पक्खिअ सिज्जसुरीए करंति चउमासिए वेगे॥१॥" बृहद्भाष्येऽपि-"पारि-

'दिवसाः' अहोरात्राणि, बोधिप्रार्थनवञ्च दोषायेदमिति षट्चत्वारिंशगाथार्थः ॥ ४६ ॥ अथ मङ्गलपूर्वं जन्मान्तरेऽपि समाधिं बोधिं च प्रार्थयते—

मम मंगलमरिहंता सिद्धा साहू सुअं च धम्मो अ। सम्मदिट्ठी देवा दिंतु समाहिं च बोहिं च ४७

'मम मंगले'ति ॥ मम मङ्गलमर्हन्तः सिद्धाः साधवः श्रुतं च—अङ्गोपाङ्गाद्यागमः धर्मः—श्रुतचारित्रधर्मात्मकः, चशब्दाल्लोकोत्तमाश्च शरणं चैत इति द्रष्टव्यं, 'चत्तारि मंगलं' इत्यादौ चत्वार्येव मङ्गलान्युक्तानि अत्र तु धर्मान्तर्गतत्वेऽपि श्रुतस्य मङ्गलतया पृथगुपादानं ज्ञानक्रियाभ्यां समुदिताभ्यामेव मोक्ष इति ज्ञापनार्थं, तदाहुः—"हयं नाणं कियाहीणं, हया अन्नाणओ किया। पासंतो पंगुलो दड्ढो, धावमाणो अ अंधओ ॥ १ ॥" इत्यादि, तथा—"नग्नत्वे पशवो जलैर्जलचराः सर्वे जटाभिर्वटा, वल्कैर्भूर्जलताः सुतैः करिखराः श्वानादयो भस्मभिः। चहीनां ज्वलनैर्जना हरिवृषाः संदानिता रज्जुभिः, स्वर्गं यान्ति कथं न ते यदि वृथा ज्ञानक्रिये निष्प्रमे ? ॥ १ ॥" आचाराङ्गेऽपि—"अणाणाए एगे सोवट्ठाणा आणाए एगे निरुवट्ठाणा एवं ते मा होउ"त्ति, तथा सम्यग्दृष्टयः—अर्हत्पाक्षिका देवा देव्यश्चेत्येकशेषाद्देवा—धरणेन्द्राम्बिकायक्षादयो 'ददतु' प्रयच्छन्तु 'समाधिं'चित्तस्वास्थ्यं, समाधिर्हि मूलं सर्वधर्माणां स्कन्ध इव शाखानां शाखा वा प्रशाखानां पुष्पं वा फलस्य बीजं वाऽङ्कुरस्य, चित्तस्वास्थ्यं विना विशिष्टानुष्ठानस्यापि कष्टानुष्ठानप्रायत्वात्, समाधिश्चाधिव्याधिभिर्विधूयते, तन्निरोधश्च तद्धेतुकोपसर्ग-

यावन्तः केचित् साधवः केवलिपरमतदितरावधिऋजुविपुलमतिचतुर्दशदशनवपूर्विद्वादशैकादशाङ्गिजिन-स्थविरकल्पिकयथालन्दिकपरिहारविशुद्धिकक्षीरमधुसर्पिराश्रवसंभिन्नश्रोतःकोष्ठबुद्धिविद्याजङ्घाचारणपदानुसारिवैक्रियलब्धिकफविप्रुण्मलामर्शखेदकेशनखादिसर्वौषध्याशीविषपुलाकनिर्ग्रन्थस्नातकाचार्योपाध्यायप्रवर्त्तकादिभेदभिन्ना उत्कर्षतो नवकोटिसहस्रसङ्ख्या जघन्यतस्तु द्विकोटिसहस्रमिता भरतैरावते महाविदेहे च पञ्चपञ्चभेदे, एवं पञ्चदशकर्मभूमिषु चशब्दाद्व्यन्तरहरणादिनाऽकर्मभूम्यादिषु सन्ति सर्वेभ्यस्तेभ्यः प्रणतोऽस्मि 'त्रिविधेन' मनोवाक्कायैः, तत्र मनसा तद्गुणस्मरणगर्भबहुमानात् वाचा-तन्नामोच्चारणात् कायेन ईषच्छिरोनमनात्, 'त्रिदण्डविरतेभ्यः' अशुभमनोवाक्काययोगविरतेभ्यः, इति पञ्चचत्वारिंशगाथार्थः ॥ ४५ ॥ एवमसौ प्रतिक्रमणकर्त्ता कृतसमस्तचैत्ययतिप्रणतिः प्रवर्द्धमानशुभतरपरिणामो भविष्यत्कालेऽपि शुभभावाशंसां करोति—

चिरसंचिअपावपणासणीइ भवसयसहस्समहणीए। चउवीसजिणविणिग्गयकहाइ वोलंतु मे दिअहा ४६

'चिरे'ति ॥ चिरसञ्चितपापप्रणाशन्या भवशतसहस्रमथन्या, अत्रोपलक्षणत्वादनन्ता भवा द्रष्टव्याः, चतुर्विंशतिजिनेभ्यो बीजेभ्योऽङ्कुरवद्विनिर्गतया कथया-तन्नामोत्कीर्त्तनतद्गुणगानतच्चरिततवर्णनादिकया वचनपद्धत्या जिनार्चने पुष्पाहिदष्टकायोत्सर्गस्थनागकेतोरिव सद्योऽपि केवलप्रदया 'वोलंतु'त्ति व्रजन्तु 'मे' मम

शतिग्रहणात्पञ्चभरतपञ्चैरावतप्रभवानुपलक्षणत्वात्पञ्चमहाविदेहगतांश्च जिनान् वन्दे, एवं 'चउवीसजिणविणिग्गयकहाइ' इत्यत्र प्रान्तगाथान्ते च भाव्यम्, इति त्रिचत्वारिंशगाथार्थः ॥ ४३ ॥ एवं भावजिनान् नत्वा सम्यक्त्वशुद्ध्यर्थं लोकत्रयगतशाश्वताशाश्वतस्थापनाजिनवन्दनायाह—

जावंति चेइआइं उड्ढे अ अहे अ तिरिअलोए अ। सव्वाइं ताइं वंदे इह संतो तत्थ संताइं ॥ ४४ ॥

'जावंती'ति यावन्ति 'चैत्यानि' जिनेन्द्रप्रतिमाः 'ऊर्द्धलोके' स्वर्गादौ 'अधोलोके' भवनपतिभवनादौ 'तिर्यग्लोके' नन्दीश्वराष्टापदादौ च सन्ति सर्वाणि तानि वन्दे इह सन् तत्र 'सन्ति' विद्यमानानि, अत्र स्थितस्तत्र स्थितानीति वा, नित्यप्रतिमासङ्ख्यां त्वित्याहुः—"सट्ठी लक्खा गुणनवइ कोडि तेर कोडि सय बिंब भवणेसु १३८९६०००००० । तिअ सय वीसा इगनवइ सहस लक्खतिगं तिरिअं ३९१३२० ॥ १ ॥ एगं कोडिसयं खलु बावन्ना कोडि चउणवइ लक्खा । चउचत्त सहस सगसय सट्ठी वेमाणि बिंबाणि १५२९४४७६० ॥ २ ॥ पनरसकोडिसयाइं दुचत्तकोडीऽडवन्नलक्खा य । छत्तीससहस असिआ तिहुअणबिंबाणि पणमामि १५४२५८३६०८० ॥ ३ ॥" ज्योतिर्व्यन्तराणामसङ्ख्यभवनेषु प्रत्येकं चैत्यभावान्न प्रतिमासङ्ख्येति चतुश्चत्वारिंशगाथार्थः ॥४४॥ अथ सर्वसाधुवन्दनार्थमाह—

जावंत केइ साहू भरहेरवयमहाविदेहे अ। सव्वेसिं तेसिं पणओ तिविहेण तिदंडविरयाणं ॥ ४५ ॥

वाहिं । एवं जाणंतस्सवि सल्लुद्धरणं परसगासे ॥ २ ॥ अक्खंडिअचारित्तो वयगहणाओ अ जो अ गीअत्थो । तस्स सगासे दंसणवयगहणं सोहिकरणं च ॥ ३ ॥ सल्लुद्धरणनिमित्तं गीअस्सऽन्नेसणा उ उक्कोसा । जोअणसयाइं सत्त उ बारस वरिसाइं कायव्वा ॥ ४ ॥ आलोअणापरिणओ सम्मं संपट्ठिओ गुरुसगासे । जइ अंतरावि कालं करिज्ज आराहगो तहवि ॥ ५ ॥ लज्जाइ गारवेणं बहुस्सुअमएण वावि दुच्चरिअं । जो न कहेइ गुरूणं नहु सो आराहओ भणिओ ॥ ६ ॥ जह बालो जंपंतो कज्जमकज्जं च उज्जुअं भणइ । तं तह आलोइज्जा मायामयविप्पमुक्को अ ॥ ७ ॥ संवेगपरं चित्तं काऊणं तेहिं २ सुत्तेहिं । सल्लाणुद्धरणविवागदंसगाईहिं आलोए ॥ ८ ॥ मायाइदोसरहिओ पइसमयं वड्ढमाणसंवेगो । आलोइज्ज अकज्जं न पुणो काहिंति निच्छयओ ॥ ९ ॥" नृपानीतमात्स्यिकमल्लाट्टनानीतफलहिमल्लौ सम्यगनुक्तोक्तघातव्यथौ मृतसन्मानितावत्र ज्ञातं, ततः सद्गुरुसमक्षं व्यक्तथैवालोचयितव्यं, गुरुणाऽप्यालोचकस्तथा प्रोत्साह्यो यथा सम्यगालोचयति, रोगाद्यवस्थायां गुरोरप्राप्तौ तु सिद्धादिसमक्षमालोचयतोऽपि शुद्धिः स्यात्, रथमुशलसङ्ग्रामान्तर्घातजर्जरवरुणस्येव सौधर्मं गतस्यैकावतारिणः, ततः किम् ? इत्याह–भवत्यतिरेकलघुकः पापभारापगमादतिशयेन लघुभूत इत्यर्थः, क इव ?–अपहृतभर इव भारवाहः, यथा धान्येन्धनलोहादिभारवाहकः शीर्षस्कन्धपृष्ठेभ्यस्तद्भारावतारणानन्तरमात्मानमतिशयेन लघुकं मन्यते तथा श्रावकोऽप्यालोचितनिन्दिताखिलपापः, यतः–"लहु १ आल्हाईजणणं २ अप्पपरनिवत्ति ३ अज्जवं ४ सोही ५ । दुक्करकरणं ६ आढा ७ निसल्लत्तं च ८ सोहीगुणा ॥ १ ॥" दुष्करं च मासक्षपणा-

'आलोअणे'ति, आलोचना-गुरुभ्यो निजदुश्चरितकथनमुपचारात्तत्कारणभूताप्रमादक्रियाऽप्यालोचनोच्यते 'बहुविधा' नानाप्रकारा, तद्धेतूनां बहुत्वात्, अत एवोपयोगपरस्यापि न स्मृता प्रतिक्रमणकाले-आलोचना-निन्दागर्हाऽवसरे, प्रतिक्रमणस्य हि द्वौ कालौ-सूर्योदयोऽस्तमयनं च, सूर्योदयात्प्राक् प्रतिक्रमणमुपधिप्रतिलेखनं च यावता स्यात्तावन्मानः, सायं त्वावश्यके कृते यथा सन्ध्याविगमः स्यात्, इदं साधूनुद्दिश्योक्तं उत्सर्गेण श्रावकस्यापि ज्ञेयं, अपवादेन तु वृत्तिक्रियाद्युपरोधेनान्यथाऽपि, यतः-"वित्तीवोच्छेअम्मि उ गिहिणो सीअंति सव्वकिरिआउ। निरविक्खस्स उ जुत्तो संपुन्नो संजमो चेव ॥ १ ॥" क्व विषये आलोचना? इत्याह-मूलगुणे उत्तरगुणे, मूलगुणाः-पञ्चाणुव्रतानि उत्तरगुणाः-सप्त गुणव्रतादीनि, एवं च विस्मृतातिचारस्य सामान्येनापि प्रतिक्रमणेन शुद्धिरित्यावेदितमिति द्वाचत्वारिंशगाथार्थः ॥ ४२ ॥ एवं प्रतिक्रमको दुष्कृतनिन्दादीन् विधाय विनयमूलधर्माराधनार्थं कायेनाभ्युत्थितः सन् 'तस्स धम्मस्स केवलिपन्नत्तस्सेति' भणित्वा मङ्गलगर्भमिदं भणति-

**अब्भुट्ठिओमि आराहणाए विरओमि विराहणाए। तिविहेण पडिक्कंतो वंदामि जिणे चउव्वीसं ४३**

'अब्भुट्ठि०' ॥ तस्य गुरुपार्श्वे प्रतिपन्नस्य धर्मस्य-श्रावकधर्मस्य केवलिप्रज्ञप्तस्य, 'अभ्युत्थितोऽस्म्याराधनायै' उद्यतोऽहं सम्यक्पालनार्थं 'विरतश्च विराधनाया' निवृत्तः खण्डनायाः 'त्रिविधेन' मनोवाक्कायैः 'प्रतिक्रान्तः' प्रतिक्रमितव्यातिचारेभ्यो व्यावृत्तो वन्दे जिनांश्चतुर्विंशतिं श्रीऋषभादिकान् क्षेत्रकालासन्नोपकारिणः, चतुर्वि-

॥ १ ॥ कह पुण ते बिंतेगो आरुहमाणाण जीअसंदेहो। तो छिंदिऊण मूला पाडिउं ताणि भक्खेमो ॥ २ ॥ बीआह किमम्हाणं तरुणा छिन्नेण अइमहंतेणं? छिंदह महल्लसाहा तइओ बेई पसाहाओ ॥ ३ ॥ गुच्छे चउत्थओ पुण पंचमओ बेइ गिण्हह फलाइं। छट्ठो अ बेइ पडिआ एए चिय खायहा घित्तुं ॥ ४ ॥ दिट्ठंतस्सोवणओ छिंदह मूलाओ बेइ जो एवं। सो वट्टइ किण्हाए? साहमहल्ला य नीलाए २ ॥५॥ हवइ पसाहा काऊ ३ गुच्छा तेऊ ४ फला य पम्हा य ५। पडिआ य सुक्कलेसा ६ अहवा अन्नं उदाहरणं ॥६॥ गामवहत्थं चोरा विणिग्गया एगु बेइ घाएह। जं पिच्छह तं सव्वं दुपयं च चउप्पयं वावि? ॥७॥ बीओ माणुस २ पुरिसो तईओ ३ साउहे चउत्थो अ ४। पंचमओ जुज्झंते ५ छट्ठो पुण तत्थिमं भणइ ॥ ८ ॥ इक्कं ता हरह धणं बीअं मारेह मा कुणह एवं। धणहरणमेव कुव्वह ६ उवसंहारो इमो तेसिं ॥ ९ ॥ सव्वे मारेहत्ति अ वट्टइ सो किण्हलेसपरिणामे। एवं कमेण सेसा जा चरिमो सुक्कलेसाए ॥ १० ॥" इति षट्त्रिंशगाथार्थः ॥ ३ ॥ ननु 'स्तोकस्यापि विषस्य विषमा गति'रित्यल्पोऽपि बन्धः संसारस्यैव हेतुरित्याशङ्क्याह—

तंपिहु सपडिक्कमणं सप्परिआवं सउत्तरगुणं च। खिप्पं उवसामेई वाहिव्व सुसिक्खिओ विज्जो ॥३७॥

'तंपिहु से'ति तदपि यत्सम्यग्दृष्टिना कृतमल्पं पापं सह प्रतिक्रमणेन—षड्विधावश्यकलक्षणेन वर्त्तेत इति सप्रतिक्रमणं, सपरितापं—हा विरूपं कृतमिति पश्चात्तापसहितं, पकारस्य द्वित्वमार्षत्वात्, 'सप्पडिआर'मिति

गुणवं च ३ उज्जुववहारी ४ । गुरुसुस्सूसो ५ पवयणकुसलो ६ खलु भावओ सड्ढो ॥ १ ॥" इत्येकोनचत्वारिं-
शश्लोकार्थः ॥ ३९ ॥ एनमेवार्थं सविशेषमाह—

कयपावोवि मणुस्सो आलोइअनिंदिअ गुरुसगासे । होइ अइरेगलहुओ ओहरिअभरुव्व भारवहो ४०

'कयपावो' इति पायति-शोषयति पुण्यं पांशयति वा-गुण्डयति जीववस्त्रमिति पापं-द्व्यशीतिसङ्ख्याशुभ-
कर्मप्रकृतिरूपं तद्धेतुकं हिंसाऽनृताद्यपि पापं, ततः कृतजीवबधादिपापोऽपि 'मनुष्यः' पुमान् स्त्री नपुंसको वा
न तु तिर्यग्देवादि, मनुष्याणामेव प्रतिक्रमणयोग्यत्वात्, 'आलोचितनिन्दितः' सम्यक्कृतालोचननिन्दाविधिः
क ? इत्याह-'गुरुसकाशे' गुरोः समीपे, अगुरोरगीतार्थादेरन्तिके आत्मनैव वा क्रियमाणायामालोचनायां
शुद्ध्यभावात्, यतः-"अग्गीओ न विआणइ सोहिं चरणस्स देइ ऊणऽहिअं । तो अप्पाणं आलोअगं च पाडेइ
संसारे ॥ १ ॥" स्वयं च तीव्रतपसाऽपि न शुद्धिर्यथैतोऽशीतितमचतुर्विंशतौ नृपेष्टपुत्री चतुरिकामृतधवाऽ-
न्त्यार्हद्दीक्षिता लक्षणार्यां चटकयुग्मरतं दृष्ट्वा दध्यौ-अर्हता किमेतन्नानुमतम् ?, अवेदोऽसौ वा ? इत्यादि, ह्रियाऽ-
नालोचितं, तच्छुद्ध्यै दश वर्षाणि विकृतिवर्जं षष्ठाष्टमाद्यैर्द्वे चणकैर्द्वे षोडश मासक्षपणैर्विंशतिमाचामाम्लैः,
एवं ५० वर्षतपस्तपनेऽप्युग्रदुःखाऽसङ्ख्यभवैः पद्मनाभतीर्थे सेत्स्यति, तदुक्तम्-"ससल्लो जइवि कट्ठुग्गं, घोरं वीरं
तवं चरे । दिव्वं वाससहस्सं तु, तओवि तं तस्स निप्फलं ॥ १ ॥ जह कुसलोवि हु विज्जो अन्नस्स कहेइ अप्पणो

क्षेपण ४ पारिष्ठापनिकासु ५ पञ्चसु समितिषु चशब्दात्सम्यक्त्वप्रतिमाद्यशेषधर्मकृत्यपरिग्रहः, एतेषु निषिद्धकरणादिना योऽतिचारस्तकं निन्दामीति पञ्चत्रिंशगाथार्थः ॥ ३५ ॥ नन्वेवं सर्वेऽप्यतिचाराः सामान्येन व्यक्त्या च प्रतिक्रान्ताः परं पुनर्गृहस्थः षट्कायारम्भादिपापेष्वेव प्रवर्त्तते इति निरन्तरबहुलदुष्कर्मबन्धकालुष्यसम्भवात्कथं नाम तस्य शुद्धिर्गजस्नानन्यायस्यैव भवनादित्याशङ्कायां सम्यग्दर्शनमहिमानं दर्शयन् प्रत्युत्तरमाह—

सम्मद्दिट्ठी जीवो जइविहु पावं समायरइ किंचि। अप्पो सि होइ बंधो जेण न निद्धंधसं कुणइ ॥३६॥

सम्यग्–अविपरीता दृष्टिः–बोधो यस्य स सम्यग्दृष्टिर्जीवः, 'यद्यपि' कथञ्चिदनिर्वाहात् 'पापं' कृष्याद्यारम्भं समाचरति १ 'किञ्चित्' निर्वाहमात्रं, हुशब्दस्तथाऽपीत्यर्थे अव्ययानामनेकार्थत्वात्, ततस्तथाऽप्यल्पः-प्रथमगुणस्थानत्रयापेक्षया स्तोकः 'सि'त्ति तस्य श्रावकस्य भवति बन्धो ज्ञानावरणादिकर्मणामिति शेषः, हेतुमाह–येन कारणेन 'निद्धंधसं' निर्दयमिति क्रियाविशेषणं, 'निद्धंधसे'त्ति पाठे तु 'निद्धन्धसः' निःशूकः सन्न कुरुते, जीवदयामूलसम्यग्धर्मोपलम्भेन सर्वकृत्येषु यतनापूर्वमेव प्रवर्त्तनात्, अत एव ह्येकस्मिन्नपि कृत्ये निर्दयत्वसदयत्वाभ्यां षड्विधलेश्यारूपपरिणामविशेषेण बह्वेवान्तरमागमे जम्बूखादकग्रामवधकदृष्टान्ताभ्यामभिहितं, तच्चैवम्–"जह जंबुपायवेगो सुपक्कफलभारनमिअसाहग्गो। दिट्ठो छहिं पुरिसेहिं ते बिंती जंबु भक्खेमो

हारेइ नरो मुहुत्तेणं ॥ १ ॥ उदयस्सेव निरोहो उदयप्पत्ताण वाऽफलीकरणं । जं एत्थ कसायाणं कसायसंलीणया एसा ॥ २ ॥ तत्तमिणं सारमिणं दुवालसंगीइ एस परमत्थो । जं भवभमणसहाया इमे कसाया चइज्जंति ॥ ३ ॥ जं अइदुक्खं लोए जं च सुहं उत्तमं तिहुअणंमि । तं जाण कसायाणं वुड्ढिक्खयहेउअं सव्वं ॥ ४॥" परेऽप्यूचिरे–"यत्क्रोधयुक्तो जपति, यज्जुहोति यदर्चति । तत्सर्वं स्रवते तस्मादिन्नकुम्भादिवोदकम् ॥ १ ॥" क्रोधे करटोत्करटयोर्ज्ञातं–तौ महर्षी पुरनिर्द्धमने वर्षाचतुर्मासीं कायोत्सर्गं स्थितौ, तदाशातनाभिया पुरान्तर्वृष्ट्यभावाज्जनैराकुष्टौ क्रुद्धौ प्राहतुः–'वर्ष मेघ ! कुणालायां, दिनानि दश पञ्च च । मुशल [युग] प्रमाणधाराभिर्यथा रात्रौ तथा दिवा ॥ १ ॥" तथैव जाते पुराद्युपद्रवान्नरकं गतौ । माने वर्षं कायोत्सर्गस्थबाहुबल्यादिः मायायां श्रीमल्लिः लोभे सोमादित्यश्रेष्ठी प्रियैकपुत्रमपि वञ्चयित्वा रात्रौ श्मशानादधः कोटिनिधिं सङ्गोप्य कथञ्चिद्गृहमासो नूनमियता स केनाप्याप्तो भावीत्यत्यन्तार्त्त्यैव दाहज्वराक्रान्तो मृतो दृग्विषोऽहिर्जातस्तन्निधौ, एवमेकैकोऽप्यनर्थहेतुः किं पुनः समुदिताः ?, तथा दण्ड्यते धर्मधनापहारेण प्राणी यैस्ते दण्डा–अशुभमनोवाक्कायरूपाः मनोदण्डे ज्ञातं–श्रीगौतमनियामितः सुश्राद्धो द्वारास्फलनोत्थस्वभार्याभालव्रणार्त्त्या तत्रैव कृमीभूतः १, वाक्कायदण्डयोर्लौकिकमहर्षिर्व्याधं प्रति सम्यग्मृगगत्युक्त्या नरकं गतः कौशिकः २, प्रागजापालत्वे यूकाशूलाप्रोतनात् भवशतं निर्मन्तुत्वेऽपि शूलाक्षिप्तो माण्डव्यश्च ३, माया १ निदान २ मिथ्यादर्शन ३ शल्यरूपा वा त्रयो दण्डास्तेषु, तथा गुप्तिष्वशुभमनोवाक्काययोगनिरोधरूपासु तिसृषु, तथा ईर्या १ भाषा २ एषणा ३ आदानानि-

तदुक्तं–"कम्मं कसं भवो वा कसमाओ सिं जओ कसायाउ । संसारकारणाणं मूलं कोहाइणो ते अ ॥ १ ॥" चत्वारोऽपि ते प्रत्येकमनन्तानुबन्धिनोऽप्रत्याख्याना: प्रत्याख्यानावरणा: सञ्ज्वलनाश्चेति षोडश तद्भेदा:, एषां स्वरूपं चैवमाहु:–"जाजीव १ वरिस २ चउमास ३ पक्खगा ४ नरय १ तिरिअ २ नर ३ अमरा ४। सम्मा १-णु २ सव्वविरई ३ अहखायचरित्त ४ घायकरा ॥ १ ॥ जलरेणु २ पुढवि ३ पव्वयराई ४ सरिसो चउव्विहो कोहो । तिणिसलया १ कट्ठ २ ट्ठिअ ३ सेलत्थंभोवमो ४ माणो ॥ २ ॥ मायावलेहि १ गोमुत्ति २ मिंढसिंग ३ घणवंसमूल ४ समा । लोहो हलिद्द १ खंजण २ कद्दम ३ किमिराग ४ सामाणो ॥३॥" ननु यदि संज्वलनादय: क्रमेण देवनृतिर्यग्नरकगतिहेतवस्तत्कथं सङ्गमाद्यो नित्यानन्तोदयिनोऽपि स्वर्गं श्रेणिकादयस्तु द्वितीयकषायोदयिनोऽपि नरकं जग्मु: ?, सत्यम्, एतेऽनन्तानुबन्धिक्रोधादय: षोडशापि यथास्वं चतुश्चतूरूपत्वाच्चतु:षष्टिर्भवन्ति, यथाऽनन्तानुबन्धी क्रोधोऽनन्तानुबन्धिक्रोधप्रतिरूपोऽत्यन्ततीव्रतमत्वात्, अनन्तानुबन्धी क्रोधोऽप्रत्याख्यानावरणक्रोधप्रतिरूप: किञ्चिन्मन्दत्वात्, तथा स एव प्रत्याख्यानावरणक्रोधप्रतिरूपो मन्दत्वात्, स एव च संज्वलनक्रोधप्रतिरूपो मन्दतरत्वात्, एवमप्रत्याख्यानक्रोधादयोऽपि प्रत्येकमनन्तानुबन्धिक्रोधादिप्रतिरूपतया चतुर्द्धा वाच्या:, एवं क्रोध: षोडशधा, एवं मानादयोऽपि प्रत्येकं षोडशधा वाच्या:, तदेवं कषायाश्चतु:षष्टि:, तत: सङ्गमकादयोऽनन्तानुबन्धिभिरपि संज्वलनप्रतिरूपै: स्वर्गं श्रेणिकादयस्त्वप्रत्याख्यानैरप्यनन्तानुबन्धितुल्यैर्नरकं जग्मु:, एते च सर्वथा परिहार्या:, यत:–"जं अज्जिअं चरित्तं देसूणाएवि पुव्वकोडीए । तंपि कसाइयमित्तो

बिन्दून् श्रवति यतस्तया वल्ल्या सुवर्णसिद्धिः स्यात् ६, मायासञ्ज्ञा वल्ली फलानि पत्रैराच्छादयति ७, लोभसञ्ज्ञा बिल्वपलाशादयो मूलादि निधानोपरि क्षिपन्ति ८, लोकसञ्ज्ञा कमलानि रात्रौ कैरवाणि तु दिवा सङ्कुचन्ति ९, ओघसञ्ज्ञा वल्ली मार्गं त्यक्त्वा वृतिवृक्षाद्यारोहति १०। पञ्चदश सञ्ज्ञा यथा–"आहार १ भय २ परिग्गह ३ मेहुण ४ सुह ५ दुक्ख ६ मोह ७ वितिगिच्छा ८। तह कोह ९ माण १० माया ११ लोभे १२ सोगे अ १३ धम्मो १४ घे १५ ॥ १ ॥" एता एव लोकसञ्ज्ञया सह षोडश, तद्व्याख्या चाचाराङ्गवृत्त्यन्तर्गता यथा–आहारसञ्ज्ञा–आहाराभिलाषः, सा च तैजसशरीरनामकर्मोदयादसातोदयाच्च भवति १, भयसञ्ज्ञा त्रासरूपा २, परिग्रहसञ्ज्ञा-मूर्च्छारूपा ३, मैथुनसञ्ज्ञा-स्त्र्यादिवेदोदयरूपा, एतास्तिस्रो मोहनीयोदयात् ४ सुखदुःखसञ्ज्ञे सातासातानुभवरूपे वेदनीयोदयजे ६, मोहसञ्ज्ञा-मिथ्यादर्शनरूपा मोहोदयात् ७, विचिकित्सासञ्ज्ञा-चित्तविकृतिरूपा मोहोदयाज्ज्ञानावरणीयोदयाच्च ८, क्रोधसञ्ज्ञा अप्रीतिरूपा ९ मानसञ्ज्ञा-गर्वरूपा १० मायासञ्ज्ञा वक्रतारूपा ११, लोभञ्ज्ञा गृद्धिरूपा १२, शोकसञ्ज्ञा-विप्रलापवैमनस्यरूपा १३, एताः पञ्च मोहोदयजाः, लोकसञ्ज्ञा स्वच्छन्दघटितविकल्परूपा लौकिकाचरिता, यथा–"न सन्त्यनपत्यस्य लोकाः, श्वानो यक्षाः विप्रा देवाः, काकाः पितामहाः, बर्हिणां पक्षवातेन गर्भ" इत्येवमादिका ज्ञानावरणक्षयोपशमान्मोहोदयाच्च भवन्ति १४, धर्मसञ्ज्ञा-क्षमाद्यासेवनरूपा १५, ओघसञ्ज्ञा–वल्लिवितानारोहणादिलिङ्गा ज्ञानावरणीयादिकर्मक्षयोपशमोत्था द्रष्टव्या १६। तथा कषः–संसारस्तस्यायो–लाभो येभ्यस्ते कषायाः क्रोधमानमायालोभलक्षणाः,

यथा दशार्णभद्रस्य सर्वपरमर्द्ध्या श्रीवीरं विवंदिषोः १, रसेषु-मधुरान्नपानादिषु गार्द्ध्यं रसगौरवं महादोषाय यथा मथुरामङ्गवाचार्यादेः, स हि बहुश्रुतो रसलौल्यान्नित्यवासी मृत्वा पुरनिर्द्धमने यक्षोऽजनि २, मृदुशय्यासनादीन्द्रियार्थासक्तिः सातगौरवं दुर्गतिपाताय यथा शशिराजादेः, स हि देहलालनैकरसस्तृतीयनरकं गतः ३, ततो वन्दनं च व्रतानि चेत्यादि द्वन्द्वस्तेषु, तथा सञ्ज्ञा–आहार १ भय २ मैथुन ३ परिग्रह ४ रूपाश्चतस्रो दश वा पञ्चदश षोडश वा प्रोक्ताः श्रुते, तत्र दशसञ्ज्ञा यथा–"आहार १ भय २ परिग्गह ३ मेहुण ४ तह कोह ५ माण ६ माया य ७। लोभ ८ लोगो ९ हसन्ना १० दसभेआ सव्वजीवाणं ॥१॥" एता दशापि द्वीन्द्रियादीनां प्रायः प्रतीताः, एकेन्द्रियाणां तु भाव्यते–तत्राहारसञ्ज्ञा वनस्पतीनां जलाहारत्वात् १, भयसञ्ज्ञा छेदार्थमुपस्थिते सूत्रधारादौ वृक्षाणां कम्पदर्शनात्सङ्कोचनिकायाश्च भयेन सङ्कुचनात् २, परिग्रहसञ्ज्ञा वल्लीभिर्वृक्षादीनां वेष्टनात् ३, मैथुनसञ्ज्ञा कुरुबकाशोकादीनामङ्गनाऽऽलिङ्गनपादप्रहारादिभिः पुष्पोद्गमात्, ऊचुश्च–"कुरुबयतरुणो फुल्लंति जत्थ आलिंगणेण(णाणि) तरुणीणं १। तरुणिपयोहरतुट्ठा असोअतरुणोवि विअसंति २॥१॥ तरुणीमइरागंधेण तोसिआ केसरावि कुसुमंति ३। चंपयतरुणो फुल्लंति सुराहि जलदोहलेहिं च ४॥२॥ विअसंति तिलयतरुणो तरुणिकडक्खेहिं पडिहया जत्थ ५। फुल्लंति विरहरुक्खा सोऊणं पंचमुग्गारं ६॥३॥" पारदस्यापि सशृङ्गाराङ्गनाताम्बूलरसस्पर्शो कूपाद्यदिः समन्तादुत्प्लवनादिश्रवणान्मैथुनसञ्ज्ञा संभवति, क्रोधसञ्ज्ञा पादे लग्ने कोकनदस्य कन्दो हुङ्कारान् मुञ्चति ५, मानसञ्ज्ञा मयि सत्यां किं लोकदुःखमिति मानाद्रुदन्तीनामौषधी

कायिकाद् वाचा वाचिकात् मनसा मानसिकात् सर्वस्माद्व्रतातीचारान्निवर्त्तेऽहमित्यर्थः, पठन्ति च—"मनसा मानसं कर्म, वचसा वाचिकं तथा । कायेन कायिकं तद्वन्निस्तरन्ति मनीषिणः ॥ १ ॥" इति चतुस्त्रिंशगाथार्थः ॥ ३४ ॥ सामान्येन योगत्रयं प्रतिक्रम्य विशेषतस्तदेव प्रतिक्रमितुमाह—

वंदणवयसिक्खागारवेसु सन्नाकसायदंडेसु । गुत्तीसु अ समिईसु जो अइआरो य तं निंदे ॥ ३५ ॥

'वंदणे'ति वन्दनं-चैत्यवन्दनं गुरुवन्दनं च, तत्राद्यं द्रव्यतः पालकस्य भावतः शम्बस्य, द्वितीयं द्रव्यतो वीरकस्य भावतः श्रीकृष्णस्य, दशत्रिकादिचतुःसप्तत्यधिकद्विसहस्रीमितद्वाररूपश्चैत्यवन्दनाविधिर्द्विनवत्यधिकचतुःशतीद्वाररूपो गुरुवन्दनविधिश्च भाष्यादेरभ्यूह्यः, तथा व्रतानि—अणुव्रतादीनि पौरुष्यादिप्रत्याख्यानरूपा नियमा वा, शिक्षा ग्रहणासेवनरूपा द्वेधा, तत्र ग्रहणशिक्षा-सामायिकादिसूत्रार्थग्रहणरूपा, यदागमः—"सावगस्स जहन्नेणं अट्ठप्पवयणमायाओ उक्कोसेणं छज्जीविणिआ, सुत्तओऽवि अत्थओऽवि, पिंडेसणज्झयणं न सुत्तओ अत्थओ पुण उल्लावेणं सुणइ"त्ति १, आसेवनशिक्षा तु नमस्कारेण विबोध इत्यादि दिनकृत्यलक्षणा २, गौरवाणि—जात्यादिमदस्थानान्यष्टौ, यतः—"जाइ १ कुल २ रूव ३ बल ४ सुअ ५ तव ६ लाभे ७ सरिय ८ अट्ठमयमत्तो । एआइं चिअ बंधइ असुहाइं बहुं च संसारे ॥ १ ॥" मेतार्यहरिकेशिबलमरीच्यादयोऽत्र ज्ञातानि, यद्वा त्रीणि गौरवाणि ऋद्धि १ रस २ सात ३ गौरवभेदात्, तत्र प्रभूतधनस्वजनादिभिर्गर्वकरणमृद्धिगौरवं इहैव लाघवाय

षतस्त्वल्पवक्तव्यत्वादिना नोक्ताः, एवं ज्ञानाद्याचारपञ्चकमाश्रित्य चतुर्विंशशतातिचाराणां श्रावकं प्रति प्रतिक्रमणमुक्तम्, अथ सर्वेऽप्यतीचारा मनोवाक्काययोगसम्भवा अतस्तांस्तैरेव प्रतिक्रामन्नाह—

काएण काइअस्सा पडिक्कमे वाइअस्स वायाए। मणसा माणसिअस्सा सव्वस्स वयाइआरस्स ॥ ३४ ॥

'काएणे'ति कायेन च वधादिकारिणा कृतः कायिकस्तस्य, आर्षत्वादत्र दीर्घः, कायेन-गुरुदत्ततपःकायोत्सर्गाद्यनुष्ठानपरेण देहेन हत्यादिस्वपातकस्मृत्यवधिनिषिद्धसर्वाहारषण्मासीकायोत्सर्गसिद्धदृढप्रहारिवत् १ तथा वाचा—सहसाऽभ्याख्यानदानादिरूपया कृतो वाचिकस्तस्य वाचैव मिथ्यादुष्कृतभणनादिलक्षणया श्रीगौतमवत् यथाऽनशनस्थानन्दश्राद्धेन पूर्वाद्यब्धित्रये योजनपञ्चशतीमुदीच्यां त्वाहिमाचलादूर्द्ध्वमासौधर्मकल्पादधो रत्नप्रभायां आ लोलुपान्ममावधिरुत्पेदे इत्युक्तः, सहसा श्रीगौतमेनोक्तं—गृहस्थस्येयान् अवधिर्न स्यादतोऽस्य स्थानस्यालोचय, आनन्दोऽप्यूचे—सद्भावोक्तौ किमालोचना स्यात् ?, नो चेद् यूयमेवालोचयत, ततः स साशङ्कः श्रीवीरं पृष्ट्वाऽऽलोच्यानन्दं क्षमयामास, एवं वाचिकस्य वाचा २, तथा मनसा देवतत्त्वादौ शङ्कादिकालुष्येण कृतो मानसिकस्तस्य मनसा-हा दुष्कृतमित्यात्मनिन्दापरेण, मनसैवार्जितसप्तमनरकयोग्यकर्मक्षणान्तरोत्पन्नकेवलप्रसन्नचन्द्रराजर्षिवत् ३, "तुः पुनरर्थे" इत्युक्तं श्रीअकलङ्कदेवसूरिकृतवृत्तौ तेन "माणसिअस्स उ" इति पाठः संभाव्यते, पाठान्तरं वा तत्, सर्वस्य व्रतातिचारस्य प्रतिक्रमामीति योगः, पञ्चम्यर्थेऽत्र षष्ठी, ततः कायेन

॥१९१॥

दिर्निदानं कुर्यात् देवाः केन साक्षाद् दृष्टाः ? इमे राजान एव देवास्ततो यद्यस्ति तपोऽनुष्ठानादीनां फलं तदाऽहं राजा भवेयं, स स्वर्गं गतश्च्युत्वा राज्यं लभते, नतु सम्यक्त्वादिधर्मं, एवं दुर्लभबोधिः स्यात् १, एवं बहुचिन्ता बहुव्यापारा राजानस्ततः श्रेष्ठ्यादिकुले भवेयं २, पुमान् बहुव्यापारः सङ्ग्रामादिदुष्करकारी चेति स्त्रीत्वमाशास्ते ३, एवं स्त्री नित्यं पराधीना पराभवपदं चेति पुंस्त्वम् ४, अशुभा नृभोगास्ततो ये देवा अन्यं देवं देवीं वा आत्मानं वा देवदेवीरूपं विकुर्व्य प्रविचरन्ति तथाऽहमपि स्याम् ५, आत्मानमेव देवीरूपं विकुर्व्य ये प्रविचरन्ति तथा स्यां ६, निर्विण्णकामभोगत्वाद् यत्र न प्रविचारणा तत्र स्यां, स ततश्च्युतः सम्यग्दर्शनं लभते, नतु देशविरत्यादि ७, तत एवात्मा मे सुनिस्तारः स्यादिति दरिद्रः स्यां, स स्वर्गादागतो दरिद्रीभूय प्रव्रजत्यपि न तु सिध्यति ८, एवं श्राद्धत्वं साध्विति श्राद्धः स्यां, स सर्वविरतिं नाप्नोति ९, सौभाग्यादिनिदानान्यपि नवस्वेतेष्वेवान्तर्भाव्यानि, निदानकृच्च प्राग्भवाराद्धप्रकृष्टधर्मोऽपि प्रायो नरकादिदुर्गतिदुःखभागी स्यात् सप्तमपृथिवीप्राप्तसुभूमब्रह्मदत्तादिवत्, तदुक्तं—"सुबहुंपि तवं चिन्नं सुदीहमवि पालिअं सुसामन्नं । तो काऊण निआणं मुहाइ हारिंति अत्ताणं ॥ १ ॥ उड्ढंगामी रामा केसव सव्वेवि जं अहोगामी । तत्थवि निआण कारणमओ अ मइमं इमे वज्जे ॥ २ ॥" इति त्रयस्त्रिंशगाथार्थः ॥ ३३ ॥ उक्ताः संलेखनातिचाराः, तपोवीर्याचारयोरतिचारास्तु "जो मे वयाइआरो" इति द्वितीयगाथायां चशब्दसूचितत्वेन सामान्यतः प्राक् प्रतिक्रान्ताः, विशे-

रसन्मानवन्दनाद्यवलोकनात्सुविहितगीतार्थयतिप्रारब्धश्रीसिद्धान्तपुस्तकवाचनादिबहुमानाविर्भावनाद्भूयोभूयःसम्भूयभूयस्तरधार्मिकधुरीणप्रवीणसाधर्मिकश्रेणिप्रणीयमानसद्गुणोपबृंहणाश्रवणाच्चैवं मन्यते-यदुत प्रतिपन्नानशनस्यापि मम जीवितं सुचिरं श्रेयो यतो मामुद्दिश्यैवंविधा समृद्धिरिति जीविताशंसाप्रयोगः ३, तथा कश्चित् कर्कशक्षेत्रे कृतानशनः प्रागुक्तपूजाद्यभावात् क्षुदाद्यार्त्तो वा चिन्तयति-कदा म्रियेऽहमिति मरणाशंसाप्रयोगः ४, चशब्दात्कामभोगाशंसाप्रयोगः, तत्र कामौ-शब्दरूपे भोगा-गन्धरसस्पर्शास्तेषामाशंसाप्रयोगो यथा-ममास्य तपसः प्रभावात् प्रेत्य रूपसौभाग्यादि भूयात् ५, एष पञ्चविधोऽतिचारो मा मम भूयान्मरणान्ते चरमोच्छ्वासमपि यावदित्यर्थः, उपलक्षणं चैतत् तेन सर्वस्मिन्नपि धर्मानुष्ठाने ऐहलौकिकी पारलौकिकी वा सर्वथाऽप्याशंसा वर्जनीया, यत्सूत्रं-"नो इहलोगट्ठयाए आयारमहिट्ठिज्जा नो परलोगट्ठयाए आयारमहिट्ठिज्जा नो कित्तिवण्णसद्दसिलोगट्ठयाए आयारमहिट्ठिज्जा नन्नत्थ आरिहंतेहिं हेऊहिं आयारमहिट्ठिज्जा।" तथा-"आशंसया विनिर्मुक्तोऽनुष्ठानं सर्वमाचरेत्। मोक्षे भवे च सर्वत्र, निःस्पृहो मुनिसत्तमः ॥ १ ॥" आशंसां कुर्वाणो हि प्रकृष्टधर्माराधकोऽपि हीनमेव फलं लभते, धर्मस्य चिन्तामणेरिवाशंसारूपतुच्छमूल्येन विक्रीतत्वात्, आह च-"सीलव्वयाइं जो बहुफलाइं हंतूण सुक्खमहिलसइ। धिइदुब्बलो तवस्सी कोडीए कागिणिं किणइ ॥१॥" अत एव निदानान्यर्हद्भिः सर्वथा निषिद्धानि, तानि च नव, यथाऽऽह-"निव १ सिट्ठि २ इत्थि ३ पुरिसे ४ परपविआरे अ ५ सपविआरे अ ६। अप्परयसुर ७ दरिद्दे ८ सड्ढे ९ हुज्जा नव निआणा ॥१॥" व्याख्या-कश्चित्साध्वा-

यदेयद्रव्ये सति यत्संविभागो न कृतस्तन्निन्दामि गर्हे चेत्यन्वयः, इह च चरणमध्ये तपसः सङ्ग्रहे सत्यपि पृथगुपादानमनेन निकाचितान्यपि कर्माणि क्षीयन्ते इति प्राधान्यख्यापनार्थं, यत्परमार्षम्—"कडाणं कम्माणं पुव्विं दुच्चिन्नाणं दुप्पडिक्कंताणं वेइत्ता मुक्खो नत्थि अवेइत्ता, तवसा वा झोसइत्ता " इति द्वात्रिंशगाथार्थः ॥ ३२॥

॥ इतिश्रीतपागच्छनायकपरमगुरुश्रीसोमसुन्दरसूरिशिष्यश्रीभुवनसुन्दरसूरिविनेयोपाध्यायश्रीरत्नशेखरगणिविरचितायां श्राद्धप्रतिक्रमणसूत्रवृत्तौ शिक्षाव्रताधिकारश्चतुर्थः ॥ ४ ॥ श्री ॥

एवं द्वादशव्रतातिचारान् प्रतिक्रम्य संलेखनातिचारान् परिजिहीर्षुस्तदभवने प्रार्थनामाह—

इहलोए परलोए जीविअमरणे अ आससपओगे। पंचविहो अइआरो मा मज्झं हुज्ज मरणंते ॥३३॥

'इहलोए' इति, आशंसाप्रयोग इति सर्वत्र योज्यं, प्रतिक्रामकमाश्रित्येहलोको—मनुष्यलोकस्तत्राशंसा-अभिलाषः प्रेत्य मानुषः स्यां राजा वा श्रेष्ठी वेत्यादिरूपस्तस्याः प्रयोगो—व्यापार इहलोकाशंसाप्रयोगः १, परलोको-देवभवादिस्ततो देवो देवेन्द्रो वा भवेयमित्यादि परलोकाशंसाप्रयोगः २, तथा कश्चित्कृतानशनः प्रतिदिनं नानानगरग्रामसमागच्छदतुच्छश्रीसङ्घविधीयमाननिःसमानमहोत्सवपरम्परानिरीक्षणादनेकनागरिकलोकप्रारम्भितनृत्यकलाकौशलसमुद्भूतप्रभूतशोभानिभालनान्मृदुमृदङ्गरङ्गद्वेणुवीणापटुपटहप्रमुखसुखकारिवाद्यमानननावाद्यवृन्दनिनादाकर्णनादहम्पूर्विकापूर्वकविवेकिजननिकरनिरन्तरक्रियमाणव्यतीतप्रमाणवस्त्रमाल्यादिसत्का-

हिंस्रपरुषादिभ्यो निवृत्तिः शुभभाषायां च प्रवृत्तिर्वाक्संयमः १६, कायस्य धावनवल्गनादिभ्यो निवृत्तिः शुभक्रियासु च प्रवृत्तिः कायसंयमः १७, एवं सप्तदशप्रकारः प्राणिदयारूपः संयमः। वैयावृत्त्यं दशधा, यतः–"आयरिअ १ उवज्झाए २ थेर ३ तवस्सी ४ गिलाण ५ सेहे अ ६। साहम्मिअ ७ कुल ८ गण ९ संघसंगयं तमिह कायव्वं १० ॥ १ ॥" ब्रह्मगुप्तयो नव प्रागुक्ताः, शेषाश्चरणभेदाः सुगमाः। करणमपि सप्ततिभेदं, यतः–"पिंडविसोही ४ समिई ५ भावण १२ पडिमा य १२ इंदिअनिरोहो ५। पडिलेहण २५ गुत्तीओ ३ अभिग्गहा ४ चेव करणं तु ॥ १ ॥" तत्र पिण्डविशुद्धिश्चतुर्द्धा, यतः–"पिंडं १ सिज्जं २ वत्थं च ३, चउत्थं पायमेव य ४। अकप्पिअं न इच्छिज्जा, पडिगाहिज्ज कप्पिअं ॥१॥" भावना द्वादश, यतः–"पढमं अणिच्चभावं १ असरणयं २ एगयं च ३ अन्नत्तं ४। संसार ५ मसुइअं चिअ ६ विविहं लोगस्सहावं च ॥ १ ॥ कम्मस्स आसवं ८ संवरं च ९ निज्जरण १० मुत्तमे अ गुणे ११। जिणसासणंमि बोहिं च दुल्लहं १२ चिंतए मइमं ॥ २ ॥" प्रतिमा द्वादश, यतः–"मासाई सत्तंता पढमा ८ बिअ ९ तइअ १० सत्तराइदिणा। अहराइ ११ एगराइअ १२ भिक्खूपडिमाण बारसगं ॥ १ ॥" एतद्व्याख्या आवश्यकवृत्त्यादेर्ज्ञेया। प्रतिलेखनाः पञ्चविंशतिः, यतः–"दिट्ठिपडिलेहएगा १ पप्फोडा तिन्नि तिन्नि अंतरिआ ७। अक्खोडा पक्खोडा नव नव २५ इअ पुत्तिपणवीसा ॥१॥" अभिग्रहाश्चत्वारो द्रव्य १ क्षेत्र २ काल ३ भाव ४ भेदात्, शेषाः करणभेदाः कण्ठ्याः, एतेन मूलोत्तरगुणाः प्रदर्शिताः, एवं तपश्चरणकरणयुक्तेषु साधुषु सति प्रासुकदाने देयदानयोरभेदोपचारादुपलक्षणत्वाच्च प्रासुकैषणी-

सप्ततिभेदं, यतः–“वय ५ समणधम्म १० संजम १७ वेआवच्चं च १० बंभगुत्तीओ ९। नाणाइतिअं ३ तव १२ कोहनिग्गहाई ४ चरणमेअं ॥ १ ॥” तत्र श्रमणधर्मो दशधा, यतः–“खंती १ अज्जव २ मद्दव ३ मुत्ती ४ तव ५ संजमे अ ६ बोद्धव्वे। सच्चं ७ सोअं ८ आकिंचणं च ९ बंभं च १० जइधम्मो ॥ १ ॥” ‘मुत्ति’त्ति मुक्तिः निर्लोभता ‘सोअ’त्ति शौचं संयमं प्रति निरुपलेपता, सा चादत्तादानपरिहाररूपा, लोभार्त्तो हि परधनं जिघृक्षन् संयमं मलिनयति, लौकिका अप्याहुः–“सर्वेषामपि शौचानामर्थशौचं परं स्मृतम्। योऽर्थेषु शुचिः स शुचिर्न मृद्वारिशुचिः शुचिः ॥१॥” संयमः सप्तदशधा, यतः–“पञ्चाश्रवाद्विरमणं ५ पञ्चेन्द्रियनिग्रहः १० कषायजयः १४। दण्डत्रयविरति १७ श्चेति संयमः सप्तदशभेदः ॥ १ ॥” यद्वा–“पुढवि १ दग २ अगणि ३ मारुअ ४ वणस्सइ ५ बितिचउपणिंदि ९ अज्जीवे १०। पेहो ११ पेह १२ पमज्जण १३ परिठवण १४ मणो १५ वई १६ काए १७ ॥ १ ॥” व्याख्या–पृथिव्यादिनवविधजीवानां रक्षेति नवधा, अजीवसंयमः सत्त्वोपघातहेतूनां पुस्तकादीनामग्रहणरूपः, यतः–“जइ तेसिं जीवाणं तत्थगयाणं तु सोणिअं हुज्जा। पीलिज्जंते धणिअं गलिज्ज तं अक्खरे फुसिउं ॥ १ ॥” दुष्षमादोषात्प्रज्ञाबलहीनशिष्यानुग्रहार्थं यतनया प्रतिलेखनाप्रमार्जनापूर्वं ग्रहणरूपो वा १०, प्रेक्षासंयमः प्रत्युपेक्ष्य प्रमार्ज्य च स्थित्यादिकरणम् ११, उपेक्षासंयमः सीदतां संयतानां चिन्ता असंयतानां तु न १२, प्रमार्जनासंयमः सागारिके सति रजोहरणेन पदोरप्रमार्जनं (असति तु प्रमार्जनं) १३, परिष्ठापनासंयमस्त्याज्यस्य विधिना त्यागः १४, मनसो द्रोहाभिमानेर्ष्यादिभ्यो निवृत्तिः धर्मध्यानादिषु च प्रवृत्तिर्मनःसंयमः १५, वाचो

तथैव, परं द्वेषेण "दगपाणं पुप्फफलं अणेसणिज्जं" इत्यादितद्गतदोषदर्शनान्मत्सरेण, अथवा असंयतेषु-षड्विधजीववधकेषु कुलिङ्गिषु रागेण एकदेशग्रामगोत्रोत्पत्त्यादिप्रीत्या द्वेषेण-जिनप्रवचनप्रत्यनीकतादिदर्शनोत्थेन, ननु प्रवचनप्रत्यनीकादेर्दानमेव कुतः?, उच्यते, तद्भक्तभूपत्यादिभयात्, तदेवंविधं दानं निन्दामि गर्हे च, यत्पुनरौचित्येन दीनादीनां दानं तदप्यनुकम्पादानं, यतः-"कृपणेऽनाथदरिद्रे व्यसनप्राप्ते च रोगशोकहते। यद्दीयते कृपार्थमनुकम्पा तद्भवेद्दानम् ॥ १ ॥" समर्थदेहस्यापि प्रार्थनाकारिणो दरिद्रप्रायत्वाद्दानं अनुकम्पादानं तच्च न निन्दार्हं, जिनेन्द्रैरपि वार्षिकदानावसरे तस्य दर्शितत्वात्, उक्तञ्च-"इयं मोक्षफले दाने, पात्रापात्रविचारणा। दयादानं तु सर्वज्ञैः, कुत्रापि न निषिध्यते ॥१॥" तथा "दानं यत्प्रथमोपकारिणि न तन्न्यासः स एवार्प्यते, दीने याचनमूल्यमेव दयिते तत्किं न रागाश्रयात्?। पात्रे यत्फलविस्तरप्रियतया तद्वार्धुषीकं न किं, तद्दानं यदुपेत्य निःस्पृहतया क्षीणे जने दीयते ॥ १ ॥" इत्येकत्रिंशगाथार्थः ॥ ३१ ॥ अधुना साधुसंविभागं प्रतीत्य कृत्याकरणप्रतिक्रमणायाह—

साहूसु संविभागो न कओ तवचरणकरणजुत्तेसु। संते फासुअदाणे तं निंदे तं च गरिहामि ॥३२॥

'साहू' इति, तपो-बाह्यान्तररूपं द्वादशधा, यतः-"अनशन १ मौनोदर्य २ वृत्तेः सङ्क्षेपणं ३ रसत्यागः ४। कायक्लेशः ५ संलीनतेति ६ बाह्यं तपः प्रोक्तम् ॥१॥ प्रायश्चित्तध्याने २ वैयावृत्त्य ३ विनया ४ वथोत्सर्गः ५। स्वाध्याय ६ इति तपः षट्प्रकारमाभ्यन्तरं भवति ॥ २ ॥" तपोविशेषव्याख्यादि मत्कृतार्थकौमुद्या ज्ञेयं, चरणं



अथास्यातिथिसंविभागव्रतस्य न केवलमेत एव प्रदर्शितरूपा अतिचारा निन्दार्हाः किन्त्वन्येऽपि सन्तीत्याह–

सुहिएसु अ दुहिएसु अ जा मे अस्संजएसु अणुकम्पा ।
रागेण व दोसेण व तं निंदे तं च गरिहामि ॥ ३१ ॥

'सुहिएसु' इति साधुष्विति विशेष्यमनुक्तमपि संविभागव्रतप्रस्तावादध्याहार्य, ततः साधुषु कीदृशेषु ?- सुष्ठु हितं-ज्ञानादित्रयं येषां ते सुहितास्तेषु, पुनः कथम्भूतेषु ?-'दुःखितेषु' रोगेण तपसा वा ग्लानीभूतेषु उपधिर-हितेषु च, पुनः कीदृक्षु ?-न स्वयं-स्वच्छन्देन यता-उद्यता अस्वयतास्तेषु गुर्वाज्ञयैव विहरत्स्वित्यर्थः, या मया कृताऽनुकम्पा-कृपाऽन्नपानवस्त्रादिदानरूपा भक्तिः, अनुकम्पाशब्देनात्र भक्तिः सूचिता, यथोक्तम्-"आयरिअ-अणुकम्पाए गच्छो अणुकंपिओ महाभागो । गच्छाणुकंपणाए अव्वुच्छित्ती कया तित्थे ॥ १ ॥" 'रागेण' स्वजनमित्रादिप्रेम्णा न तु गुणवत्त्वबुद्ध्या, तथा 'द्वेषेण' इह द्वेषः-साधुनिन्दाख्यो यथा धनधान्यादिरहिता ज्ञातिजनपरित्यक्ताः क्षुधार्त्ताः सर्वथा निर्गतिका अमी उपष्टम्भार्हा इत्येवं निन्दापूर्वं याऽनुकम्पा साऽपि निन्द्यैव अशुभदीर्घायुष्कहेतुत्वात्, यदागमः-"तहारूवं समणं वा माहणं वा संजयविरयपडिहयपच्चक्खायपावकम्मं हीलित्ता निंदित्ता खिंसित्ता गरहित्ता अवमन्नित्ता अमणुन्नेणं अपीइकारगेणं असणपाणखाइमसाइमेणं पडिलाभित्ता असुहदीहाउअत्ताए कम्मं पगरेइ"त्ति, यद्वा सुखितेषु दुःखितेषु वा असंयतेषु-पार्श्वस्थादिषु शेषं

रोऽजनि ॥ ५८ ॥ प्राचीनप्रेमतस्तेन, सत्रा मैत्र्यभवत्तव । प्रीतिद्विपादयः प्रायः, प्राग्भवाभ्यासवासजाः ॥५९॥ निनिन्द मुनिदानं यन्निदानं सोऽखिलश्रियाम् । तेन तस्य भृशं क्लेशोऽप्यासीन्न श्रीः कथञ्चन ॥ ६० ॥ दुःखानि दुःसहान्येवं, प्रत्युत प्रासवांश्च सः । नामापि शर्मणां कुत्र, पूर्वं ह्यकृतधर्मणाम् ? ॥६१॥ निन्दाऽन्यदपि निर्दिश्य, निपिद्धाऽनेकदुःखकृत् । अनन्तदुःखकृत्प्रोच्चैर्धर्ममुद्दिश्य किं पुनः ? ॥६२॥ द्वेषवानेष दिद्वेष, यद्धर्मे प्राग्भवे ततः । द्वेष्योऽभूदत्र सर्वेषां, फलं बीजानुसारि यत् ॥ ६३ ॥ प्राग्दुष्कर्ममहावात्यावर्त्तेनाद्यापि पोतवत् । वीतपारं स संसारपारावारं चिरं भ्रमी ॥ ६४ ॥ एवं पूर्वभवं स्वस्य, सुहृदश्च निशम्य सः । सुबुद्धिः प्रतिबुद्धात्मा, धर्मे एव धियं ददौ ॥ ६५ ॥ ततः सर्वां स सौवर्णैः, स्वर्णाद्रिभिरिवापरैः । अलञ्चक्रेऽर्हद्विहारैस्तारैरिव दिवं भुवम् ॥ ६६ ॥ दुःस्था अवस्था दुःस्थानामृणार्त्तानामृणानि च । आकाशकुसुमौपम्यं, दानिना तेन निन्यिरे ॥ ६७ ॥ मात्रातीतास्तीर्थयात्रा, विधाय विधिना पुनः । सङ्घाधिपत्यमत्यन्तदुर्लभं लभते स सः ॥ ६८ ॥ सप्तक्षेत्र्यां सौववित्तं, वापं वापमपापधीः । साफल्यं सम्पदोऽवाप, धर्मिकौटुम्बिकाग्रणीः ॥ ६९ ॥ आराध्यैवं गृहिधर्मं, सुचिरं शुचिरङ्गभाग् । समये समयज्ञोऽसौ, यतिधर्ममुपाददे ॥ ७० ॥ तमप्याराध्य दुःसाधं, निराबाधं विपद्य सः । गतवानच्युतस्वर्गं, च्युतश्च शिवमीयिवान् ॥७१॥ वृत्तं निशम्येति वयस्ययोर्द्वयोः, शुभाशुभोत्कृष्टफलाप्तिगर्भितम् । भो भाववन्तोऽतिथिसंविभागसद्व्रते यतध्वं यदि वः शिवस्पृहा ॥ ३७२ ॥

॥ इति द्वादशव्रते गुणाकरगुणधराख्यानम् ॥

गसम्भवे ॥ ४२ ॥ धन्यस्त्वं यस्य धर्मे धीः, साधुनेत्युपबृंहितः । ततः प्रमुदितः प्राप, स मन्दिरमुदारहृत् ॥४३॥
तदारभ्य स साधुभ्यः, साधुधीः संभवेऽन्वहम् । भुङ्क्ते भक्त्या प्रदायैव, सतां प्रोक्तं हि नान्यथा ॥ ४४ ॥ एवं
त्रिवर्गसामग्रीसमग्रीकृतनृस्थितिः । चिरमायुः प्रपूर्य स्वं, मृतः स सुखमृत्युना ॥ ४५ ॥ प्रापोत्तरकुरुक्षेत्रे,
क्षेत्रेऽनुत्तरसम्पदाम् । युगलित्वं त्रिपल्यायुरतुल्याद्भुतभाग्यभाक् ॥ ४६ ॥ दशप्रकारकल्पद्रुकल्पितानल्पकल्पि-
तः । ततोऽसौ धर्ममाहात्म्यात्सौधर्मस्वर्गमागमत् ॥ ४७ ॥ चित्रं तत्र त्रिदशत्वं, त्रिदशस्त्रीनिषेवितः । पल्य-
मेकं सुसौख्यैकदशोऽप्यनुबभूव सः ॥ ४८ ॥ ततश्च्युत्वा पुरेऽत्रैव, देवकीपद्मदेवयोः । तनयस्त्वमभूर्भूरिभाग्यः
प्राक्कृतपुण्यतः ॥ ४९ ॥ यत्त्वया प्राग् यतीन्द्राय, प्रादायि मोदकाष्टकम् । तेनाजनिष्ट सत्कन्यास्वर्णकोट्यष्टकादि
ते ॥ ५० ॥ यत्त्वयाऽतिथिसंभागव्रतं स्वीकृत्य नित्यशः । पालितं तेन नित्यर्द्धिः, प्राप्तः सौवर्णपूरुषः ॥ ५१ ॥
विष्टस्तु दुष्टधीः साधुदाननिन्दाविधानतः । काले कालगतो जज्ञे, कुक्कुरः पाप्मिठक्कुरः ॥५२॥ तद्वेश्मैव स पूर्व-
स्मादभ्यासाद्भोगिवन्निधिः । प्रसह्य परिगृह्यास्थात्, केनाप्यकृतसत्कृतिः ॥५३॥ स कृच्छ्रजीवितः कीटभक्षितः
क्षतवान् मृतः । दृक्करालो बिडालोऽभूत्, तस्मिन्नेव च वेश्मनि ॥५४॥ आहारयन् रसवतीं, नानारसवतीं रसात् ।
सोऽन्यदा सूपकारेण, कृच्छ्रमारेण मारितः ॥५५॥ तेनाथ जातं मातङ्गजन्मन्याजन्मदुःखिनि । कृत्वा च जीव-
हिंसादि, मृत्वाऽऽद्ये नरके गतम् ॥ ५६ ॥ चतुष्पल्यां दुःखखानौ, स तस्मिंस्तिमिवद्दवे । कथञ्चिद् गमयामास,
हा ! प्राग्दुष्कर्मदुष्टताम् ॥ ५७ ॥ तत उद्धृत्य तज्जीवः, किञ्चिद्दैवानुभावतः । धनञ्जयस्य धनिनः, सूनुर्गुणध-

मानन्दस्तदा तेनान्वभूयत । जाने यस्योपमाने स्याद्विश्वस्यापि दरिद्रता ॥ २७ ॥ चित्तादित्रिकयोगोऽस्य, भाग्ययोगेन कोऽप्ययम् । सर्वसिद्धिप्रदस्त्रेधा, सिद्धियोग इवाभवत् ॥ २८ ॥ यतः—"केसिंचि होइ चित्तं वित्तं अन्नेसिमुभयमन्नेसिं । चित्तं वित्तं पत्तं तिन्निवि केसिंचि धन्नाणं ॥ २९ ॥" बद्धं भोगफलं किञ्चित्तदानीं तेन निस्तुलम् । सुपात्रदानकृत्यं हि, सत्यङ्कारः सुखश्रियाः ॥ ३० ॥ निकृष्टचेता विष्टस्तु, प्रेताविष्ट इव स्वयम् । हसित्वा किञ्चिदित्यूचे, वचः स्वोचितमुच्चकैः ॥ ३१ ॥ अहो ! अखण्डपाखण्डैः, पाषण्ड्याखण्डलायितैः । परवेश्मानि मुष्यन्ते, धूर्त्तैरिव वृथा कथम् ? ॥३२॥ इदं हि भस्मनिहुतं, प्रवाहेमूत्रितं किल । एषां दत्तेन दानेन, किं फलं स्वव्ययात्परम् ? ॥ ३३ ॥ बबन्धे तीव्रबन्धेन, तेनैवं वदताऽसता । घोरं दुष्कर्म तत्तादृग्, यद्भुक्त्यैव स वेदिता ॥ ३४ ॥ तस्याभूदशुभायैव, मुनेरपि समागमः । दृशोरान्ध्याय घूकस्य, सहस्रांशोरिवोदयः ॥ ३५ ॥ भिक्षुर्भिक्षामथादाय, यावद्याति निजं पदम् । तावत्पृष्ठगतस्तत्त्वं, सुविष्टः पृष्टवानमुम् ॥ ३६ ॥ ऋषिराह महाभाग !, निषिद्धा हि महात्मनाम् । गोचरैकाग्रचर्यायां, स्थित्वा धर्मकथाप्रथा ॥ ३७ ॥ तस्मादुपाश्रये तत्त्वं, श्रोतव्यं समये त्वया । समये सोऽपि तत्रैत्य, नत्वा किं तत्त्वमित्यवक् ॥३८॥ साधुरप्यभ्यधात्तत्त्वं, धर्म एव द्विधा च सः । साधुधर्मश्राद्धधर्मभेदादाद्यस्तु दुष्करः ॥ ३९ ॥ द्वितीयः सुकरः सोऽपि, सम्यक्त्वगुणपूर्वकः । द्वादशव्रतरूपः सन्, यथाशक्ति विधीयते ॥ ४० ॥ इत्यादि विस्तरात्प्रोक्ते, श्राद्धधर्मे महर्षिणा । सदा स दानैकरुचिरुवाच वचनं यथा ॥४१॥ व्रतेभ्यो द्वादशभ्योऽपि, सुकरं द्वादशं व्रतम् । तन्मया नियमान्नित्यं, पाल्यं तयो-

मद्देशनाश्रुतिपूर्वकम्। तमप्राक्षीत् प्राग्भवं स्वं, सौहृदं च गुणाकरः"॥ ११ ॥ उज्जगार गुरुः सोऽपि, भद्राश्चैव पुरे पुरा। अभूतां भ्रातरौ विष्टः, सुविष्टश्चेति वाणिजौ ॥ १२ ॥ सत्र्यैकरतिर्दुष्टमतिर्विष्टस्तयोः पुनः। दुष्प्रहारादिव जनव्यवहारादपि त्रसेत् ॥१३॥ सन्मानयति नो जातु, स्वजनान् दुर्जनानिव। सुखाकुर्यात्परीवारमप्यङ्गार इवैष न ॥१४॥ अमित्रानिव मित्राणि, नैवोपकुरुते क्वचित्। न चानुकम्पते क्वापि, दुःस्थितान् सुस्थितानिव ॥ १५ ॥ निर्द्धर्मानिव सद्धर्मान्, दुष्कर्मा नार्चयेत् क्वचित्। निवारयति भिक्षार्थिप्रवेशमपि वेश्मनि ॥ १६ ॥ नाङ्गभोगेऽपि सोद्योगः, सदाहारेऽप्यपस्पृहः। सदैव दैवहतकः, कुचेलमलिनाङ्गकः ॥१७॥ हील्यमानः स्वकजनैस्तर्ज्यमानश्च सज्जनैः। निन्द्यमानः स्थूललक्षैर्हस्यमानश्च भोगिभिः ॥ १८ ॥ वित्ते सत्यपि सौख्यानां, निमित्ते नित्यनिःस्ववत्। दुःखैकमयं समयं, निर्भाग्यो गमयत्ययम् ॥१९ ॥ शिष्टप्रष्ठः सुविष्टस्तु, सुसन्तुष्टविशिष्टधीः। सदा सदाचारपरः, परेषामुपकारकृत् ॥ २० ॥ अर्थिप्रार्थितकल्पद्रुरनल्पगुणभूषणः। सौदर्येऽपि तयोरेव, भेदोऽभून्मणिलेष्टुवत् ॥ २१ ॥ यतः—"अक्कसुरहीण खीरं कक्कररयणाइं पत्थरा दोवि। एरंडकप्पतरुणो रुक्खा पुण अंतरं गरुअं ॥ २२ ॥" तौ मिथः प्रीतिकलितौ, मिलितौ तिष्ठतोऽनिशम्। छायातपाविव परं, प्रकृतिं न व्यतीयतुः ॥ २३ ॥ एकोऽन्यदा सुविष्टस्यावासमासन्नसिद्धिकः। तपस्वी पावयामास, मासक्षपणपारणे ॥ २४ ॥ अहो! अभ्रं विना वृष्टिरहो! पुष्पं विना फलम्। यदेष जङ्गमं तीर्थमागमन्मम सद्मनि ॥ २५ ॥ इत्युच्चैर्भावनां सोऽन्तर्भावयन् स्वं च पावयन्। अष्टौ विशिष्टान् शिष्टात्मा, प्रासुकान् मोदकान् ददौ ॥ २६॥ स कोऽपि पर-

हि गतिस्थिती ॥ ९५ ॥ तन्नाथ! रैनरः सोऽयं, सद्यस्तस्मै प्रसाद्यताम्। राजार्पितं प्रजानां हि, प्रमाणं दिव्यवस्त्वपि ॥ ९६ ॥ ततो राज्ञा विवेकेन, द्रागाकार्य गुणाकरम्। रैपुमान् प्रददे तस्मै, वाचं कोऽत्येति दैवतीम्? ॥९७॥ सोल्लासः सौधमावासमाशु सोऽपि नृपाज्ञया। प्रौढोत्सवैस्तमानीय, तदीयफलमग्रहीत् ॥९८॥ तदा तदाश्रितस्तस्य, सर्वेभ्योऽप्यतिशायिता। निश्चिक्ये सकलैर्विष्णोरिव कौस्तुभलाभतः ॥ ९९ ॥ ततस्तद्भाग्यविभवश्लाघाकर्मणि निर्ममे। एकान्तवाद एवोच्चैरपि स्याद्वादवादिभिः ॥ ३०० ॥ द्रुह्यन् गुणधरः किन्तु, खेदाद्वैतं दधत्कुधीः। तदाऽपि यत्तद्विब्रूते, धिगहो! तस्य सौहृदम् ॥ १ ॥ ततोऽयं दुर्धियां धुर्यो, निर्भाग्यवर्गपुङ्गवः। मिथ्याऽभिमानिमाणिक्यमद्रष्टव्यमुखाग्रणीः ॥ २ ॥ वाचाटकोटिमुकुटः, समत्सरशिरोमणिः। निर्लज्जजनमूर्द्धन्यो, धृष्टप्रष्ठः खलाग्रिमः ॥ ३ ॥ अधमेभ्योऽधमः कार्यं, कोत्तमेभ्यः स उत्तमः। अनयोः सङ्गतं धिग् धिक्, शक्रविट्कीटयोरिव ॥ ४ ॥ इत्यादि सर्वतः सर्वैर्नागरैः स निरन्तरम्। सोपहासं गर्ह्यते स्म, लोकः प्रकटवाग् यतः ॥ ५ ॥ कलापकम् ॥ कृतहत्यादिपाप्मेव, स्वास्यं दर्शयितुं ततः। कस्याप्यशक्तः स व्रीडापीडितोद्विग्नमानसः ॥ ६ ॥ स्वयमेव स्वमुद्बध्य, स्वात्मशत्रुरनात्मवित्। तत्याज दुस्त्यजान् प्राणान्, धिग् धिग् भवविडम्बनम् ॥ ७ ॥ युग्मम् ॥ बभूव तिर्यग्नरकदुःखलक्षखनिश्च सः। अत्रामुत्रापि निर्धर्मः, सौख्यभागी भवेत्कुतः? ॥ ८ ॥ तादृग्व्यतिकरं दुःखाकरं ज्ञात्वा गुणाकरः। निर्विवेद भवे तत्त्वं, धर्ममेव विवेद च ॥ ९ ॥ तत्राथ समवासार्षीद्, धर्महर्षमहर्षिराट्। केवली देवलीढांह्रिरिव गौतमकेवली ॥ १० ॥ विधिना वन्दनाध-

वेतालः, करालः कालरूपभृत् । सत्त्वेनानेन रे क्लीब !, मां वशीकर्त्तुमीहसे ? ॥ ८० ॥ स्वकर्म्मणः फलं भूङ्क्ष्व, भर्त्सयन्निति तं क्रुधा । लगुडैस्ताडयामास, सस्यमूढकवद्भृशम् ॥ ८१ ॥ युग्मम् ॥ आराररटत्कद्रुरवैर्भूपीठे च व्यलोलुठत् । सोऽसासहीन्नारकीव, दुःखं धिग् मन्दभाग्यताम् ॥ ८२ ॥ भूरिप्रहारसंमूर्च्छन्मूर्च्छाविच्छाय विग्रहः । कथञ्चिन्मुमुचे तेन, निश्चेष्टीकृत्य काष्ठवत् ॥ ८३ ॥ प्रातस्तन्मातुलस्तत्रान्वेषयंस्तं सशङ्कहृत् । श्मशाने शबवत्प्रेक्ष्य, पतितं प्रविषेदिवान् ॥ ८४ ॥ कृच्छ्रेण प्रगुणीकृत्य, सत्कृत्य च ततः कृती । शून्यचित्तं कथञ्चित्तं, पुरं निन्ये जयस्थलम् ॥ ८५ ॥ आश्वास्यतैष च प्रीतिप्रतिबन्धविधायिना । गुणाकरेण सुहृदा, सतां तुच्छेऽप्य-हो ! कृपा ॥ ८६ ॥ गुणाकरस्य सुहृदस्तां समृद्धिं तथाऽपि सः । श्रुत्वा दृष्ट्वा च हृदन्तरदन्दह्यत साग्निवत् ॥ ८७ ॥ अन्येद्युर्गोप्यमारोप्य, रैनरं भासुरं रथे । महापुरपुरात्तत्रैयरुर्नरपतेर्नराः ॥ ८८ ॥ ते च राजानमा-स्थानस्थास्नुमेवं व्यजिज्ञपत् । अस्माकं स्वामिनः स्वामिंस्तेजःसारस्तनूरुहः ॥ ८९ ॥ रैनरस्तस्य सिद्धोऽभूद्भाग्य-योगेन किन्तु सः । स्वधाम्नि यावदानिन्ये, स्वप्ने तावदुवाच तम् ॥ ९० ॥ परिव्राजा साधनायारब्धः सिद्धश्च ते तु भोः ! । परं गुणाकरस्यैव, गृहे स्याताऽस्मि सुस्थिरः ॥ ९१ ॥ जयस्थलपुरस्थायी, स च पद्ममहेभ्यभूः । कस्तस्माद्भाग्यवानन्यस्तेजस्वीव दिवाकरात् ॥ ९२ ॥ पदमस्मादृशानां च, तादृगेवार्हति ध्रुवम् । कल्पते कल्पवृ-क्षाणां, स्थानं किं नन्दनाद्विना ? ॥९३॥ तन्मां नय नयश्रेष्ठ !, श्रेष्ठिनस्तस्य मन्दिरम् । को वा गुणाकरस्थानं, नेहते स्वहितार्थवित् ॥ ९४ ॥ दिव्योक्त्यैवं व्यक्तयाऽत्र, द्राग् नः सार्थेन भूपभूः । तं प्रैषीद्दिव्यवस्तूनां, स्वेच्छया

सिद्धरसवत्, पुण्याढ्यस्यैव सिद्ध्यति ॥ ६४ ॥ छलं स्वल्पमपि प्राप्य, प्रेतवच्च तनोत्ययम् । महानथ मयाऽप्येष, महाकृच्छ्रेण साधितः ॥ ६५ ॥ इत्युक्तोऽप्यमुना दध्यौ, सोऽहंमन्यजनाग्रिमः । तत्किं मया यद्दुःसाधमसाधारणशक्तिना ? ॥६६॥ किमनूह्यं समर्थानां, किमगम्यं महाधियाम् । किमपथ्यं दृढाग्नीनां, किमसाध्यं महौजसाम्? ॥ ६७ ॥ इत्थं मिथ्याऽभिमानेन, पूर्णो गुणधरः कुधीः । बालवद्रुथमुचन्नैव, मन्त्रयाच्ञाकदाग्रहम् ॥ ६८ ॥ ततो दाक्षिण्यनिधिना, विधिना प्रददेऽमुना । तस्मै मन्त्रः स्फुटाम्नायः, सत्यङ्कार इव श्रियाम् ॥ ६९ ॥ कृतार्थमानी तत्प्राप्त्या, मानी गुणधरस्ततः । सिद्धमापृच्छ्य गच्छन्तं, विवेश देशमात्मनः ॥ ७० ॥ तत्रारामसुसीमश्रि, सुसीमपुरमीयिवान् । प्रागज्ञातमातुलावासमध्युवास स सादरम् ॥ ७१ ॥ मुदाऽन्येद्युर्मातुलाय, सद्भावमभिधाय सः । कृत्वा समग्रसामग्रीमेकाक्येवाकुतोभयः ॥ ७२ ॥ रात्रौ कृष्णचतुर्दश्यां, श्मशानस्थानमागमत् । कृतहोमादिकर्मा च, मन्त्रं ध्यातुमढौकत ॥ ७३ ॥ युग्मम् ॥ मन्त्रं ध्यायन्नयं सम्यग्, योगीन्द्र इव निश्चलः । बिभीषिका भीषणा अप्युन्मिषन्तीर्विषेहिवान् ॥७४॥ सानुमानिव वातौघैर्विघ्नौघैर्विविधैरपि । यावन्नैव च चुक्षोभ, निःक्षोभः कथमप्यसौ ॥ ७५ ॥ कुलालचक्रवच्चक्रमत्युच्चैरेकमेकतः । तावद्भ्रमितुमारेभे, घूघूत्कारौघदारुणम् ॥७६॥ युग्मम् ॥ रौद्र आक्रन्दशब्दश्चात्युच्चैरुच्छलितोऽन्यतः । महायन्त्रपीड्यमानजलमानुषभूरिव ॥ ७७ ॥ तदा ताभ्यां व्याकुलस्य, प्राणश्यत्तस्य चेतसः । चैतन्यमिव दुर्दैवादेकं मन्त्रपदं जवात् ॥ ७८ ॥ सुहुस्तेन चिन्तयताऽप्यधिजग्मे न तत्पदम् । निष्पुण्येनेव गीर्वाणमणिः पाणिपरिच्युतः ॥ ७९ ॥ लब्धच्छलश्च

प्रातः, शालिदालिघृतादिकम् ॥ ४९ ॥ सायंदिने च लपनोल्लासिनीं लपनश्रियम् । तुर्यं प्रान्तर्मण्डकाद्यान्, सायं
नैकाः सुखादिकाः ॥ ५० ॥ चतुर्भिः कलापकम् ॥ इति प्रतिदिनं प्रेक्ष्य, शक्तिं तस्य स विस्मितः । ध्रुवं महानु-
भावोऽयमिष्टदातेति चिन्तयन् ॥ ५१ ॥ छन्दानुवृत्तिप्रणतिश्लाघाविश्रामणादिभिः । दुर्विनीतोऽपि शश्वत्तं,
सिषेवे सुविनीतवत् ॥ ५२ ॥ युग्मम् ॥ यतः–"परगुणगहणं छंदाणुवत्तणं हिअमकक्कसं वयणं । निचमदोस-
ग्गहणं अमूलमंतं वसीकरणं ॥५३॥" सोऽन्यदा तं मुदा भक्त्यावर्जितं दम्भवर्जितम् । पप्रच्छेह कुतः शक्तिः,
कल्पद्रोरिव ते विभो ! ॥ ५४ ॥ सिद्धोऽप्यभिदधे भद्र !, दारिद्र्योपद्रुतो ह्यहम् । अवभ्रमं भुवं द्रव्यसम्भ्रमं
बिभ्रदाशये ॥ ५५ ॥ कृपालुमेकं चैकत्रालोक्य कापालिकोत्तमम् । प्रणेमिवान् प्रोचिवांश्च, दारिद्र्योपद्रवं निजम्
॥ ५६ ॥ दीनार्त्तवत्सलस्त्यक्तच्छलः सोऽपि कृपावताम् । नेता वेतालमन्त्रं मे, गुरुस्तत्त्वमिवादिशत् ॥ ५७ ॥
तन्मन्त्रसाधनादृद्धिरीदृग्मेऽद्य पुनः कियत् । कर्त्ताऽस्मि सर्वसम्पत्तिं, स्वपदं प्राप्नुवांस्तु ते ॥ ५८ ॥ ततः स
तुष्टिपुष्टात्मा, सार्द्धं सिद्धेन भृत्यवत् । दिनानि कानिचिन्मार्गे, व्यूढः प्रौढधनाशया ॥५९॥ सिद्धोऽन्यदा जगादे-
तत्तव देशोऽस्ति वामतः । आसन्नोऽहं पुनर्दूरं, गन्ता दक्षिणतः सखे ! ॥ ६० ॥ वद तत्सम्पदं सम्पादये ते
भद्र ! कीदृशीम् ? । ईशोऽहं हन्त ! वित्तस्य, दातुं कोटीरपि स्फुटम् ॥ ६१ ॥ कोटीभिरप्यसन्तुष्टस्ततो गुण-
धरोऽभ्यधात् । तं मन्त्रमेव मे देहि, बीजं यः सर्वसम्पदाम् ॥ ६२ ॥ सिद्धः प्रोवाच याचस्व, स्वर्णकोटिशता-
न्यपि । महाकष्टैकयन्त्रेण, किं मन्त्रेण प्रयोजनम् ? ॥ ६३ ॥ यदेष विषमः प्रोचैः, प्राणसंशयकृन्नृणाम् । चेत्परं

णपूरुषः । यद्यथा चिन्त्यतेऽन्यस्मै, तत्तथा स्वयमाप्यते ॥ ३४ ॥ तस्मादाकस्मिकाल्लाभाद्भृशं भूपभुवोऽभवत् । आनन्दः कोऽपि यन्माने, त्रैलोक्यमपि सङ्कटम् ॥ ३५ ॥ जुगोप गोपतेः पुत्रस्तत्रैव निधिवच्च तम् । यथा तथा कथं तादृग्, वस्तु विज्ञः प्रकाशयेत् ? ॥ ३६ ॥ किञ्चित्पथ्यदनप्रायं, प्रदाय दयया धनम् । वनीपकमिवार्थैनं, विससर्जावनीशसूः ॥ ३७ ॥ श्वेव लेहनमात्रेण, तावन्मात्रेण तुष्टिभाक् । स्थानात्ततः सोऽपि गच्छंस्तुच्छश्चिन्तामिति व्यधात् ॥ ३८ ॥ जागर्त्त्यद्यापि मे भाग्यमभङ्गुरमहो ! महत् । छुटितोऽस्मि झटित्यसाध्यसाद्रिकटसङ्कटात् ॥ ३९ ॥ इयद्वित्तमपि प्राप्तं, स्वयमेवामुनाऽर्पितम् । तत्काप्यद्यापि सुप्राप्यं, मया नूनं धनं बहु ॥ ४० ॥ अतः परं निजपुरं, गच्छन्नप्यर्जिताऽस्म्यहम् । ध्रुवमिष्टं धनं दैवेऽनुकूले किं न सिध्यति ? ॥ ४१ ॥ ध्यायन्निति प्रचलितः, स्वपुरं प्रति दुर्मतिः । एकस्य मन्त्रसिद्धस्य, मिलितश्चान्तराऽध्वनि ॥ ४२ ॥ गोष्ठीं गरिष्ठां तन्वानः, समं तेन स मन्दधीः । प्रापदुद्यानमेकस्य, सन्निवेशस्य सन्निधौ ॥ ४३ ॥ भोजनावसरे तत्र, मन्त्रसिद्धोऽभ्यधत्त तम् । भो भद्र ! भोज्यं तेऽभीष्टं, वद सम्पादयामि किम् ? ॥ ४४ ॥ प्रभूतान् सुरभीभूतान्, कर्पूरैः सिंहकेशरान् । देहि मे देहिकल्पद्रो !, मोदकान् मोदकारकान् ॥ ४५ ॥ तेनेति शिष्टे हृष्टेन, ध्यानमापूर्य सोऽपि तान् । तादृशानानिनाय द्राक्, पूर्वं सज्जीकृतानिव ॥ ४६ ॥ अविहस्तौ ततस्तौ तान्, बुभुजाते यथारुचि । यथाऽऽसातिथये दत्त्वा, भुक्तौ रीतिरियं सताम् ॥ ४७ ॥ एवं विकाले खण्डाद्यैर्घृतपूरान् प्रपूरितान् । द्वितीयेऽह्नि प्रगे सर्पिःशर्करामिश्रपायसम् ॥ ४८ ॥ आस्वाद्यानि च सायाह्ने, हृद्यखाद्यान्यनेकशः । तृतीयेऽह्नि पुनः

यिवान् । प्रेक्षाञ्चक्रे परिव्राजा, विभ्राजा दम्भविभ्रमैः ॥ १८ ॥ पृष्ट्वा ज्ञात्वा च तद्वृत्तं, तेनेत्यूचे स साञ्जसम् ।
व्यपनेष्यामि ते दुःखं, मा विषीद वसीद च ॥ १९ ॥ स्नुहीमहीरुहं रक्तक्षीरं नीरन्ध्रमादरात् । काप्यन्वेषय
येनाशु, दारिद्र्यं द्रावयामि ते ॥ २० ॥ महोत्साहेन तेनापि, काप्यन्वेषयता सता । सोऽप्यापि कल्पद्रुरिवोपक्र-
मात्किं न वाप्यते ? ॥ २१ ॥ व्यज्ञापि च परिव्राजे, तेन सोऽप्यथ हृष्टहृत् । सिद्धिकृत्सिद्धियोगाहि, तेनामा
तत्पदं ययौ ॥ २२ ॥ ततोऽभिमन्त्र्य तं पूर्वसङ्गृहीतौषधीयुतम् । चारुदारुगणैर्विश्वक्, परिव्राट् पर्यवेष्टत
॥ २३ ॥ कपटैकपटुस्तत्र, ज्वालयामास चानलम् । शिखाबन्धमिषात्तं चाजुहाव निजसन्निधौ ॥ २४ ॥
उपेत्य नीचैर्भूतं तं, ततः स सबलश्छली । केशपाशे दृढं मूर्ध्नि, धृतवानिव तस्करम् ॥ २५ ॥ ऊर्ध्वमुत्क्षिप्य च क्षिप्रं,
पापात्मा तं हुताशने । आहुतीकुरुते यावच्छागं यज्वेव निर्घृणः ॥ २६ ॥ मायं नूनमनार्येणेत्युद्यद्वीर्यः प्रसह्य सः ।
दुष्कर्मणः स्वमात्मैव, तावत्तस्मादमूमुचत् ॥ २७ ॥ युग्मम् । ततस्तौ क्रोधविधुरौ, योधाविव सुदुर्धरौ । प्रक्षेप्तुमन्तर्दहनं,
डुढौकाते परस्परम् ॥ २८ ॥ दुःसहं कलहं वीक्ष्य, तं तयोः प्रेतयोरिव । पूच्चक्रुरुच्चकैर्गोपा, भयोद्भ्रान्ततया रयात्
॥ २९ ॥ शुश्राव दुःश्रवं तच्च, तत्रासन्नमहापुरात् । मृगयामागतः क्ष्माभृत्कुमारः स्फारविक्रमः ॥ ३० ॥ तेजः-
सारः स सान्वर्थाभिधानः सधनुःशरः । द्रुतं तत्राययौ बुध्वा, क्षमन्ते क्षत्रियाः कथम् ? ॥ ३१ ॥ परिव्राजक-
पाशस्य, दुराशस्य दुरात्मताम् । श्रुत्वा गुणधरेणोक्तां, तस्मै चुक्रोध सोऽधिकम् ॥ ३२ ॥ वह्नाविन्धनसाच्चक्रे,
झटित्युत्पाट्य तं च सः । दुष्टशिक्षा शिष्टरक्षा, रीतिर्नीतिविदां खलु ॥ ३३ ॥ स चाग्निदग्धः समभूद्दिव्यः सौव-

तया वत्स !, छाययेवातपो द्रुतम् । विद्रोष्यत्यपमुद्रोऽपि, दारिद्र्योपद्रवस्तव ॥ ३ ॥ इति योगिगिरं श्रुत्वा, तात्त्विकीं सात्त्विकाग्रणीः । गत्वा स उक्तविधिना, तां जग्राह महौषधीम् ॥ ४ ॥ दृष्टश्च धृष्टहृत् स्पष्टदृष्टदुष्टविचेष्टितान् । भूतान् प्रभूतान् प्रेतानप्युपेतान् परितोऽधिकम् ॥ ५ ॥ महाट्टहासैकरसान्, राक्षसानप्यसङ्ख्यशः । शिवादिदुःश्रवरवान्, भैरवानपि भूरिशः ॥ ६ ॥ परीषहानिव मुनिः, स सर्वानवहेलयन् । क्रमाद्ध्यावर्त्तमानो निःसमानोत्साहसाहसः ॥ ७ ॥ द्विधाऽपि विषमां द्रव्यभावाभ्यां भूधरावनीम् । दुर्लङ्घां लङ्घयामास, भवस्थितिमिव व्रती ॥ ८ ॥ चतुर्भिः कलापकम् । जितकाशी ततोऽयासीद्द्रव्यतो भावतोऽपि सः । समामुर्वीं सुखेनैव, यावन्नगरमार्गवत् ॥ ९ ॥ तावद्दुर्दैवपर्यस्त, इव स्रस्तोऽद्रिशृङ्गतः । प्रस्तरस्तरसाऽकस्मादेकस्तत्पृष्ठतोऽपतत् ॥ १० ॥ तदुद्भवत्खटखटाकाराद्दूरात्प्रसारिणा । संभ्रान्तचेताः सहसा, स पश्चात्पर्यलोकयत् ॥ ११ ॥ तत्क्षणात्तस्य रुष्टेव, मुष्टेर्नष्टा महौषधी । स्थिरीस्यात्तादृशं वस्तु, तादृशस्य करे कथम् ? ॥ १२ ॥ विषण्णः सन् स निःशेषं, तद्गत्वा योगिनो जगौ । योगिनाऽप्येष जगदे, जगदेकहितात्मना ॥ १३ ॥ अतुच्छं वत्स ! ते सत्त्वमुपक्रमश्च निस्समः । न परं प्राकृतं पुण्यं, तद्विना ते तु निष्फलम् ॥ १४ ॥ यतः—"विकटा अट पर्वताटवीस्तर वार्द्धीन् भज भूपतीनपि । अपि साधय मन्त्रदेवता, नतु सौख्यं सुकृतैर्विनाऽस्ति ते ॥ १५ ॥" धनार्जने कदाशां तद्व्यपास्योपास्यतां त्वया । सन्तोष एव येन स्यात्, त्रैलोक्येऽप्यतिशायिता ॥ १६ ॥ तेनेत्युक्तोऽपि लोभान्धः, स बभ्राम भुवं भृशम् । वित्तार्थिनां हि चित्तानि, न निर्विन्दन्ति कर्हिचित् ॥ १७ ॥ स भ्राम्यन् मलयग्राममभिरामममुपे-

भस्मसात्तस्मात्तपः क्रोधोदयादिव ॥ ८७ ॥ निर्भाग्य एष निर्द्रव्य, इतीव भृतकैरपि । इतस्ततः स वित्रस्तैर्वि-श्वस्तैरपि तत्यजे ॥८८॥ वनेचर इवारण्ये, शून्ये शून्येन चेतसा । सम्भ्रमी बम्भ्रमीति स्म, सोऽपि निर्वेदमेदुरः ॥ ८९ ॥ प्रतप्तसप्तरात्रेण, क्षुत्तृडाद्यैः कथञ्चन । विवेश सन्निवेशं स, बम्भ्रम्यन्मान्त्रिकावतीम् ॥ ९० ॥ तत्र च प्रैक्ष्यसौ दैवयोगादेकेन योगिना । प्रकृत्या सानुकम्पेन, सकम्पेन तदार्त्तितः ॥ ९१ ॥ पृष्ट्वा विज्ञातवृत्तेन, ततस्तेन निजालये । नीत्वाऽशनाद्यैः पित्रेव, स्वपुत्रः पोष्यते स्म सः ॥ ९२ ॥ विविधौषधिवैदग्धीलब्धिनाऽथ कृपाब्धिना । भूभृन्नितम्बे नीत्वा तं, प्रादर्श्येका महौषधीः ॥ ९३ ॥ एतां भो ! प्रत्यभिज्ञातां, सम्यक्कुर्या अहार्यधीः । मा मुहः सौषधीवृन्देऽजायूथ इव मुग्धधीः ॥ ९४ ॥ रवौ कृष्णचतुर्दश्यामर्द्धरात्रेऽद्य भो ! यथा । छात्रेणेव गुरुर्विद्यां, ग्राहयेऽहमिमां त्वया ॥ ९५ ॥ योगिनेत्युदिते तेनाप्यभिज्ञानादिना तथा । सा निर्ममे निर्भ्रमेण, स्वं पदं द्रावथेयतुः ॥ ९६ ॥ अतिक्रान्तेऽथ यामिन्या, यामयुग्मे स योगिराट् । विधायास्य शिखाबन्धं, विघ्नबन्धनिबन्धनम् ॥९७॥ अभ्यधान्मम सान्निध्यादविध्यातमना व्रज । दीप्यमानां दीपशिखामिव दृष्टौषधीं च ताम् ॥९८॥ युग्मम् ॥ सा चोपरिष्टाद्धार्ष्ट्येन, धृत्वा दक्षिणमुष्टिना । वाममुष्ट्यात्तशस्त्र्याऽधश्छेद्या सद्योऽब्जनालवत् ॥ ९९ ॥ दृढौषधीमुष्टिबन्धस्त्यक्तान्यप्रतिबन्धधीः । समाश्रयन् सात्त्विकत्वं, पश्चात्काप्यविलोकयन् ॥ २०० ॥ भयङ्करानगणयन्, रौद्ररूपस्वरादिकान् । तामत्रानय योगीव, मानसे ध्यानसम्पदम् ॥ १ ॥ युग्मम् ॥ विध्यातया तया सिद्धरसेनेव वशो भृशम् । भाविनी स्वर्णसिद्धिस्ते, भाग्यसिद्धिरिवाङ्गिनी ॥ २ ॥ जातया च

भूषण ! विदूषण ! सौख्यहेतोः । सन्मानतोऽन्यजनताजनितान्न जातु, मातुः स्मरस्यपि चिरात्किमु तत्त्ववार्ह-
म् ? ॥७२॥ मात्रा मात्राधिकप्रेम्णेत्यन्योक्त्या लिलिखेऽनया । सोऽम्बुनोर्वीव भिन्नोऽन्तर्गन्तुमत्यौत्सुकायत ॥७३॥
कथञ्चनाप्यनुज्ञाप्य, श्वशुरांश्चलितस्ततः । परीवारपरीताभिः, कान्ताभिः शोभितोऽष्टभिः ॥ ७४ ॥ प्रतिग्रामं
प्रतिपुरं, चमत्कारं श्रिया सृजन् । स्वल्पैरेव दिनैः प्राप, स राजेव निजं पुरम् ॥ ७५ ॥ युग्मम् ॥ प्रवेशितस्य
पित्राद्यैः, पुरान्तः प्रवरोत्सवैः । आभूपगोपं सर्वेभ्यः, श्लाघाद्वैतमवासवान् ॥ ७६ ॥ परीक्षितस्वभाग्यर्द्धिरित्थं
स्वेष्टार्थलाभतः । शिखीवाब्दस्य मित्रस्यागमं सोच्चैरुदैक्षत ॥ ७७ ॥ देशान्तरे व्यवहरन्नथो गुणधरः क्रमात् ।
पितुर्नीव्या पितुर्भाग्यैरार्जिजत् प्रोर्जिताः श्रियः ॥ ७८ ॥ अहो भाग्यं मम महत्, सहसैव श्रियोऽर्जनात् ।
इत्यन्तश्च जगर्वोच्चैस्तुच्छोऽल्पेनापि दृप्यति ॥७९॥ यतः-"एगेणवि वीहिणा उंदरस्स जह दोवि वावडा हत्था ।
तह अमुणियपरमत्था थेवेणवि उत्तणा हुंति ॥ ८० ॥" तुष्टः स लाभतस्तस्मादसन्तुष्टश्च लोभतः । कन्यामि-
वार्कोऽन्यदेशं, वसुवृद्ध्यै ततोऽप्यगात् ॥ ८१ ॥ तत्रापि लेभे लाभं स, भूयांसं व्यवसायवित् । वाणिज्यनैपुणं
प्रायः, साधनं हि धनार्जने ॥८२॥ अखर्वगर्वसोत्कर्षहर्षः स्वकपुरं प्रति । ततः प्रतिनिववृते, भूरिभाण्डभरेण सः
॥८३॥ सोऽनर्थसार्थपदवीं, प्रापश्चैकां महाटवीम् । दावानलश्च प्रलयानलवत् प्राज्वलत्तराम् ॥८४॥ तं मेलितुमिवो-
त्तालकालवद्वाशुपैच्च सः । सङ्गतं सङ्गतं यद्वा, तस्य दावानलस्य च ॥ ८५ ॥ ततस्तद्भयतस्तूर्णं, हाहाकारपरा-
यणैः । कथञ्चिद्भृतकैः सार्द्धं, जीवनाशं ननाश सः ॥ ८६ ॥ शाकटोक्षाद्यशेषं द्राक्, तस्य पश्यत एव तु । बभूव

र्यतेऽत्र सः ॥ ५७ ॥ वानेयमिति सत्पुष्पं, शिरस्यारोप्यते न किम्? । मृगनाभिर्मृगनाभिभवाऽपीष्यते किं न
वा? ॥ ५८ ॥ भाग्यवान् देवतादिष्टकन्याऽष्टकवरः स हि । लीलया लक्षदायी च, कल्पद्रुरिव जङ्गमः ॥ ५९ ॥
तन्निशम्य चमत्कारभाजि सामाजिकव्रजे । गुणाकरस्य जनकः, स्थितस्तत्रेत्यचिन्तयत् ॥ ६० ॥ ध्रुवं मे तनयः
सोऽयं, संभवेद्यद्भवेदतः । प्रोल्लासः कोऽपि हृदि मे, धाराहतकदम्बवत् ॥६१॥ प्रोक्तं ज्योतिषिकेणापि, यद्वर्षान्ते
सुतस्य ते । स्थानं विज्ञास्यते तेनास्मिन्नर्थे संशयोऽस्तु कः? ॥६२॥ एतकं तदपि व्यक्तया, पृच्छामीति विमृश्य
सः । बन्दिवृन्दारकं पृष्ट्वा, स्वं पुत्रं निश्चिकाय तम् ॥ ६३ ॥ उत्कण्ठितस्ततः पुत्राह्वानाय प्रजिघाय सः ।
अन्योक्तिगर्भसन्दर्भप्रेङ्खल्लेखकरं नरम् ॥ ६४ ॥ द्रुतं गत्वाऽर्पितं तेन, लेखमेष गुणाकरः । प्रेम्णा समं समु-
न्मुद्य, वाचयामास तद्यथा ॥ ६५ ॥ स्वस्तिजयस्थलनगरात् पद्मः प्रणयाद्गुणाकरं स्वसुतम् । आदिशति यथा
श्रीजिनगुरुप्रसादेन नः कुशलम् ॥ ६६ ॥ स्वककुशलकिंवदन्ती ज्ञाप्या नः प्रीतये त्वयाऽपि रयात् । अथ
कार्यमार्य! भवतोऽद्भुता श्रुता काऽपि परमर्द्धिः ॥ ६७ ॥ सुचिरं त्वद्विरहमहादुस्सहदुर्भिक्षदुःखितानां नः ।
तेने तेनेदानीं नन्वमृतप्रातराशसुखम् ॥ ६८ ॥ किन्तु भवदङ्गसङ्गमसुखाय निखिलेष्टभोजनाय वयम् । उच्चै-
स्त्वरामहे तत्त्वरस्व तत्सिद्ध्युपायविधौ ॥ ६९ ॥ किञ्च–पितरावुपेक्ष्य दक्षः श्वशुरौकसि तस्थुषः स्थिरतया ते ।
सत्पुरुषपथः कथमिव भावीति विचिन्त्यमेतदपि ॥ ७० ॥ इति वाच्यवाचनातः प्रेमार्द्रमना मनाग् भवेद् याव-
त् । तावत्तत्तल्लेखान्तः पुरतः सोऽन्योक्तिमद्राक्षीत् ॥७१॥ सा चेयम्–गाङ्गेय ! गेयगरिमादिगुणाष्टकाढ्य ! विश्वैक-

रूप इवावभौ॥४२॥ मेरुः कुलाचलश्रीभिर्दिग्भिर्भानुरिवाष्टभिः। अग्रमहिषीभिरिन्द्रोऽष्टाभिः सिद्धश्च सिद्धिभिः ॥ ४३ ॥ अष्टाभिर्मूर्त्तिभिः शम्भुरिव कान्ताभिरष्टभिः। अवियुक्तोऽनिशं नानाक्रीडारसनिमग्नहृत् ॥ ४४ ॥ भानूदितास्तमप्येषोऽविदन् वैषयिकं सुखम्। संसारसुखसर्वस्वं, कियत् समयमन्वभूत् ॥ ४५ ॥ त्रिभिर्विशेषकम् ॥ अथ तस्यां निशीथिन्यां, सूनोः सद्मन्यनागमात्। गुणाकरस्य पितरौ, जज्ञाते भृशमातुरौ ॥ ४६ ॥ रात्रौ प्रातश्च सर्वत्र, शोधनेऽप्यनवाप्य तम्। पाणिच्युतचिन्तामणिमिवात्मानमशोचताम् ॥ ४७ ॥ अन्यदा च तदार्त्तौ तौ, क्रान्तौ ज्योतिर्विदांवरम्। पप्रच्छतुः स्वपुत्रस्य, श्रेयः स्थित्यागमादिकम् ॥ ४८ ॥ पृच्छालग्नं च लग्नांशं, सम्यग् निर्णीय सोऽप्यवक्। मुधैव मा स्म खिद्येथां, श्रेयस्वी वां यतः सुतः ॥ ४९ ॥ लीलार्जितमहर्द्धिश्च, दानभोगैः प्रसिद्धिभाक्। महासौख्याब्धिलीनश्च, परं दूरेऽस्ति स क्वचित् ॥ ५० ॥ किञ्च प्राच्यामितः सोऽस्ति, भास्वानिव नवोदयी। वर्षेण स्थानविज्ञानं, द्विवर्षाचास्य सङ्गमः ॥ ५१ ॥ तद्गिरा मुमुदाते तौ, प्राप्तपुत्राविवोच्चकैः। इष्टस्य हि शुभा शुद्धिरपि तत्सङ्गमायते ॥ ५२ ॥ ततः प्रतिदिनं पित्रादीनां तत्स्थानशोधिनाम्। कथञ्चिदतिचक्राम, वर्षं वर्षशतायितम् ॥ ५३ ॥ अथैकः श्रीपुरपुराद्बन्दी वन्दीकृतद्विषः। राज्ञः पर्षदि तत्रागान्नाकीन्द्रस्येव नारदः ॥५४॥ गुणान् गुणाकरस्योच्चैर्वर्णयामासिवांश्च सः। वणिजोऽपि नृपस्याग्रे, भट्टा हि स्वेष्टसंस्तुताः ॥ ५५ ॥ तदाऽन्ववादीद्वसुधाशक्रो वक्रोक्तिकां सृजन्। शृगालं श्लाघसे मेऽग्रे, किं सिंहस्येव वाणिजम्? ॥ ५६ ॥ भट्टोऽप्याचष्ट धृष्टात्मा, देवसेवकवत्सलः। सर्वाङ्गीणगुणैरेव, वणिग् व्याव-

३०गाथा-
यां अति-
थिसंविभा-
गे गुणाक-
रगुणधर
वृत्तं
१२७-१६५

अपि सन्त्येके, कौतुकं पुरुषोत्तमाः । मादृशा अपि केचिच्च, धनार्जनेऽप्यलं न ये ॥ २७ ॥ यदिवोच्चैश्च नीचैश्चालोकनेनाफलेन किम् ? । स्वस्वदैववशादेव, सर्वेषामपि सम्पदः ॥ २८ ॥ किन्तु तत्कौतुकं प्रेक्षे, कथञ्चिद्यदि तद्वरः । शक्या न भोक्तुं भूपाम्राश्चेद्द्रष्टुमपि तर्हि किम् ? ॥ २९ ॥ प्रांशुप्राप्यफलं प्रासुं, वामनस्येव मेऽथवा । तत्र गन्तुमशक्तस्य, वृथैवैष मनोरथः ॥ ३० ॥ यद्यदा चिन्तितं यद्वा, तत्तदा यस्य सिद्ध्यति । स भाग्यवान् ध्रुवमिति, प्रवदन्ति विदांवराः ॥ ३१ ॥ तदद्य भाग्यवत्तां स्वां, परीक्षिष्येऽत्र निश्चितम् । मद्भाग्यशातकुम्भस्य, ह्येषैव कषपट्टिका ॥ ३२ ॥ ध्यायन्नेवेत्यसौ तेषां, गोत्रदेवतया रयात् । उद्वाहमण्डपं निन्ये, स्पृहैव कृतिनां फलम् ॥ ३३ ॥ अयं वरः स्फुरत्कान्तिर्द्विधाऽपि हि गुणाकरः । इत्थं बन्दिवदुद्घुष्य, पुष्पवृष्टिमसृष्ट सा ॥ ३४ ॥ तं तत्र सहसोद्वीक्ष्य, तदात्वोत्पन्नदेववत् । कन्यास्तज्जनकाद्याश्च, सर्वे मुमुदिरेतराम् ॥ ३५ ॥ तास्तेन कन्याजनकैर्जनकैरविणीन्दुना । विधाप्य भूषादिविधिं, पर्यणाय्यन्त कन्यकाः ॥ ३६ ॥ मनोऽभीष्टवरप्राप्त्या, तुष्टाः कन्याऽष्टकस्य ते । महान्तमुद्वाहमहं, महोत्साहतया व्यधुः ॥ ३७ ॥ हिरण्यं कोटीमेकैकामेकैकमथ गोकुलम् । द्वात्रिंशत्पात्रसम्बद्धमेकैकं दिव्यनाटकम् ॥ ३८ ॥ एवं सद्वेषनिःशेषभूषारैभाजनादिकम् । जात्याश्वशय्यादिसुखासनभद्रासनादि च ॥ ३९ ॥ सगृहोपस्करावासदासदास्यादि चोच्चकैः । तेऽष्टावपि ददुस्तस्मै, पाणिमोक्षणपर्वणि ॥ ४० ॥ त्रिभिर्विशेषकम् ॥ उदारमनसां दानलीला स्वाभाविकी किल । जामाता च स तादृक्षस्तद्दानं स्वल्पमेव तत् ॥ ४१ ॥ स विमानसमानेषु, रम्यहर्म्येष्वमर्त्यवत् । अष्टाभिर्विलसंस्ताभिरष्ट-

को न्वासां भविता वरः? ॥ ११ ॥ नैमित्तिकोऽपि निमित्तनिपुणः प्रबभाण तान् । मा स्म चिन्तातुरा भूवन्, भवन्तोऽल्पमपीह भोः! ॥ १२ ॥ युष्माकमेकगोत्राणां, गोत्रदेव्येव भक्तितः । तुष्टा शिष्टावतंसं द्राग्, वरं सङ्गमयिष्यति ॥ १३ ॥ श्रुत्वेति ते तपःपूजादिभिः स्वां गोत्रदेवताम् । तोषयामासुरानन्दं, पोषयामासुरात्मनः ॥ १४ ॥ तयाऽपि तुष्टया स्पष्टमादिष्टमिति तान् प्रति । विज्ञदैवज्ञनिर्दिष्टशिष्टलग्नदिनोपरि ॥ १५ ॥ समग्रामपि सामग्रीमव्यग्रीभूय भूयसा । कुरुतोपक्रमेणाशु, तद्विवाहोत्सवाय भोः! ॥ १६ ॥ युग्मम् ॥ प्राप्तायां लग्नवेलायां, हेलयाऽपि मया रयात् । वरः सुरसुरूपश्रीः, कुतोऽप्यानेष्यते द्रुतम् ॥१७॥ इति गोत्रसुरीवाक्यहृष्टाश्चक्रुस्तथैव ते । तुष्टदेवतयाऽऽदिष्टे, कः सन्देग्धि विदग्धधीः? ॥१८॥ इदानीं च मुदानीताः, पितृभिर्मणिमण्डपे । कन्या अष्टापि निर्माप्य, स्नानभूषादिकक्रियाः ॥ १९ ॥ सुवासिन्यः प्रीतिरसैरुल्लासिन्यः समन्ततः । गायन्त्यः सन्ति तत्रोच्चैरुत्कल्लोलैरुलूलुभिः ॥ २० ॥ प्रत्यासन्नाऽभवल्लग्नवेलाऽपि न पुनर्वरः । प्रादुरासीत् पुरस्तात्तु, न जाने किं भविष्यति? ॥ २१ ॥ विना वरमहो! चित्रमुद्वाहः कोऽप्ययं नवः । इत्युच्चैर्विस्मयन्ते स्म, नरास्तत्र सुरा अपि ॥२२॥ तदेतत्कौतुकालोककृते त्वरयत प्रभो! । प्रभुमाह्वातुमेवास्मि, समायातः समुत्सुकः ॥ २३ ॥ द्रष्टव्यमथ भोक्तव्यमपूर्वं प्राप्य किञ्चन । स्मरेत् प्रभुमभीष्टं वा, न यः स सुजनः कथम्? ॥ २४ ॥ निशम्येत्युत्पपाताशु, यक्षः खे स्वभुजिष्ययुक् । तत्पुरं प्रति पन्थानं, कुमारस्येव दर्शयन् ॥ २५ ॥ तच्च यक्षोक्तमुत्कर्णमाकर्ण्योच्चैर्गुणाकरः । ध्यातवानित्यहो? धन्यः, कस्तासां भविता वरः? ॥ २६ ॥ तादृशा

स्वगृहं यदि । स्वदैवयोगात्कथमप्यार्जिष्यामि कियद्धनम् ॥ ९६ ॥ विचिन्त्यैवं स्वदैवं स, परीक्षितुमनीर्ष्यहृत् ।
यतीव शून्ये तत्रैव, स्थितवांस्तां निशीथिनीम् ॥ ९७ ॥ इतश्च कश्चित्तत्रास्ति, यक्षराट् निकटे वटे । यक्षो
भुजिष्योऽमुष्यैकः, कुतोऽप्यागात्तदोत्सुकः ॥९८॥ कोऽयं दिवो विद्युदिवावातारीदिति विस्मिते । स्थिते गुणा-
करे गुप्तं, स स्वं स्वामिनमित्यवक् ॥ ९९ ॥ इतोऽस्ति योजनशतात्परतः श्रीपुरं पुरम् । द्विधाऽपि क्वापि यत्रा-
भूच्छाया कोटिध्वजव्रजैः ॥ १०० ॥ अष्टौ मुख्या महेभ्यानां, महेभ्याः सन्ति तत्र च । विश्वाधारतयाऽऽख्याता,
दिग्गजेन्द्रा इवापरे ॥ १ ॥ धनाकरो धनपतिर्धनधर्मो धनेश्वरः । धनसारो धनगुरुर्धनाढ्यो धनसागरः ॥ २ ॥
इति तथ्याभिधानानां, प्रधानानां नरेशितुः । प्राग्जातामात्रपुत्राणां, पुत्र्येकैका क्रमादभूत् ॥ ३ ॥ गुणा-
वली गुणवती, सुगुणा गुणमालिनी । गुणमाला गुणलता, गुणश्रीर्गुणसुन्दरी ॥ ४ ॥ अष्टदिक्स्त्रैणसौभाग्य-
सारैरिव विनिर्मिताः । अष्टावपीष्टाः पित्रोस्ताः, प्राणेभ्योऽप्यधिकं पुनः ॥ ५ ॥ अष्टदिग्वर्त्तिनां यूनां, संमो-
हनलता इव । चतुःषष्टिकलाढ्यास्ताः, क्रमाद्यौवनमासदन् ॥ ६ ॥ तासां समानवयसां, समानमनसां सदा ।
समानगुणशीलानां, समानरूपसम्पदाम् ॥ ७ ॥ बिभ्रतीनां परप्रीतेरैकात्म्यमिव शैशवात् । इति प्रतिज्ञा
तुल्यैवाभूद्वियोगभिया मिथः ॥ ८ ॥ युग्मम् ॥ शीतांशुरिव ताराणामेक एव वरोऽस्तु नः । विश्वविश्वप्रश-
स्यश्च, सोऽपि कोऽपि हि नापरः ॥ ९ ॥ गृहवासः कारावासः, स्वेष्टयोगं विना स किम् ? । उच्छिष्टान्नं
च रूक्षं च, कः सुधीर्भोक्तुमिच्छति ? ॥ १० ॥ ततस्तज्जनकास्ताद्दग्वरप्राप्त्यै कृतादराः । नैमित्तिकमित्यपृच्छन्,

भूयाशु, मित्रस्याज्ञातमेव सः। भृत्वा पण्यैरनोराजिं, मनोऽपि च मनोरथैः ॥ ८१ ॥ चचाल प्रीतिवाचालश्चलयन्नचलामपि। श्रियोऽर्जयितुमत्युत्कः, काऽपीर्ष्याऽहो? सुहृद्यपि ॥ ८२ ॥ युग्मम् ॥ सायं श्रुत्वा स्वमित्रस्य, चलनं मेलनं सकृत्। इच्छंस्तमन्वगाद्भूत्सं, गौरिव द्राग् गुणाकरः ॥ ८३ ॥ न विमृश्यमतिप्रेम्णीत्येकाक्येव पुराद्बहिः। स क्रामन्नतिचक्राम, वर्त्म यावज्जवात्कियत् ॥८४॥ तावत्तमोऽभूद्दुर्मित्रदौर्मनस्यमिव स्फुटम्। तदाऽभ्यायान्तमध्वन्यमेकं सोऽपृच्छदुत्सुकः ॥ ८५ ॥ युग्मम् ॥ कियद्दूरं गतः सार्थः, पान्थ! पान्थोऽप्यथाऽब्रवीत्। इयत्कालेनातिदूरं, यातः सार्थः कथं मिलेत्? ॥ ८६ ॥ तत्पश्चादेव वलनं, साम्प्रतं साम्प्रतं तव। असखा न प्रदोषे हि, प्रदोषे संमुखे व्रजेत् ॥ ८७ ॥ इत्युक्त्वा स पुरं प्राप, कुमारोऽपि व्यचिन्तयत्। आः किं मे दुर्हृद इव, सुहृदेदं न्यवेदि न? ॥८८॥ किं मया काप्ययं दूनः, किं वा व्युद्ग्राहितः परैः?। किं वाऽन्तः कृत्रिमप्रेमा, यद्वा मामप्यसासहिः ॥ ८९ ॥ किमनल्पैर्विकल्पैर्वा, ध्रुवं देशान्तरासितः। असौ कुशलकोटीरः, कोटीरप्यर्जिता श्रियः ॥९०॥ कथङ्कारं पुनरहं, करिष्ये द्रविणार्जनम्। विना नीवीं न वाणिज्यं, नीवी नैव च काऽपि मे ॥ ९१ ॥ द्रव्यार्जने पितुर्नीव्या, भवेद्भुक्तिः पितृश्रियः। न युक्तश्च तथा मे तु, तत्त्यागैकाग्रचेतसः ॥ ९२ ॥ स्वीकारः परनीव्यास्तु, पराभवपदं परम्। वित्ताय यः परचित्तावर्जी धिक् तं नराधमम् ॥९३॥ तावदेव पुमान् श्लाघ्यस्तावदेव गुणाश्रयः। नैव यावत्परमुखं, प्रेक्षते स्वात्मनः कृते ॥ ९४ ॥ अनर्जित्वा श्रियः स्वेष्टा, अकृत्वा पात्रसाच्च ताः। अहृत्वा चान्यदैन्यानि, कथं च स्यां गुणाकरः? ॥ ९५ ॥ इतस्तदैव तद् यास्याम्यवश्यं

साध मुमुदेतमाम् ॥ ६५ ॥ अश्रद्धानत्वसम्बद्धतया गुणधरस्य सा । प्रत्यभातिपत्ततिक्तास्यस्येव तिक्ततया सिता ॥ ६६ ॥ एकमेव मुनेर्वाक्यं, तयोः पात्रकुपात्रयोः । पीयूषविषतां प्राप, परिणत्याऽब्दवारिवत् ॥ ६७ ॥ उक्तं च–"सा साई तंपि जलं पत्तविसेसेण अंतरं गरुअं । अहिमुहि पडिअं गरलं सिप्पउडे मुत्तियं होइ॥६८॥" आद्यस्तदादि दानादौ, प्रावर्त्तत विशेषतः । सतां हि शिष्टैरादिष्टं, वटबीजायते हृदि ॥ ६९ ॥ मतिः प्रसरति स्मास्य, दानादिषु यथा यथा । पुरान्तरे कीर्त्तिरपि, स्पर्द्धयेव तथा तथा ॥ ७० ॥ परस्तु परवन्मित्रेऽप्युद्गच्छत्परमत्सरः । चिन्तया चिन्तयामास, तुच्छया तुच्छधीरिति ॥७१॥ वित्तक्रीतीव जनता, समग्राऽपि गृणात्यहो । गुणान् गुणाकरस्यैव, भाग्यसौभाग्यमुख्यकान् ॥ ७२ ॥ न पुनः कश्चन भ्रान्त्याऽप्यधिकस्यापि मे गुणैः । लोकः प्रवाहपतितः, प्रायस्तत्त्वबहिर्मुखः॥७३॥सहचारेण चैतस्य, लाभः को मम प्रत्युत ? । महत्त्वहानिर्हीनं हि, प्राहुः प्रायः परानुगम् ॥ ७४ ॥ परानुगामी परवक्त्रदर्शी, परान्नभोजी परचित्तरञ्जी । परप्रवादी परवित्तजीवी, सर्वेऽप्यमी स्युर्गुणिनोऽपि निन्द्याः ॥ ७५ ॥ तदेनमत्र मुक्त्वाऽऽशु, गत्वा देशान्तरे पराः । श्रियोऽर्जयित्वा स्वां भाग्यवत्तां कीर्त्तिं च दर्शये ॥ ७६ ॥ एतस्मिंश्च सहायाते, ह्येतदीयक्रयाणकैः । लाभो भूयान्न भावी मे, समर्घं बहु वस्तु हि ॥ ७७ ॥ मां विनैष च न क्वापि, गन्ता प्रकृतिकातरः । यष्टेरिवान्धो ह्याधारान्ममैव विचरत्ययम् ॥ ७८ ॥ विना देशान्तराप्तिं च, नाप्येषोऽर्जिष्यति श्रियः । तन्महत्त्वं जने भावि, ममैवोच्चैर्धनार्जनात् ॥ ७९ ॥ धनानामर्जनेनैव, प्रतिष्ठां प्राप्नुयात् पुमान् । कलाधनार्जनादेव, कलावानपि पूज्यते ॥ ८० ॥ ध्यात्वेति सज्जी-

न्द्रियजं सुखं च। कार्यार्थिना हि खलु कारणमेषणीयं, धर्मो विधेय इति तत्त्वविदो वदन्ति ॥ ५० ॥ चतुर्द्धा स च दानादिस्तत्र दानं चतुर्विधम् । अभयज्ञानधर्मोपष्टम्भेतरविभेदतः ॥ ५१ ॥ मृत्योर्भीतस्य यत् त्राणं, प्राणिनः प्रीणनं परम्। स्मृतं तदभयं दानं, प्रधानं सर्वदानतः ॥ ५२ ॥ सुशास्त्रपाठनं स्थानपुस्तकाद्यर्पणादिना। साहाय्यदानमपि च, ज्ञानदानमुदाहृतम् ॥ ५३ ॥ साधोः श्राद्धस्य वा यत्तु, धर्मनिर्वाहहेतुकम् । धर्मोपष्टम्भदानं तदन्नदानाद्यनेकधा ॥ ५४ ॥ पात्रार्हत्वादिदं पात्रदानमप्युच्यते बुधैः। त्रैधं दानमिदं मोक्षफलं भोगानुषङ्गिकम् ॥ ५५ ॥ तुर्यं दानं दयाकीर्त्त्यौचित्यादिभिरनेकधा। तत्रापि च दया दानं, धर्माङ्गमिति गीयते ॥ ५६ ॥ कीर्त्त्यौचित्यत्रपाप्रेमप्रीतिदानादिकानि तु । शेषाणि कीर्त्त्यौचित्यादिप्राप्तिमात्रफलानि हि ॥ ५७ ॥ यद्येतेष्वपि दानेषु, धर्मोपष्टम्भधीः क्वचित् । संभवेत्कर्हिचित्काचिद्भवेद्धर्माङ्गताऽपि तत् ॥ ५८ ॥ शीलमब्रह्मणस्त्यागः, सर्वतो देशतोऽपि वा। देशात्स्वदारसन्तोषोऽन्यस्त्रीत्यागश्च तद्विधा ॥५९॥ बाह्यं षोढाऽऽन्तरं षोढेत्युक्तं द्वादशधा तपः। दुस्साधसाधकं तीव्रकर्मणामपि घातकम् ॥ ६० ॥ अनित्याशरणत्वादिभेदैर्द्वादशभेदभृत्। जीवितं सर्वधर्माणां, भावना भवनाशकृत् ॥ ६१ ॥ आराधयंश्चतुर्धाऽमुं, धर्मं सम्यक्त्वपूर्वकम्। प्राप्नोत्यामोक्षसौख्यर्द्धीः, सुधीस्तत्र यतेत तत् ॥ ६२ ॥ विशिष्य पात्रदानादौ, यतनीयं धनार्थिना । नादत्तं लभ्यते क्वापि, नानुसमपि लूयते ॥ ६३ ॥ धनलाभेऽपि सन्तोषपोषादेव सुखं नृणाम्। न तं विना तु तच्चक्रिशक्रयोरपि कर्हिचित् ॥ ६४ ॥ इत्थं देशनया बुद्धः, शुद्धबुद्धिर्गुणाकरः । स्वर्मणीमिव सम्यक्त्वाद्या-

२०गाथायां अतिथिसंविभागे गुणाकरगुणधरवृत्तं ३६-६४

॥१७७॥

जातु त्याज्यः सुसन्निधिः ॥ ३६ ॥ यतः—"गुणिनः समीपवर्त्ती पूज्यो लोके हि गुणविहीनोऽपि । विमले-
क्षणप्रसङ्गादञ्जनमाप्नोति काणाक्षि ॥ ३७ ॥" श्रुत्वा सामुद्रिकस्येत्थं, गिरं गुणधरस्तदा । अन्तर्दूनोऽपि मौनेन,
स्थितवान् लोकलज्जया ॥ ३८ ॥ अचिन्तयच्च चित्तान्तरेतस्याशु वचोऽन्यथा । करिष्ये दर्शयिष्ये च, सर्वेषां
स्वशुभोदयम् ॥ ३९ ॥ एवं गर्वाङ्कुरेणाथ, सार्द्धं गुणधरेण सः । गुणाकरः समुत्तस्थौ, तन्मठादशठाशयः
॥ ४० ॥ क्रीडन्नाक्रीडमासद्य, दृष्ट्वा धर्ममिवाङ्गिनम् । धर्मदेवगुरुं हृष्टः, पृष्टवान्नतिपूर्वकम् ॥ ४१ ॥ प्रभो!
प्रसीदादिश मे, सद्यः स्वेष्टश्रियोऽर्जना । केनोपायेन जायेतेत्यथो यावद्गुरुर्वदेत् ॥ ४२ ॥ तावत्तुच्छतयौ-
त्सुक्यधारी गुणधरोऽभ्यधात् । हुं मया व्यवसायादिरुपायः प्राक्तवोदितः ॥ ४३ ॥ गुणाकरोऽगृणान्मित्र!,
मयाऽपि ज्ञायते ह्यदः । प्रश्नोऽयं तु विशेषार्थं, विशेषज्ञा हि साधवः ॥ ४४ ॥ वाचं वाचंयमेन्द्रोऽपि, प्रोचे
भोः! स्थिरचेतसौ । शृणुतं वच्मि वां तत्त्वं, तत्त्ववाचो हि साधवः ॥ ४५ ॥ तच्चेदम्—धर्मो धनादेर्व्यभि-
चारवन्ध्यो, बीजं फलस्येव हि मुख्यहेतुः । उपक्रमाद्याः सहकारिणोऽम्भःसेकादिवत्ते व्यभिचारिणोऽपि
॥ ४६ ॥ दृश्यन्ते सुधियोऽपि हि महोद्यमा अप्यमुद्रदारिद्र्याः । अधियोऽप्यलसा अपि च श्रीपतयः श्रीवि-
लासेन ॥ ४७ ॥ उक्तश्च—"समास्वतुल्यं विषमासु तुल्यं, सतीष्वसच्चाप्यसतीषु सच्च । फलं क्रियास्वित्यथ यन्नि-
मित्तं, तद्देहिनां सोऽस्ति तु कोऽपि धर्मः ॥ ४८ ॥ तद्धर्म एव यतो विधीयतां धीयतां च हृदि सैव । यः सर्वा
अपि दत्ते चित्तेप्सितसम्पदः सपदि ॥ ४९ ॥ यतः—"धर्माद्धनं धनत एव समस्तकामाः, कामेभ्य एव सकले-

यौवनाभिमुखैः ॥ २१ ॥ स्तन्यं मन्मनवचनं चापलमपहेतु हास्यमत्रपताम् । शिशुरेवार्हति पांशुक्रीडां भुक्तिं च पितृलक्ष्म्याः ॥ २२ ॥ तन्निशम्य निजं मित्रं, गृणाति स्म गुणाकरः । न नौ युक्तः पितुर्लक्ष्म्या भोगः स्वल्पोऽप्यतः परम् ॥ २३ ॥ यतः-“सुच्चिअ सुहडो सो चेव पण्डिओ सो विढत्तविण्णाणो । जो निअभुअदंडज्जिअलच्छीइ उवज्जए किर्त्ति” ॥ २४ ॥ तदर्जयावस्तां क्वापि, यावस्तदर्जनाय च । ननूपायेन केन द्राक्, सा स्वेष्टा कोटिशोऽर्ज्यते ? ॥ २५ ॥ आर्य! नो पूर्यते प्राज्यकमलासिमृते मम । कौतुकं दानभोगादेः, स्नानादेरिव दन्तिनः ॥ २६ ॥ मित्रोदितमिति श्रुत्वा, ज्ञमानी स्वमनीषया । जगौ गुणधरः श्रीणां, प्राप्तौ चिन्ता वयस्य! का? ॥ २७ ॥ लीलयाऽप्यर्जयिष्यावो, लक्ष्मीर्वाणिज्यनैपुणात् । वणिग्वराणां वाणिज्यवैदग्धी कामधुग् ध्रुवम् ॥ २८ ॥ प्रवीणता वणिज्यासु, त्यक्तक्रम उपक्रमः । न निर्वेदश्च कुत्रापि, त्रयः प्रतिभुवः श्रियः ॥ २९ ॥ तदुक्तम्-“लक्ष्मीर्वसति वाणिज्ये, किञ्चिदस्ति च कर्षणे । अस्ति नास्ति च सेवायां, भिक्षायां न कदाचन ॥ ३० ॥” निशम्येत्थं समीपस्थो, नृलक्षणविचक्षणः । कोऽप्याचचक्षेऽधिक्षेपपूर्वं तद्गर्वसंहृते ॥ ३१ ॥ रे वणिग्जात! मा कार्षीर्गर्वमेवमखर्वगीः । परोपजीवीव परप्रसत्त्यैवासि यत्सुखी ॥ ३२ ॥ लीला निर्लक्षणस्यापि, तवैषा मित्रसन्निधेः । शिलाऽपि तप्रकाधाराच्च किं तरति वारिणि? ॥३३॥ न प्रेक्षे लक्षणं तादृग्, निर्लक्षण! तवाङ्कके । स्वल्पामपि श्रियं येन, भोक्ष्यसे स्वभुजार्जिताम् ॥३४॥ अयं तु ते सुहृद्भाग्यैरक्षूणः पूर्णलक्षणः । लीलामात्रार्जिता भोक्ता, विभूतिर्भुघनाद्भुता ॥ ३५ ॥ तत्त्वयाऽस्य मृगाङ्कस्य, मृगेणेवानुगामिना । श्रेयस्कामेन न क्वापि,

सकलाः कलाः ॥ ६ ॥ तपः क्षमागुणेनेव, विवेकेनेव वैभवम् । लावण्यलक्ष्म्येव वपुरादरेणेव भोजनम् ॥ ७ ॥ श्रुतं मत्येव भक्त्येव, स्तवः शक्त्येव शान्तता । श्रद्धयेव च धर्मः सोऽलञ्चक्रे यौवनश्रिया ॥ ८ ॥ युग्मम् ॥ औदार्यमस्य यस्य रूपं निरूप्यातिस्मररूपं सुराङ्गनाः । नराङ्गनात्वमीहन्ते, तद्भवेऽन्यभवेऽपि च ॥ ९ ॥ शारदागुरुशुक्राणां, तुर्यचातुर्यधुर्यैरप्युच्यतां कियत् । यच्छिक्षित्वेव गीर्वाणतर्वाच्या ददतीप्सितम् ॥ १० ॥ बाल्यादपि ददद्द्रव्यं, सर्वेभ्योऽपि चातुर्यधुर्यधीः । स एव वर्ण्यतां प्राज्ञैरन्यो वा दर्श्यतां क्वचित् ॥ ११ ॥ इतश्च—तत्रैव देवपद्मस्य, मित्रं पात्रं यथेप्सितम् । सोऽभूल्लोकप्रियः प्रोच्चैः, क्व न दाताऽन्दवत् प्रियः ? ॥ १२ ॥ विश्वेऽप्यवासविजया, जया जायाऽस्य सद्गुणा । जज्ञे धनञ्जयः श्रेष्ठी, दोषेन्धनधनञ्जयः ॥ १३ ॥ स निर्भाग्योऽपि भाग्याढ्यंमन्यः पुण्यपराङ्मुखः । गुणश्रियाम् । तयोर्गुणधरः सूनुर्नाम्नैव न तु तत्त्वतः ॥ १४ ॥ गुणाकरस्य निस्तुल्या, बाल्यादप्यमुना समम् । गुरोः सुखी पित्रोः प्रसादेन, प्रपेदे यौवनं क्रमात् ॥ १५ ॥ गुणाकरस्य मित्रत्वान्मान्यः सोऽपि जनेऽजनि । बाहरङ्गारकेणेव, मैत्र्यभूत् भाग्भवोद्भवा ॥ १६ ॥ महत्त्वं महतां सङ्गादमहानप्यवाप्नुयात् । रजोऽपि पूज्यते नत्वान्महेशस्य, सत्तः शण्ड इवोच्चकैः ॥ १७ ॥ तौ तुल्यवयसौ तुल्यशृङ्गारौ तुल्यचारिणौ । गुणैस्त्वतुल्यौ दधतुस्तुलां तीर्थपृथिवीसङ्गतं न किम् ? ॥ १८ ॥ प्रासौ क्वचिन्मठेऽश्रौष्टां, सूक्तं सूक्ते हंसबकोटयोः ॥ १९ ॥ मुदाऽन्यदा भ्रमन्तौ तौ, पुरान्तः स्वैरचारतः । सत्पात्र एव योज्या न तु भोग्या बुधैरिमे ॥ २० ॥ जनकार्जिता विभूतिर्भगिनीति सुनीतिवेदिभिः सद्भिः ।

तह य वुज्झई अउलं। बंभचेराइजुत्तं पत्तंपि अ विज्जए तत्थ ॥ १ ॥ दाउं नवरि न सक्कइ दाणविघायस्स कम्मुणो उदए। दाणंतरायमेअं रन्नो भंडारिअसमाणं ॥ १ ॥" तत्त्ववृत्त्या तु भङ्ग एव, यतः-"दाणंतरायदोसा न देइ दिज्जंतयं च वारेइ। दिन्ने वा परितप्पइ किविणत्ता सो भवे भंगो ॥ १ ॥" अतिक्रमादिना चातिचारता भावनीया ॥ एते च ये प्रतिव्रतं पञ्च पञ्चातिचारा उक्तास्ते उपलक्षणमतिचारान्तराणां न त्वेतावन्त एवेत्यवधारणं, यदाहुः-"पंचपंचातिचारा उ, सुत्तंमी जे पदंसिआ। ते नावधारणट्ठाए, किं तु ते उवलक्खणं ॥ १ ॥" तेन स्मृत्यन्तर्द्धानादयोऽनुक्ता अप्यतिचारा यथासम्भवं सर्वव्रतेषु ज्ञेयाः, 'चउत्थे'त्यादि व्याख्या पूर्ववत्, एतद्व्रतफलं दिव्यभोगसमृद्धिसाम्राज्यतीर्थकृत्पदादि श्रीशालिभद्रमूलदेवाद्यान्त्यार्हदादीनामिव सर्वप्रसिद्धं, वैपरीत्ये तु दास्यदौर्गत्याद्यपीति त्रिंशगाथार्थः ॥ ३० ॥ अत्र व्रते मित्रद्वयसंविधानमेवम्—

जम्बूद्वीपाभिधे द्वीपे, प्राग्विदेहविभूषणम्। विजयः स्वर्विजयश्रीपुष्कला पुष्कलावती ॥ १ ॥ तस्यां शस्याश्रितं द्वेधा, विशालत्वान्वितं त्रिधा। पुमर्थभूश्चतुर्द्धाऽऽस्ते, जयस्थलपुरं पुरम् ॥ २ ॥ पद्मदेवस्तत्र पद्मासद्म पद्मसमस्थितिः। अभून्महेभ्यश्चित्रं तु, न पङ्कजडसङ्गभाक् ॥ ३ ॥ देवकी देवकीवास्य, देवकीर्त्तितसद्गुणा। अजनीर्ष्याज्वरजनीजनी सार्वजनीनहृत् ॥ ४ ॥ जज्ञेऽर्जितनयः स्फीतविनयस्तनयोऽनयोः। भाग्यैकधाम सान्वर्थनामधारी गुणाकरः ॥ ५ ॥ पित्रोर्मनोरथैः सार्द्धं, वर्द्धमानः क्रमेण सः। कलावानिव जग्राह, लीलया

सच्चित्ते निक्खिवणे पिहिणे ववएस मच्छरे चेव । कालाइक्कमदाणे चउत्थे सिक्खावए निंदे ॥ ३० ॥

'सच्चित्ते' इति देयस्यान्नपानादेरदानबुद्ध्याऽनाभोगसहसाकारादिना वा सचित्ते-मृदादौ निक्षेपणं प्रथमोऽतिचारः १, एवं सचित्तेन पिधानं-स्थगनं सचित्तपिधानं २, स्वकीयस्याप्यदानबुद्ध्यादिना परकीयत्वाभिधानं परकीयस्यापि वा दानबुद्ध्या स्वकीयत्वाभिधानं परव्यपदेशः, यद्वा विद्यमानमपि किञ्चिद्वस्तु याचितोऽमुकस्येदमस्ति तत्र गत्वा मार्गयत यूयमित्यभिधत्ते अवज्ञया वा परेण दापयति मृतस्य जीवतो वा परस्य पुण्यं भूयादिति परोद्देशेन ददातीति वा परव्यपदेशः ३, मत्सरः-कोपो यथा मार्गितः सन् कुप्यति, सदपि वा मार्गितं न ददाति, यद्वा परोन्नतिवैमनस्यं मत्सरः, यदुक्तं हैमेऽनेकार्थसङ्ग्रहे-"मत्सरः परसम्पत्त्यक्षमायां तद्वति क्रुधी"ति, ततः केनाचिन्निर्द्धनेनापि दानं दत्तं दृष्ट्वा किमेतस्मादप्यहं हीन इति मात्सर्यात् दानं चतुर्थम् ४, उचितभिक्षावेलामतिक्रम्य सम्प्रत्येते न लास्यन्तीति धिया साधूनां निमन्त्रणे कालातिक्रमस्तत्र दानं कालातिक्रमदानं, कोऽर्थश्च तेन दानेन ?, यतः-"काले दिण्णस्स पहेणयस्स अग्घो न तीरए काउं । तस्सेव अथक्कपणामिअस्स गिण्हंतया नत्थि ॥ १ ॥" 'पहेणयस्स'त्ति लम्भनकस्येत्यर्थः, 'अथक्कपणामिअस्स'त्ति अनवसरदत्तस्य, एषु च मया निमन्त्रणादिना दीयमानमस्ति नवरं साधव एव न गृह्णन्तीति बहिर्वृत्त्या व्रतसापेक्षत्वाद्दानान्तरायदुष्कर्मणा च मायाकरणादतिचारता, यदुक्तं-"सइ फासुअंमि दाणे दाणफलं

यति पारणकवानन्यो वा तस्मै तद्दीयते, पश्चात्तेन श्रावकेण समं सङ्घाटको व्रजति, एको न युज्यते प्रेषयितुं, साधुः पुरतः श्रावकस्तु मार्गतो गच्छति, ततोऽसौ गृहं नीत्वा तावासनेनोपनिमन्त्रयते, यदि निविशते तदा भव्यं अथ न निविशते तथाऽपि विनयः प्रयुक्तो भवति, ततोऽसौ भक्तं पानं च स्वयमेव ददाति भाजनं वा धारयति स्थित एव वाऽऽस्ते यावद्दीयते, साधू अपि पश्चात्कर्मपरिहरणार्थं सावशेषं गृह्णीतः, ततो वन्दित्वा विसर्जयति अनुगच्छति च कतिचित्पदानि ततः स्वयं भुङ्क्ते, यच्च साधुभ्यो न दत्तं तच्छ्रावकेण न भोक्तव्यं, यदि पुनस्तत्र ग्रामादौ साधवो न भवन्ति तदा भोजनवेलायां द्वारावलोकनं करोति, विशुद्धभावेन च चिन्तयति-यदि साधवोऽभविष्यंस्तदा निस्तारितोऽहमभविष्यमिति, एष पोषधपारणके विधिः, अन्यदा तु साधुभ्यो दत्त्वा भुङ्क्ते भुक्त्वा वा ददाति, एवं वस्त्रव्यापारणादावपि यथार्हं ज्ञेयं, यदाह धर्मदासगणिः-"पढमं जईण दाऊण अप्पणा पणमिऊण पारेइ। असई अ सुविहिआणं भुंजेइ अ कयदिसालोओ ॥ १ ॥ साहूण कप्पणिज्जं जं नवि दिन्नं कहिंचि किंपि तहिं। धीरा जहुत्तकारी सुसावगा तं न भुंजंति ॥ २ ॥ वसहीसयणासणभत्तपाणभेसज्जवत्थपत्ताई। जइवि न पज्जत्तधणो थोवाऽवि थोवयं देइ ॥ ३ ॥" अन्यत्राप्युक्तम्-"अर्हद्भ्यः प्रथमं निवेद्य सकलं सत्साधुवर्गाय च, प्राप्ताय प्रविभागतः शुचिधिया दत्त्वा यथाशक्तितः। देशायातसधर्मचारिभिरलं सार्द्धं च काले स्वयं, भुञ्जीतेति सुभोजनं गृहवतां पुण्यं जिनैर्भाषितम् ॥ १ ॥" एतद्व्रताराधनायैव प्रत्यहं श्रावकेण 'फासुएणं एसणिज्जेणं' इत्यादिना गुरूणां निमन्त्रणं क्रियते ॥ अत्रातिचारान्निन्दितुमाह—

उक्तमेकादशं व्रतमथातिथिसंविभागाख्यं द्वादशं शिक्षाव्रतं तुर्यं, तत्र तिथिपर्वादिलौकिकव्यवहारपरिवर्जको भोजनकालोपस्थायी अतिथिरुच्यते, स च श्रावकस्य साधुः, उक्तञ्च–"तिथिपर्वोत्सवाः सर्वे, त्यक्ता येन महात्मना। अतिथिं तं विजानीयाच्छेषमभ्यागतं विदुः ॥ १ ॥" तस्यातिथेः सङ्गतः–आधाकर्मादिद्विचत्वारिंशद्दोषविरहितो विशिष्टो भागः–पश्चात्कर्मादिदोषपरिहारायांशदानरूपोऽतिथिसंविभागः, अयमर्थः–न्यायार्जितानां प्रासुकैषणीयानां कल्पनीयानां चान्नपानवस्त्रादीनां देशकालश्रद्धासत्कारक्रमपूर्वकं परया भक्त्या आत्मानुग्रहबुद्ध्या दानमतिथिसंविभागः, तत्र शाल्यादिनिष्पत्तिभाग् देशः १ सुभिक्षदुर्भिक्षादिः कालः २ विशुद्धचित्तपरिणामः श्रद्धा ३ अभ्युत्थानासनदानवन्दनानुव्रजनादिः सत्कारः ४ यथासम्भवं पाकस्य पेयादिपरिपाट्या प्रदानं क्रमः ५ तत्पूर्वकं देशकालाद्यौचित्येनेत्यर्थः, यदाह–"पइसंतगिलाणेसुं आगमगाहीसु तह य कयलोए। उत्तरपारणगंमि अ दिन्नं सुबहुप्फलं होइ ॥१॥" आवश्यकचूर्णिपञ्चाशकचूर्ण्याद्युक्त इह चायं विधिः–श्रावकेण पोषधपारणके नियमात्साधुभ्यो दत्त्वा भोक्तव्यं, कथं ?, यदा भोजनकालो भवति तदाऽऽत्मनो विभूषां कृत्वा प्रतिश्रयं गत्वा साधून्निमन्त्रयते–भिक्षां गृह्णीतेति, साधूनां च तत्र का सामाचारी ?, उच्यते, तदैकः पटलकमन्यो मुखानन्तकमपरो भाजनं प्रत्यवेक्षते माऽन्तरायदोषाः स्थापनादोषा वाऽभूवन्निति, स च यदि प्रथमायां पौरुष्यां निमन्त्रयते अस्ति च नमस्कारसहितप्रत्याख्यानी ततस्तद्गृह्यते, अथ नास्त्यसौ तदा न गृह्यते यतस्तद्वोढव्यं भवति, यदि पुनर्घनं लगेत्तदा गृह्यते संस्थाप्यते च, यो वोद्घाटपौरुष्यां पार-

रप्यत्यन्तचमत्कृतैः कृती स यतिः। प्रणतः प्रणुतश्चोच्चैर्द्वयोरप्यहह सुकृतफलम् ॥ १२ ॥ उर्वीशोऽर्वाग्दिनप-
टहध्वनिना पर्वघोषणापूर्वम्। पोषधशाले पोषधमाधाद्विधिना कदाचिदथ ॥ १३ ॥ कायोत्सर्गं कृतवान् धृत-
वान् सद्ध्यानमेष निशि यावत्। स्मृतवांस्तावत्तस्करमुनिमुच्चैर्व्यद्भुतं स्मरति ॥ १४ ॥ भावितवांश्च ततोऽसौ
श्लाघ्यश्लाघायुजामपि स एव। यः परितापितपौरश्चौरः सन्नाददे दीक्षाम् ॥ १५ ॥ अहमहह! मन्दभाग्यः
सम्यग्धर्मस्वरूपमपि जानन्। त्रिदशाचलचूलामिव मुमुक्षतां न क्षमे धर्तुम् ॥ १६ ॥ धिग् मां कातरमातुरम-
नसं सांसारिकेषु सौख्येषु। सम्यग्धर्माराधनविमुखं स्पृहयालुममृतसुखम् ॥ १७ ॥ भवजलधियानपात्रं पात्रं
परसंविदां दुरितदात्रम्!। चारित्रं चिन्तामणिमिव कथमासाऽस्मि रङ्कः सन्? ॥ १८ ॥ सैवं शुभभावनया
पावनया घातिकर्ममलहरणात्। केवलमलभत पोषधफलमद्भुतमुच्चकैः किञ्चित् ॥ १९ ॥ सन्निहितावहितसुरैः
कृतमहिमा स प्रदत्तयतिलिङ्गः। दीक्षितपित्राद्यैः सह सिद्धः प्रतिबोध्य बोध्यजनान् ॥ २० ॥ सान्निध्यासा-
न्निध्ययोः पौषधादौ, तन्मालिन्ये तदुद्दढाराधने च। इत्थं श्रुत्वा किञ्चिदुच्चैः फलं भोस्तत्सान्निध्याराधनादौ
यतध्वम् ॥ २१ ॥

॥ इति पोषधव्रते देवकुमारप्रेतकुमारकथा ॥

——०:०:०——

२१गाथा-
यां पोषधे
इभ्यद्वय-
ज्ञातं

॥१७३॥

नेकाश्चर्यकारकं दिव्यरत्नमेकं पोषधपूरणानन्तरं, एवमाजन्मनिर्वाहितनिष्कलङ्कपोषधाभिग्रहः पुण्यप्रभावा-
दयत्नसिद्धदुर्निग्रहशत्रुनिग्रहः प्राप्तदिव्यरत्नप्रवरः स स्वनगरमागत्य तेन निःसममहिम्ना मणिनाऽनेकप्रकारान्
स्वपरोपकारानकरोत्, इति भवरोगसदौषधपोषधविधिनाऽवनीधवो व्यधुनात्। निजकर्मरजः प्रबलप्रभञ्जनेनेव
निचितमपि ॥१॥ स्तेनं स्तेनजनन्यां श्यामरजन्यां कदाचिदिभ्यगृहे। खात्रं दत्त्वा कोऽप्याददे धनं विनिमये-
नेव ॥२॥ निर्गत्य ततो यान्तं मार्गे मृगधूर्त्तवद् द्रुतगतिं तम्। दृष्ट्वा पृष्टे व्याधा इव नृपयोधा अधाविषत ॥३॥
सोऽप्यभ्यस्तद्रुततरगतिः प्रणश्यन् विनिर्गतो नगरात्। बहिरुद्याननिकुञ्जे प्रविष्टवांश्चौररीतिरियम् ॥ ४ ॥
दस्युभिया तत्रान्तः प्रसृमरतिमिरे प्रवेष्टुमसमर्थैः। रिपुभिः पुरमिव परितोऽप्यवेष्टि तत्तैः प्रभूततरैः ॥ ५ ॥
दस्युस्त्रस्यंस्तत्र तु शममिव साक्षाद्वेक्ष्य मुनिमेकम्। अशृणादभयं शरणागतस्य मे देहि देहिहितम् ॥ ६ ॥
ऋषिराख्यद्यदि दीक्षां कक्षीकुरुषे तदैव तव न भयम्। न त्वन्यथा कथञ्चिद्विना न वैराग्यमभयं हि ॥ ७ ॥
तदुक्तम्–"भोगे रोगभयं सुखे क्षयभयं वित्ते च भूभृद्भयं, माने म्लानिभयं गुणे खलभयं देहे कृतान्ताद्भयम्।
शौर्ये शत्रुभयं जये रिपुभयं वंशे कुयोषिद्भयं, सर्वं नाम भयं भवेदिदमहो! वैराग्यमेवाभयम् ॥८॥" श्रुत्वेति
सदालोचः कृतलोचः शासनाधिदेवतया। दत्तयतिवेष एव प्राव्राजीदहह! जीवगतिः ॥ ९ ॥ प्रातस्तं प्रव्र-
जितं ते प्रेक्ष्यारक्षका नृपायाख्यन्। सोऽपि सुधीरतिविस्मितचित्तस्तं नन्तुमागतवान् ॥ १० ॥ नत्वा च श्लाघि-
तवान् विभो! भवानेव सात्त्विकप्रवरः। अपि दुर्नयेन येन प्रापि द्राक् त्रिजगदर्च्यत्वम् ॥ ११ ॥ एवं पौरजनै-

क्षार्थं च यथारुचि युष्माभिर्वैरिमिलनादावपि न क्षूणं मनागपि मंस्ये, न चास्य छलकृतोऽपि दोदूयाकरणं मनसाऽप्यनुमंस्ये, सम्प्रति यतिरिवैकोऽहं न कुर्वे स्वदेहेऽपि मोहं किं पुनः स्वजने परिजने धने वा ?, यतः-प्राणान्तेऽपि न भङ्क्तव्यं, गुरुसाक्षिकृतं व्रतम् । व्रतभङ्गोऽतिदुःखाय, प्राणा जन्मनि २ ॥ १ ॥" एवं राज्ञो निस्सङ्गां गिरं श्रुत्वा किंकृत्यजडा यावत्सर्वेऽप्यभूवंस्तावद्वारिपूरवद्दुर्निवारं वैरिबलं तत्सैन्यान्तः सर्वतोऽपि प्रविष्टं महाक्रोधाविष्टं, प्रनष्टाश्च झटिति दिशोदिशं निर्नायका इव सञ्जातात्यन्तदैन्याः, राजा तु स्वजीवितेऽपि निरपेक्षस्तत्त्वानुप्रेक्षालब्धफलस्तथैव दर्भसंस्तारकस्थस्तस्थौ, यावच्च विद्वेषिनृपस्तद्भटाश्च गोष्ठश्वा इव धृष्टा धराधिपं विप्रकर्तुमुदायुधा दधाविरे तावत्तद्धर्ममाहात्म्यसन्निहितावहितया शासनदेवतया सर्वाङ्गस्तम्भं स्तम्भ्यन्ते स्म ते तथा यथा सर्वाङ्गव्यथाप्रथाभिर्वज्रघरट्टसम्पुटनिपीड्यमानजलमानुषवदत्युच्चकैराचक्रन्दुः-अहो ! अहो ! इहापि तात्कालिकः अपुण्यपापविपाकः, तत आः किमिदमाकस्मिकमेतेषां जातमित्युल्लसदसाधारणकरुणरसप्रसरः स नरेश्वरस्तद्देवताकृतं संभाव्य तां प्रत्याह-धर्मसान्निध्यार्थमागते हे देवते ! मा मन्निमित्तमेतांस्तपस्विनः स्वल्पमपि विव्यथः, मा मामेवं धर्मे सांनिध्यमपि पप्रथ, किं तेन सांनिध्येन येन परः परितप्येतेति, ततः पापभीरुत्वसूक्ष्मेक्षिकाचमत्कृतया देवतया देवकुमारनृदेवस्य यावज्जीवसेवकताप्रतिपादनपूर्वं मुक्तास्ते तस्य वशे बभूवुः, मिलिताश्च तत्कालमेव विस्मितमुदिततराः सर्वे चमूचराः, तादृग्धर्मैकाग्र्यतुष्टया तया च प्रादायि तस्मै सर्वव्याधिविषापहारकं सर्वभूतादिदोषनिवारकं शस्त्रबन्धजलाग्निश्वापदादिदुष्टस्तम्भनप्रभृत्य-

न करीरे पत्तं ता किं दोसो वसंतस्स ? ॥ १ ॥" ततः क्षित्यधिपादिभ्यः प्रसह्य पोषधादिविधापनभीतः स दुर्विनीतस्तत्याज तन्नगरमपि सर्वश्रेयोभिः सह, एवं धर्मशर्मबहिर्मुखः सर्वतोमुखदौर्गत्यमान्द्यपराभवादि-महादुःखः स क्रमान्मृतस्तिर्यग्नरकादिबहुभवेषु भ्रान्तश्च, अहह दुःसहःकोऽपि धर्मविघ्नकरगिरां निष्फलानामपि विपाकः, अथ देवकुमारनरेन्द्रः सुरेन्द्र इवोर्व्यां विहितावतारः पर्वण्यर्वागदिने पर्वघोषणापूर्वं सर्वसामन्तामात्याद्यैः समं पोषधाराधनादिना कृतैकातपत्राऽर्हतधर्मविस्तारश्चिरं राज्यं चकार, कदाचिदभ्यमित्रीणः स धरित्रीरमणः स्वयम्भूरमण इवोद्वेलं प्रासवान् शत्रुदेशसीमानं, ततः शत्रुनृपोऽपि सर्वाभिसारेण निस्ससार सङ्ग्रामार्थं संमुखः, इतश्चागतमष्टमीपर्व तद्दिने च युद्धारम्भं निवार्य मन्त्र्यादिभिर्भृशं निवार्यमाणोऽपि महीपतिरग्रहीन्महीयः पापौषधं पौषधं, तत्स्वरूपं ज्ञात्वा छलान्वेषिणा द्वेषिणा नदीनेनेव चतुरङ्गबलेन वेलाकूलमिव वेलाजलेन सर्वतः परिवेष्ट्यते स्म तत्सैन्यं, ततः समस्ता अपि विहस्ताशया अनन्यगतिकास्तत्सैनिका द्रुतमागत्य प्रणत्य च सत्यस्वरूपप्ररूपणपूर्वं राज्ञो विज्ञपयामासुः—देव ! युद्धाय संनह्यतां यद्वा तदादेशो दीयतां आः किमिदमप्रस्तावे पुण्यकृत्याचरणं रणनिवारणं च सर्वेषामपि कदर्थनाकारणं?, नहि कफप्रकोपे शर्कराऽप्यादरणीया भवति, एवमत्यन्तविषादिभिः सचिवादिभिरपि शुभाशुभोक्तिभिर्भृशमुक्तोऽप्यसौ नैवेषदपि स्वपौषधं विराधयामास मनसाऽपि, प्रत्युत दृढतया कथयामास सचिवादीन्—भो भो मुग्धबुद्धयः! को नाम विदग्धः सन् ऐहिकमात्रकृते पारत्रिककुसीदं सीदत्तमं कुर्यात्, मा च मन्त्रिमितं कश्चित्क्लेशलेशमपि स्वीकुर्यात् स्वर-

मा भूवन् भवन्तः सर्वाभीष्टसाधकधर्मनिरपेक्षाः, यतः—"वुच्छिन्ना किं खु जरा नट्ठा रोगा य किं गयं मरणं। थइअं व नरयदारं? जेण जणो धम्मनिरविक्खो ॥ १ ॥ मा सुअह जग्गिअव्वे पलाइअव्वंमि कीस वीसमह?। तिन्नि जणा अणुलग्गा रोगो अ जरा य मच्चू अ ॥ २ ॥" तस्माद्यतिधर्माशक्तत्वे श्राद्धधर्मे सम्यग्यतितव्यं, विशिष्य च तत्परमसारभूते पौषधव्रते तत्सान्निध्यानुमोदनादौ च, यतः—"कर्त्तुः स्वयं कारयितुः परेण, तुष्टेन चित्तेन तथाऽनुमन्तुः। साहाय्यकर्त्तुश्च शुभाशुभेषु, तुल्यं फलं तत्त्वविदो वदन्ति ॥ १ ॥" स्पष्टं दृष्टं च सर्वैर्देवकुमारप्रेतकुमारयोः पोषधादिसान्निध्यासान्निध्यफलं निस्तुलं, एवं धर्मदेशनया प्रतिबुद्धः प्राकृतधर्मसान्निध्यवशात्सञ्जातदृढश्रद्धः श्राद्धधर्मप्रतिपत्तावेकादशव्रतीं प्रतिपद्यते स्म देवकुमारः क्ष्मापः, तादृक्स्वपुत्रप्रसादेन नृत्वेऽपि सर्वार्थसिद्धंमन्याः प्रज्ञाकरादयश्च पर्वसु सर्वदा प्रतिपूर्णपौषधाराधनं न्यक्षकर्मक्षयसाधनं, धन्यश्रेष्ठी तु सश्रेष्ठिनीकस्तादृक्पुत्रप्रदत्तासुदृढदारिद्र्यादिदुःखगर्भवैराग्यात्तदैव परिव्रज्य क्रमात्प्राज्यशिवसाम्राज्यभागभूत्, अन्येऽपि यथाशक्ति धर्मे तत्सान्निध्यादौ च प्रयतन्ते स्म, व्यन्तरोऽपि प्राप्तसम्यक्सम्यक्त्वा सम्यग्दृशां सान्निध्यविधिसावधानोऽभवत्, धन्यतनूजस्तु तादृग्दुःखदग्धोऽपि बहु विदग्धोऽपि प्राग् धर्मान्तरायकरणात् सम्यग्धर्मे विशिष्य च पौषधग्रहणादौ सर्वथैव नोत्सेहे, प्राग्भवसम्बन्धाद्बन्धवादिभिर्भृशमुत्साहितोऽपि प्रत्युतोष्ट्र इव द्राक्षावणे विद्वेषमादधे पौषधे श्राद्धकुलोत्पन्नोऽपि, अहह! जीवस्य तादृक्समग्रसामग्र्यामपि धर्मदुष्प्रापत्वं, क्व वा वर्षासु वसन्तेऽपि वा करीरे पत्रोद्गमः?, तदुक्तम्—"पत्ते वसंतमासे रिद्धिं पावंति सयलवणराई। जं

देवकुमारस्य च तं राज्यर्द्ध्याडम्बरं निरीक्ष्य प्रेतकुमारपिताऽपि स्वपुत्रस्य पाणिग्रहणाद्याडम्बरार्थं यावत्कुटुम्बेन समं किञ्चिद्विचारमात्रमासूत्रयति तावदनभिप्रेतेन साक्षात्प्रेतेन तेन गृहमूलस्तम्भमेव गृहीत्वा तथा कथञ्चित्पित्रादिनिपातनार्थमुत्थितं यथा सर्वैरपि जीवनाशं नश्यते स्म, तदा च तेन शून्यं तद्गृहं काराग्रहमिव समग्रमपि कुट्टयित्वा पातितं ज्वालितं च लाक्षागृहवत् तथा यथा स्वर्णद्रव्याद्यपि निःशेषं भस्मावशेषीबभूव, दुःसहो हि दैवतक्रोधः, एवं द्वादशवर्ष्या प्राग्भवतनयजीवयोः साम्राज्यप्रदानसर्वस्वप्रणाशावधि स्वतोषरोषफलं निस्तुलं दर्शयित्वा कृतकृत्यमानिनी सा व्यन्तरी स्वं पदमासदत्, ततोऽब्धिवेलाजलविप्रमुक्तः सरित्प्रवाह इव स धन्यतनूरुहः स्वस्वरूपावस्थामास्थितः, पित्रादिभ्यः सकलमपि स्वस्वरूपं परिज्ञायातिदुःस्थितः पित्रोरप्यत्यर्थं दौस्थ्यव्यथाप्रथाहेतुः केतुरिव भवति स्म सर्वेषामनिष्टतमः परमदुःखखनिश्च, कुतो वा प्राग्भवे धर्मविघ्नकृतां किञ्चिद्दैववशात् सुकुलप्राप्तावपि श्रेयःप्राप्तिः स्वल्पाऽपि ?, धर्मविघ्नेन श्रेयसामपि विघ्नभावात्, अहह ! प्राक्कृतदुष्कर्मलब्धकुपुत्रसङ्गत्या दौर्गत्यादिदुःखखनित्वं जनकादीनामपि, यद्वा कपोतपोताध्यासितशाखायाः शुष्कत्वे किं नाम नव्यं ?, देवकुमारनृपोऽपि तद्व्यन्तरीविप्रमुक्तस्तरणिरिवाभ्रपटलीविप्रमुक्तः सहजनिजतेजसाऽपि दिद्युतेतमाम्, अन्येद्युस्तत्पुरोद्यानान्तः समवसृतं केवलिनं विज्ञाय विज्ञाग्रणीः क्षोणीन्दुर्देवकुमारः सपरिवारः प्रेतकुमारतत्पित्रादिभिः सह तं वन्दितुं ययौ, तदा च तदारामस्थायिनी सा व्यन्तर्यपि साक्षाद्भूय नतिपूर्वं ज्ञानिनोऽग्रे निविष्टा, ज्ञानिनाऽप्युपदिष्टम्—अहो ! अर्थकामैककृतावेक्षाः प्रेक्षाचक्षुषः ! क्षणमपि

गर्भेऽष्टमेऽतिद्विष्टः स, दध्यौ कोऽपि कुलक्षणः। पुत्रोऽप्यस्तु यथाऽस्य स्वं, नश्येद्धाताहताब्दवत् ॥३१॥ लघोर्भार्यासप्तगर्भेष्वेवं वृद्धोऽपि सप्रियः। दध्यौ निर्लक्षणा अस्य, सुताः सन्तु स्वहानिदाः ॥ ३२ ॥ सुजाता एव जाताश्च, शुभैस्तस्य मुधा तु सः। तीव्रं कर्मार्जयामास, धिग् द्वेषं शुभ(वि)द्विषम् ॥३३॥ गर्भेऽष्टमे स वैविक्त्यात्, प्राग् दुर्ध्यानेऽनुतापभृत्। सल्लक्षणगुणोत्कृष्टः, पुत्रोऽस्यास्त्वित्यचिन्तयत् ॥ ३४ ॥ शान्तौ क्रमात्सकान्तौ तौ, श्राद्धधर्माद्दिवं गतौ। च्युतौ जातौ युवां तादृक्, प्रापथुः फलमत्र च ॥ ३५ ॥ परस्य चिन्त्यते यादृक्, तादृक् स्वयमवाप्यते। शुभेप्सुरशुभं तत्कः, स्वप्नेऽप्यन्यस्य चिन्तयेत् ? ॥ ३६ ॥ दुःखाकरं मत्सरं तद्विहाय स्वहितार्थिनः। त्रिजगत्पूज्यताहेतुं, मैत्राद्यं सूत्रयन्त्वहो ! ॥ ३७ ॥ मैत्र्यादिस्वरूपं चैवमुक्तं तुर्यषोडशके-"परहितचिन्ता मैत्री परदुःखविनाशिनी तथा करुणा। परसुखतुष्टिर्मुदिता परदोषोपेक्षणमुपेक्षा ॥ ३८ ॥" श्रुत्वेति सर्वेऽन्येषां दुश्चिन्तनस्यापि वर्जने। प्रोद्यताः स्वपदं प्रापुर्लाभः कोऽपि गुरोर्गिरः ॥ ३९ ॥ तावपि कुमारौ तथा २ क्रमाद्वर्द्धमानौ श्वेतकृष्णपक्षाविव निर्मलानिर्मलौ सदसद्भोज्यवेषावस्थाऽवस्थानोत्सवानुत्सवादिरतौ पित्रादीनां दत्तहर्षविषादप्रकर्षौ जातौ किञ्चिदूनद्वादशवर्षौ, इतश्च स देवताऽवतारेण देवकुमारेण मार्ग्यते स पृथ्वीपतिः प्राक् प्रतिश्रुतं राज्यं दत्तं च विज्ञेन तेनापि स्वाभीष्टायेव तदैव तत्तस्मै स्वकन्याप्रदानपूर्वं सप्रौढोत्सवं, को नाम श्रेयस्कामः प्रतिश्रुतदैवतदातव्ये विमर्शविलम्बादि कुर्यात् ?, ततः-"खणं जाणाहि पंडिए"-त्ति वचनात् तत्क्षणमेवात्तश्रामण्यः श्रीमानपराजितनामा क्ष्माकामुकः क्रमान्मुक्तिकामुकतामासादयामास,

२९गाथायां पोषधे इभ्यद्वयज्ञातं

नात्। इहोद्याने व्रतस्यातिचारे हीनसुपर्वता ॥ १५ ॥ जज्ञे प्रज्ञाकरेभ्यस्य, सुतस्तु सुमतिर्मृतः। धन्यस्यान्यश्च निर्भावश्रावकत्वेऽप्ययदः फलम् ॥ १६ ॥ प्राक् प्रीतिप्रतिबन्धेन, प्रज्ञाकरसुतस्तयोः। व्यन्तर्यां जात एवोच्चैः, प्रतिष्ठार्थमधिष्ठितः ॥ १७ ॥ निधिं सैवार्पिपत्पित्रे, तस्य जन्ममहादि च। अचीकरत्तवाप्युच्चैश्चमत्कारमदीदृशत् ॥ १८ ॥ विडम्बयितुमत्यन्तं, प्राग्विद्वेषविशेषतः। धन्यात्मजोऽप्यध्यष्ठायि, न्यष्ठापि च तया धनम् ॥ १९ ॥ द्विष्टया च तया निन्ये, स शिशुस्तादृशीं दशाम्। विद्विषा खलु विद्वेष्यः, सर्वथाऽपि कदर्थ्यते ॥ २० ॥ तादृक् स्वरूपं भो भूप !, किञ्चित्प्रादर्शि तेऽपि च। चित्रकृद्धर्मसान्निध्यासान्निध्योत्थमहो ! फलम् ॥ २१ ॥ एवं द्वादश वर्षाणि, दर्शयिष्यत्यसौ द्वयोः। प्रीत्यप्रीतिफलं दिव्यतोषरोषौ हि नाल्पकौ ॥ २२ ॥ इत्याकर्ण्य गुरूद्गीर्णमुत्कर्णं क्षोणिपादयः। सर्वे बभूवुः सद्धर्मसान्निध्यैकाग्रबुद्धयः ॥ २३ ॥ प्रज्ञाकरेभ्यधन्याभ्यां, विज्ञप्तोऽत्रान्तरे गुरुः। आवयोः प्राग्भवं चित्रविपाकं ब्रूहि सोऽप्यवक् ॥ २४ ॥ प्राग्बान्धवौ धर्मदासधर्मदत्तौ पराहतौ। जातो द्वाहौ वधूवाक्यादर्थार्थं चक्रतुः कलिम् ॥ २५ ॥ यतः—"आक्षीरधारैकभुजामागर्भैकनिवासिनाम्। कलहे सति निर्वाहो, पृथक्त्वं ये, भ्रातृणामपि कुर्वते ॥ २६ ॥" कथञ्चिच्च विभक्तार्थौ, जातौ तौ सर्वथा पृथग्। कलहे सति निर्वाहो, महतामपि नान्यथा ॥ २७ ॥ मिथस्तथाऽपि तौ गुप्तवित्तग्रहणशङ्किनौ। द्वेषं तत्यजतुर्नान्तरविश्वासे शमः कुतः ? ॥ २८ ॥ आद्यस्याद्ये प्रियागर्भे, सप्रियोऽन्यो सहामहम्। दृष्ट्वा द्विष्टः सुतैवास्याऽसौ भूयादिति दध्यकौ ॥ २९ ॥ क्षमाजातः सुतस्तस्य, महीयांस्तन्महोऽप्यभूत्। स त्वबध्नात्ससगर्भेऽप्येवं दुष्कर्म दुर्मतिः ॥ ३० ॥

विद्धाति तद्विधिः ॥१॥" सकर्ण! आकर्णयैतयोः प्राग्भवं यथा द्रुतमपैति भवदादीनां दुस्तमतमः संशयप्रभवं, तथाहि—हस्तिनापुरवास्तव्यावार्हतस्थविरासुतौ। सुमतिः कुमतिश्च द्वौ, नामतः परिणामतः॥१॥ तौ वाणिज्यादिवैयग्र्यात्प्रमादाक्रान्तचेतसौ। न किञ्चिच्चक्रतुः सम्यग्, धर्मं श्राद्धसुतावपि॥ २॥ धर्मकृत्ये रुचिः किन्तु, सुमतेः कुमतेः पुनः। अरोचकित्वमेवासीज्ज्वरार्त्तस्येव सर्पिषि॥३॥ स्थविरा मध्यभावेन, धर्माराधननिषण्णधीः। त्रिर्जिनार्चादि कुरुते, महत्त्वाद्यर्थिनी पुनः॥ ४॥ वृद्धत्वविधिवैदग्ध्यादिना गृह्णाति पोषधम्। पर्वस्वग्रेसरीभूय, भूयः स्त्रीभिः समं च सा॥ ५॥ वार्त्तानिद्रादिना किञ्चिद्विराधयति तं च सा। धिक् प्रमादमकृत्स्नस्यापि कालुष्यस्य कारणम्॥६॥ युग्मम्। अमुष्याः पौषधादौ चानुमतिं सुमतिः कृती। दत्ते चित्ते मुदं धत्ते, संनिधत्ते च सर्वथा॥ ७॥ प्रोत्साहनज्ञः प्रोत्साहयत्युच्चैस्तां च तद्विधौ। श्लाघादिना सुपुत्राणामियं रीतिः पितॄन् प्रति॥८॥ कुमतिस्त्वाह हे मातः!, वार्द्धके दुःशकेन किम्?। पौषधेन समर्थत्वे, निश्चिन्तत्वे च सोऽर्हति॥९॥ अहो! महद्वितं मातुर्वात्सल्यं च स्वपुत्रयोः। स्वपाणिना पर्वदिने, न ददात्यदनाद्यपि॥ १०॥ मुधा क्षुधा च म्रियतेऽन्यान् मिमारयिष्यत्यपि। त्यक्त्वा च स्वकवेश्मापि, तिष्ठत्यन्यत्र कुत्रचित्॥ ११॥ किमनेन ततः कायक्लेशेन? स्वगृहस्थिता। कुरु चिन्तां सुतादीनां, स्थविरत्वे स्थितिर्ह्यसौ॥ १२॥ महत्त्वमीहते जन्तुर्जरत्वे स्त्री विशिष्य तु। सेत्युच्चैः स्वमहत्त्वेच्छुः, पौषधादौ दृढाशया॥ १३॥ ततः सा सुमतौ प्रीतिं, परेऽप्रीतिं त्वधाद् दृढम्। प्रीयते द्वेष्टि चेष्टस्य, साधके बाधके न कः?॥ १४॥ व्यन्तर्यभूत्क्रमान्मृत्वा, सा पौषधविराध-

नम्रनर्त्तितविकटकटिः प्रकटितविश्वविस्मयः सस्मयमुर्वीशपर्षद्याजगाम न तु प्रणनाम, तथाऽपि क्ष्मापतिरक्षाम-
सबहुमानवचनं हे कुमारेन्द्र ! कच्चित्कुशलिनो यूयं इत्यादि यावद्वादीत् तावत्पृथुकोऽप्यवादीद्दैत्यरूपानुवादी-
रे नरेश ! मामिन्द्रतया बहु मानयसि न जानासि भद्रिकमं श्रेष्ठिगृहवत् त्वद्गृहमपि भस्मीकरिष्याम्यक्रममि-
त्युक्तिसमकमेव समुत्थितः कुतोऽपि धूमकेतुर्भूभर्त्तुर्भवने २ हहा ! भ्रान्तोऽहं २ प्रसीद २ इत्यादिनृपोक्त्योप-
शान्तश्च तदैव तत्क्रोधाग्निना सार्द्धं, ततः प्रेतकुमारः कोऽप्ययं ननु श्रेष्ठिकुमार इत्यादि विब्रुवन्ति स्म भय-
भाजः सामाजिकाः, प्रमुदितश्चातितमां तद्वचसा स शिशुः, उदितवांश्च नृपादिसमुदितजनताः प्रति–हंहो ! अहं
प्रेतकुमार एव नाम्ना धाम्नाऽपि मम च महामुनेरिव निन्दयैवानन्दः न तु सत्ययाऽपि स्तुत्येति, ततोऽति विस्मया-
द्वैतभृत्क्ष्माभृद्बभाषे–रे रे कुमारापशद ! किमदः सदस्यादिप्रमदभिदुरं त्रिजगद्भयङ्करं ते चरितं ?, सोऽप्युवाद-
देव ! केवल्येव देवकुमारस्वरूपवत् प्रेतकुमारस्वरूपमपि प्ररूपयिष्यति किं नाम मम पार्श्वे पृच्छया ?, न हि
स्वगुणोत्कीर्त्तनं महात्मानः स्वयं कुर्वन्ति, यतः–"न स्वयं ख्यापितगुणो, गुणवानिति कथ्यते । स्वयं संवाहिता-
नां हि, गात्राणां निर्वृतिः कुतः ? ॥ १ ॥" इतश्च वर्द्धापयांबभूव भूविभुं केवल्यागमनविज्ञपनेन सद्योऽप्युद्यान-
पालकः, ततोऽतिमुदितात्मा क्ष्मारमणः प्रज्ञाकरधन्यादिव्यवहारिगणश्च विधिना गत्वा नत्वा श्रुत्वा च तदुप-
दिष्टं सुकृतैदम्पर्यं पर्यन्वयुङ्क्त युक्तिवित्केवलिनं कुमारद्वयवृत्तं, सोऽप्यभिदधे–वसुधेश्वर ! प्राक्तनकर्मणा न किम-
प्यसम्भाव्यं, यतः–"यन्मनोरथशतैरगोचरो, यत्स्पृशन्ति न गिरः कवेरपि । स्वप्नवृत्तिरपि यत्र दुर्लभा, हेलयैव

मपि करिष्यध्वे तदा तत्कालं फलमपि लप्स्यध्वे, केवलं दास्यादिस्तन्यपानादिना मन्निर्वाहमात्रमेव कुरुत यावता जीवामि, न त्वधिकं, मा च मत्तो मत्तोद्वातादिव भैष्ट, भीषणत्वं त्वाज्ञातिक्रमे एव मम नरदेवस्येव न त्वन्यथेति, ततश्चमत्कृताः पित्रादयस्तथैव तमनुवर्त्तन्ते मात्रादयोऽपि नाधिकं स्नेहं दर्शयन्ते, अन्यदा प्रातिवेश्मिकीं स्वपुत्रं नवनवोल्लापैः क्रीडयन्तीं दृष्ट्वा तन्मात्राधिकस्नेहोल्लासप्रवृत्त्या रभसवृत्त्या यावता सायंकाले क्रीडनार्थं स बालकः स्वांकपालीसङ्गशाली क्रियते स्म तावता स राक्षस इव रौद्रतामुन्मुद्रयन्नमुद्रकोपसमुद्रः प्रसह्य स्वं विमोच्य पश्यत रे ! मदाज्ञालोपफलमित्यादि विब्रुवन्निर्ययौ निजनिकेतनात्, यावच्च जनकाद्यैर्जातात्यन्तभयैर्भृशं सानुशयैरनुनयार्थं तमनुगम्यते स्म तावद्भूत इव तिरोभूतः स क्वापि ततः किमिदमत्याहितमित्यादिवादिषु पित्रादिषु क्षणान्तरे घोरान्धकारप्रसरे प्रविशन्ति स्म तद्वेश्मान्तः सन्नद्धा उदायुधास्त्रैलोक्यकुट्टाका इव केचिल्लुण्टाकाः, विलुण्टयन्ति स्म च ससयाः स्वर्णमण्यादिसारं, बहिर्निर्यान्तेषु च यावज्जनकादयः शून्यहृदया इतस्ततो भवनान्तर्भ्रमंति गतस्थितप्रेक्षार्थं प्रेक्षन्ते तावत्तमर्भकं पालनकगर्भगतं हसन्तं, क्षमयन्ति स्म ततस्तं प्राञ्जलयः सकला अपि प्रसादयन्ति स्म च सादरं तत्तद्वचोभिरुचितैरभिरुचितैश्च, तं व्यतिकरं चित्रकरं समाकर्ण्य क्षमाधनो धन्यश्रेष्ठिनमाहूय पर्षदन्तस्तत्सुतोदन्तमप्राक्षीत्, सोऽप्याचख्यौ यथास्थितमेव तं, ततः कौतुकात् कुमारं तत्राकारयाञ्चकार नरेश्वरश्रेष्ठः श्रेष्ठिना, श्रेष्ठ्यपि स्वगृहं गत्वा नृपादेशस्वरूपं प्ररूपयाञ्चकार कुमाराय, कुमारोऽपि किं मामाकारयतीति ललाटतटारोपितभ्रकुटिः स्वयमुत्तालचल-

इव प्रविशति ?, तत्प्रयातु सम्प्रति भवान्निजपदं आदधातु च स्वहृदि मुदं, उत्तिष्ठन्तु द्रुतमेवैते मया विद्रावितविपत्तयस्तव पत्तयः, भवन्तु भवदादीनामपि कियद्दिनान्याधिपत्यादिसुखसम्पत्तयः, अवसरे पुनर्यथोचितं चिन्तयिष्यामः, अस्मत्स्वरूपं च परिज्ञास्यसि स्वयं स्वल्पसमयादेव केवलिमुखात्, एवं बालवाक्यसमकालमुत्थितैः पुनर्नवजीवितैस्तैः स्वनरैः सह सहर्षविस्मयोत्कर्षमुर्वीशः स्वावासमध्यमध्यासामास, अथ च तत्रैव नगरे नगरेशमान्यस्य धन्यावल्लभस्य धन्यमहेभ्यस्य सप्तभ्यः पुत्रीभ्योऽनन्तरमजनिष्ट गरिष्ठमनोरथैरेकः पुत्रः, यावता च तत्पिता प्रमुदितात्मा तज्जन्मोत्सवमतुच्छं किञ्चित्कारयति तावतैव दुर्दैवहतः स सुतः पित्रादीन् प्रत्यवादीत्–रे रे निविडजडिमानः! कोऽयं मज्जन्मजन्मा मुधैव वः प्रमदविधिर्निरुपमानः, अहं हि चिरसञ्चितभवद्वित्तस्मेरकसेरुकन्दनिकन्दनार्थं वराह इवावतीर्णोऽस्मि पश्यत २ सम्प्रत्येव मत्कृतमिति तदुक्तिसमकालमेव विकरालस्तद्गृहान्तः प्रजज्वाल महाज्वलनः, प्रज्वलितं च तद्गृहबहुसारं उत्पिञ्जलीभूतं च यावत्पित्रादिभिस्तावत्तेनैव शावेनोत्थाय मान्त्रिकेणेव तोयच्छटया झटित्येव वह्निर्विध्यापयामाहे प्ररूपयामाहे चातिविस्मितभीतान् पित्रादीन् प्रति–हं हो महेश इव सृष्टिसंहारक्षमोऽहं अत इव विश्वेऽपि निस्समोऽहं तस्मान्मतिमोहं विहाय मदुक्तमेव कुरुध्वं, मज्जन्ममहनाम्नैवैतावान् कोपः कोपफलं च किञ्चिन्मया दर्शयामाहे, यद्भारविः–

"अवन्ध्यकोपस्य निहन्तुरापदां, भवन्ति वश्याः स्वयमेव देहिनः। अमर्षशून्येन जनस्य जन्तुना, न जातहार्देन न विद्विषा दरः ॥ १ ॥" तन्मा मन्निमित्तमतो महामोहहर्षभक्तिप्रशंसादि किमपि कार्ष्ट, यदि स्वल्प-

भवता, नवरं नरनायकः किञ्चिच्चमत्कृतिदर्शनं विना न मां बहुमन्ता, यद्यापि भवानिव नागमदस्मद्रूद्रमास्माकमनुनयाय, यदि च लोभाक्रान्तेन भूकान्तेनास्माभिरपि सार्द्धमियत्कृतं तदा किञ्चिद्वयमपि प्रतिचिकीर्षामः, यतः–"पादाहतं यदुत्थाय, मूर्द्धानमधिरोहति। स्वस्थादेवापमानेऽपि, देहिनस्तद्वरं रजः ॥ १॥ विपदोऽभिभवन्त्यविक्रमं, रहयत्यापदुपेतमायतिः। नियता लघुता निरायतेरगरीयान् न पदं नृपश्रियः ॥ २ ॥" तदहो महोत्साह ! गत्वा निवेदय नरेन्द्राय सपदि मद्गदितमिदं यत्पृथिवीपतेः पृथुमनोरथः पृथुकोऽयं त्वामिदमादिशति–राजन्! राज्यमेव समग्रं त्वामहं याचे महाऽपराधवन्तं नान्यथा सर्वथा मुञ्चे, तत्स्वयं वुद्ध्वा मया सार्द्धं युद्ध्वा वा द्रुतमेव देहि मह्यं राज्यं यथा स्यात्तवापि सुखासिकासुखं प्राज्यं इति कुमारप्रतिपादितं मन्त्रिपतिना झटिति गत्वा निवेदितं नरेन्द्रस्य अनुमतं च तेनाप्यनन्यगतिकतया निस्तुषधीसखधिया च यथोचितं, यतः–"स किंसखा साधु न शास्ति योऽधिपं?, हितान्न यः संशृणुते स किंप्रभुः? । सदाऽनुकूलेष्विह कुर्वते रतिं, नृपेष्वमात्येषु च सर्वसम्पदः ॥ १ ॥" ततः ससचिवः क्ष्माधवस्तदैव दैवतमिव तं स्तनन्धयं स्वयं ससम्भ्रममभ्यागत्य सत्यप्रतिपत्तिः पत्तितामिव स्वीकुर्वन्नुवाच वाचमुच्चैः–अहो कुमारराज ! राज्यमिदं मदीयं त्वदायत्तमेव यथारुचि सम्प्रत्येव स्वीकुरुष्व, कुरुष्व परं मदादीनामुपरि तोषं, स्फुटीकुरुष्व च स्वस्वरूपं विहितविस्मयाद्वैतपोषम् इति नृपतिविज्ञसितृप्ताशयः स उत्तानशयः प्रत्युत्तरयति स्म स्मितस्मेरास्यकुशेशयः–क्षितिपते ! स्रृतं २ नः सम्प्रति राज्येन, को हि नाम शिशुमात्रः सन्नमात्रराज्यचिन्ताभारे पारावारे

क्षणमेकं यावद् गत्वा गवेषयामि सम्यक् स्वरूपं सविवेकं, यतः—"अपरिक्खिअ कयकज्जं सिद्धंपि न सज्जणा पसंसंति । सुपरिक्खिअं पुणो विहडिअंपि न जणेइ वयणिज्जं ॥१॥" ततो राज्ञाऽनुज्ञातः समायातः श्रेष्ठिसौधं स धीसखः, नृपभटांश्च तथापतितान् प्रेक्ष्य विशिष्य विषण्णः शङ्काकुलतया श्रेष्ठिश्रेष्ठिप्रियाप्रियालापादिपूर्वं सौधमध्यमध्यास्य शिशुपार्श्वे निषण्णः, आलापितवांश्चैवं सप्रणयालापेन पालनकान्तर्मणिकन्दुकोल्लालकं तं बालकम्—अयि ! कोऽयं कुमारेन्द्र ! नरेन्द्र ! नरेषु दुर्निरोधस्तव क्रोधः कोऽयं केशरीन्द्रस्येव तवाचिन्त्यशक्तेर्गोमायुमात्रेष्वेतेषु विक्रमः ?, यतः—"सिंहं करोति विक्रममलिकुलझङ्कारभूषिते करिणि। न पुनर्नखमुखविलिखितभूतलकुहरस्थिते नकुले ॥ १ ॥" ततः प्रसद्य सद्य एव विमुञ्चैतान् रङ्कानिव वराकान्, प्रणामान्ता हि महतां क्रुधः, इयतैव जायते स सर्वेषां चमत्कारः, युज्यतेऽथ सर्वथाऽपि कोपापहारः, इत्यूचिवांसं सचिवं किञ्चिद्विहस्य प्रशस्यगिरा शिशुराह—महामते ! न ह्यस्माकमेतेष्वेष विशेषतः संरम्भः किन्तु मन्तुविधायिनं वसुधाताधिपं प्रति, वयं हि तदागमनमार्गमेव विलोकयन्तः स्मः, किमिति समितिनिर्मिताद्दतिः क्ष्मापतिरद्यापि चिरयति कस्माद्वा निवार्यते भवताऽप्यमुष्मात्सङ्ग्रामकौतुकात् ? याहि २ द्रुतं नृपतेरुपान्तं त्वरय २ च तदभिमतकृत्यकृते अत इत्यर्भकोक्तिचमत्कृतः कृती कृतवान् वक्षान्तरचारिणीं मनोहारिणीं वाणीं—महानुभाव ! भ्रान्तोऽयं भूकान्तो यद्भवद्वित्तमपि सतीचित्तमिव सुदुर्ग्रहं जिघृक्षते, सम्प्रति च ज्ञातस्वरूपा डिम्भरूपा अपि तत्रभवन्तो भवन्तो भूपतिनाऽपीत्यनुगृह्या एव स्वगृह्या इव वयमिति, शावोऽप्युवाच—सचिवेन्द्र ! सुभाषितं

हत्तममकृत कृतज्ञः सुतस्य तस्य स च। देवकुमारः स्फुटमयमिति देवकुमार नाम पुनः ॥ १७ ॥ आजन्म-
तोऽपि पटुवाक् पटुधीर्विधुरेऽपि धीरधौरेयः। लोकोत्तररूपादिकगुणैः समं स क्रमाद्ववृधे ॥ १८ ॥ सर्वत्रापि-
शुनानामिव पिशुनानामवासितः कश्चित्। अथ कथमपि निधिलाभं वुद्ध्वाऽभिदधे धराधिपतेः ॥ १९ ॥ लुब्ध-
क्रुद्धनरेशादेशादागच्छतोऽथ धाम्नि भटान्। बुद्ध्वा यावत् श्रेष्ठिप्रमुखाः प्रचकम्पिरे प्रोच्चैः ॥ २० ॥ तावदभा-
षिष्ट शिशुर्भो! भो! मा भैष्ट कष्टहृद्धोऽहम्। मयि रक्षकेऽत्र रक्षःपतिरपि नोपद्रवे दक्षः ॥ २१ ॥ धनगमना-
रेकामपि कामपि मा कार्ष्ट धार्ष्ट्यमाश्रयत। यो ननु धनस्य दाता स एव संरक्षिताऽपि खलु ॥ २२ ॥ जल्पन्नेवं
बालः पालनकादुत्थितः स्थितश्च द्राग्। गत्वा गेहद्वारे सहस्रयोधीव योधवरः ॥ २३ ॥ इतश्चागता असुरा इव
सुदुर्धरा धराधिपनराः, यावच्च प्रविशन्ति तस्यावासान्तस्तावत्तेनार्द्धमास्येनापि बालेन व्यालेनेव विकरालेन
तथा हक्किता हताश्चोत्कटचपेटाभिश्चपेटाभिर्यथा वमन्ति स्म मुखेन रक्तष्ठीविसंनिपातव्यथिता इव रुधिरं
भ्रमन्ति स्म च चक्रभ्रमिता इव निरन्तरं पतन्ति स्म मद्यघूर्णिता इव क्षोणिपीठे भवन्ति स्म मूर्च्छिता इव च
सर्वे, ततस्तद्व्यतिकरमाकर्ण्य जायते स्म महीयान् महीपतेः कोपः, क्रियते स्म च तेन सङ्ग्रामसामग्र्याटोपः
अत्रान्तरे मन्त्रिवरेण नरेश्वरः परमाप्तप्रज्ञापनया विज्ञापयामहे–देव! सतां निवारिता केयमविमृश्यकारिता
कोऽयं निष्फलारम्भः संरम्भः? ननु यत्र जातमात्रबालोऽप्येवं प्रगल्भते तत्र किं नाम सामर्थ्यमवकाशं लभते
स्वामिन्! असंभाव्यमवक्तव्यमिदं महागहनपदं किञ्चित्, ततः संरम्भं परित्यज्य प्रतीक्ष्यपादाः प्रतीक्षध्वं

यास्तयोर्बभूवुः सप्त परं निर्गुणा गुणा इव ते । खरचरणरेणुकणवद्धनह्रानिकृतश्च सङ्गकृताम् ॥ ३ ॥ यतः–
"अजारजः खररजस्तथा संमार्जनीरजः । दीपमञ्चकयोश्छाया, लक्ष्मीं हन्ति पुराकृताम् ॥ ४ ॥" औदरिका रङ्का इव निःशङ्का न्यक्षभक्षणेऽप्यनिशम् । सर्वत्र च निःशूका मूकाश्च सतां गुणग्रहणे ॥ ५ ॥ दुःखरदुर्भगदुर्मतिदुर्गतिदुर्दशदुराशयाग्रण्यः । ते सप्त नारका इव मिथोऽनुकलमकलहायिषत ॥६॥ युग्मम् ॥ तैः खेदितस्य तस्यानिष्टतमः श्रेष्ठिनोऽष्टमः शशिवत् । तनुजोऽजनि जनिताकस्मिकप्रकाशो निशीथेऽपि ॥ ७ ॥ यावज्जनकजनन्यादयो विषीदन्ति विस्मयन्ते च । तावदुवाच वचस्वीवोच्चैरपि जातमात्रोऽसौ ॥ ८ ॥ खेदः प्रमदपदे वः कोऽयं ननु तात ! तन्यतामतनुः । मज्जन्मादिमहः श्राग् नहि सुतरत्नानि सुलभानि ॥ ९ ॥ श्रुत्वेति पिताऽध्यासीद् भूतः प्रेतोऽथवाऽयमवतीर्णः । ननु सूनुर्येनायं जल्पति जल्पाकवदनल्पम् ॥ १० ॥ पुत्रत्वेऽप्यस्य जनुमहोऽस्तु कः साम्प्रतं कुतश्च यतः । उद्वेजितोऽस्म्यमित्रैरिव पुत्रैः स्वं च निर्गमितम् ॥ ११ ॥ इति तर्कपरं पितरं शिशुरूचे तात ! मा स्म शङ्किष्ठाः । भाग्यैः कैश्चिद् भवतः कुलेऽस्मि कल्पद्रुरवतीर्णः ॥ १२ ॥ नगराद्बहिरुद्याने देवकुलद्वारि सत्वरं गत्वा । दशकोटिधननिधानं गृहाण निगृहाण च धनार्त्तिम् ॥ १३ ॥ मज्जन्ममहादीन्यपि महत्तमान्येव वितनु कृत्यानि । तेन धनेनान्यान्यप्यगण्यपुण्यान्यपि वितन्याः ॥ १४ ॥ इति तद्गिराऽतिविस्मितमुदितः श्रेष्ठी तदैव तत्स्थानम् । गत्वाऽखानयदासैर्यावत्तावन्निधिर्निरगात् ॥ १५ ॥ तं तादृशं तदानीमेव समानीतवांश्च निजसद्म । मूर्त्तं सुकृतमिवासौ धनधर्मासौ हि कश्चिरयेत् ? ॥ १६ ॥ जन्ममहं सुम-

रात्रावब्रह्मचारिणैव भाव्यमिति पापोपदेश एव दत्तः स्यात्, रात्रौ ब्रह्मपालने प्रतिमाऽतिचारश्च प्रसज्येत,
किं च-एतद्वचनबलाद् यदि प्रतिनियतदिवसेष्वेव पौषधः कार्य इति नियमयिष्यते तदाऽतिथिसंविभागेऽपि
तथानियमप्रसङ्गः, तुल्ययोगक्षेमत्वात्, तथा च पौषधोपवासपारणं विनाऽतिथिसंविभागोऽपि न कार्य एव
अविधिप्रसक्तेः, तस्मात्पर्वान्यदिनेष्वपि पोषधग्रहणे न कश्चिद्विधिः, किन्तु सावद्यवर्जनादिना विशेषलाभ
एवेति प्रतिपत्तव्यम् । एतद्व्रतफलमेवमुक्तम्-"कंचणमणिसोवाणं थंभसहस्सूसिअं सुवन्नतलं । जो कारिज्ज जिण-
हरं तओवि तवसंजमो अहिओ ॥१॥" एकस्मिन् मुहूर्त्तमात्रे "बाणवई कोडीओ" इति गाथया प्रागुक्त सामायि-
कलाभस्त्रिंशन्मुहूर्त्तमानेऽहोरात्रपौषधे त्रिंशद्गुणो बादरवृत्त्या स्यात्, स चायं-"सयहत्तरि सत्तसया ७७७
सतहत्तरिसहस ७७ लक्ख ७७ कोडीओ ७७ । सगवीसं कोडीसया २७ नव भागा सत्त ७ पलिअस्स ॥१॥"
अङ्कतो यथा-२७७७७७७७७७७ । $\frac{9}{7}$ । एतावत्पल्यायुर्बन्ध एकस्मिन् पोषधे, सूक्ष्मवृत्त्या त्वधिकतरोऽपि, प्रमा-
दात्पोषधाग्रहणेऽहोरात्रस्यापि तत्तद्व्यापारैः पापमयत्वसम्भवे नरके एतावत्पल्यायुर्बन्धादिफलं वक्तव्यं,
चक्रिवासुदेवादीनां तत्तद्देववशीकाराद्यैहिकमपि पोषधफलं प्रतीतमेवेत्येकोनत्रिंशगाथार्थः ॥ २९ ॥ पोषधारा-
धनविराधनयोरिभ्यपुत्रद्वयज्ञातं यथा—

लक्ष्मीनिवासनगरे नगरेखाऽनुकृतिकृत्कनकदुर्गे । सार्थकनिरर्थकाख्यः क्षितिपतिरपराजितः प्रथितः ॥ १ ॥
तन-
मान्यस्तस्य च राज्ञः प्राज्ञः प्रज्ञाकरः पुरः श्रेष्ठी । प्रज्ञावती सतीषु प्रथमा प्रथिता प्रियतमाऽस्य ॥ २ ॥

भगवतीवृत्तौ तु उद्दिष्टा-अमावास्या इत्युक्तं ततोऽष्टम्यादिपर्वस्वेव पोषधः कार्यो न शेषदिवसेष्विति, मैवं, नायमेकान्तः, सुबाह्वादिभिर्दशभिः श्रावकैः पर्वान्यदिनेऽपि पौषधस्य कृतत्वात्, तदुक्तं विपाकश्रुताङ्गद्वितीयश्रुतस्कन्धे प्रथमाध्ययने-"तए णं से सुबाहुकुमारे अन्नया कयाइ चाउद्दसट्ठमुद्दिट्ठपुण्णिमासिणीसु जाव पोसहसालाए पोसहिए अट्ठमभत्तिए पोसहं पडिजागरमाणे विहरइ" त्ति, एवं चाष्टमकरणाद्दिनत्रयं संलग्नपोषधग्रहणात्पर्वान्यदिनेऽपि पोषधोऽनुमत एव, किञ्च-यदि पर्वान्यदिने पोषधकरणमविधिरेव स्यात् तदाऽभयकुमारश्रीविजयनृपादीनां तत्तत्कार्योत्पत्तौ दिनत्रयसप्तकादिपोषधोपवासैः कथं नामेष्टसिद्धिर्बभूव?, अविधिकरणे हि प्रत्युतापाय एव संभाव्येत यथाऽकाले स्वाध्यायकरणे, न च तेषामिष्टसिद्धिभवनं सन्दिग्धमिति वाच्यं, ज्ञाताधर्मकथाङ्गवसुदेवहिण्डिप्रभृत्यागमे साक्षादुक्तत्वात्, अपि च-"सव्वेसु कालपव्वेसु पसत्थो जिणमए तहा (वो) जोगो। अट्ठमिचउद्दसीसुं नियमेण हविज्ज पोसहिओ॥१॥" इत्याद्यावश्यकचूर्ण्यादौ पर्वसु नियमेन पोषधाभिधानात् शेषदिवसेषु अनियमेन पौषधग्रहणमायाति न तु तन्निषेधः, न च क्वापि आगमे तन्निषेधः श्रूयते, ननु "पौषधोपवासातिथिसंविभागौ तु प्रतिनियतदिवसानुष्ठेयौ न प्रतिदिवसाचरणीयौ" इतिश्रीहरिभद्रसूरिकृतावश्यकबृहद्वृत्तिश्रावकप्रज्ञप्तिवृत्त्यादौ साक्षादुक्त एव तन्निषेध इति चेत् अहो ग्रन्थकाराभिप्रायज्ञता भवतः, नहीदं वचनं पर्वान्यदिनेषु पोषधनिषेधपरं, किन्तु पर्वसु पोषधकरणनियमपरं, यथा आवश्यकवृत्त्यादौ श्राद्धपञ्चमप्रतिमाधिकारे 'दिवैव ब्रह्मचारी न तु रात्रौ' इति वचनं दिवसे ब्रह्मचर्यनियमार्थं न तु रात्रौ ब्रह्मनिषेधार्थं, अन्यथा पञ्चमप्रतिमाराधकश्राद्धेन

निर्जल एवोपवासो विधेयः, तदशक्तौ सजलोपवासाचामाम्लाद्यपि कृत्वा पर्वसु पौषधव्रतं स्वीकार्यमेव, प्रायः सर्वसावद्यव्यापारवर्जनेन बहुफलत्वात्, यतः—"सामाइअपोसहसंठिअस्स जीवस्स जाइ जो कालो । सो सफलो बोद्धव्वो सेसो संसारफलहेऊ ॥ १ ॥" पर्वत्वं च द्वितीयापञ्चम्यादेरपि, यतः—"बीआ पंचमिअट्ठमि एगारसि चउद्दसी पण तिहीओ । एआउ सुअतिहीओ गोअमगणहारिणा भणिआ ॥ १ ॥ बीआ दुविहे धम्मे पंचमि नाणे अ अट्ठमी कम्मे । एगारसि अंगाणं चउद्दसी चउद्दपुव्वाणं ॥ २ ॥" भगवद्वचोऽप्येवं श्रूयते—"भयवं बीअपमुहासु पंचसु तिहीसु विहिअं धम्माणुट्ठाणं किंफलं होइ ?, गोअमा ! बहुफलं होइ, जम्हा एआसु तिहीसु पाएणं जीवो परभवाउअं समज्जिणइ तम्हा तवोविहाणाइ धम्माणुट्ठाणं कायव्वं जम्हा सुहाउअं समज्जिणइ"त्ति, पञ्चम्याश्च पर्वत्वं महानिशीथेऽप्युक्तं—"संते बलविरियपुरिसकारपरक्कमे अट्ठमिचउद्दसीनाणपंचमीपज्जोसवणाचाउम्मासिएसु चउत्थट्ठमछट्ठे न करिज्जा पच्छित्त"मिति, निशीथचूर्णावपि—"पुन्निमाए पंचमीए दसमीए एवमादिएसु पव्वेसु पज्जोसवेअव्वं न अपव्वेसु"त्ति, एकोनविंशपञ्चाशकवृत्त्यादिष्वप्यनेकग्रन्थेषु पञ्चमी भणिताऽस्ति, नन्वेवं सति त्रिपर्वी चतुष्पर्वी पञ्चपर्वी षट्पर्वी वा तपःशीलादिनाऽऽराधनीया ?, उच्यते स्वशक्त्यपेक्षं सर्वा द्वे एकां वा तामाराधयतां न कश्चिद्दोषः, ननु 'चाउद्दसट्ठमुद्दिट्ठपुण्णिमासिणीसु पडिपुण्णं पोसहं अणुपालेमाणा' इत्युक्तं सूत्रकृदङ्गादौ श्रावकवर्णके, तद्व्याख्या चैवं—चतुर्दश्यष्टम्यौ प्रतीते उद्दिष्टासु—महाकल्याणकसम्बन्धितया पुण्यतिथित्वेन प्रख्यातासु पौर्णमासीषु तिसृषु चतुर्मासकसम्बन्धिनीष्वित्यर्थः,

'संथारुच्चारे'ति, संस्तारो–दर्भतृणकम्बलीवस्त्रादिः उपलक्षणत्वात् शय्यापीठफलकादि च 'उच्चार'त्ति उच्चार-प्रश्रवणभूमयो–द्वादश विण्मूत्रस्थण्डिलानि, तत्रासहिष्णोः पोषधागारस्यान्तः षट् सहिष्णोश्च बहिः षट् जघन्यतोऽप्येकैकहस्तमानानि अधस्त्वङ्गुलचतुष्कमानानि तेषामुपलक्षणत्वान्निष्ठ्यूतश्लेष्मप्रस्वेदादिस्थण्डिलानां च विधिः–सम्यक्प्रत्युपेक्षणप्रमार्जनादिरूपस्तत्र प्रमादः, अयमर्थः–संस्तारकशय्यादौ चक्षुषाऽप्रत्युपेक्षिते दुष्प्रत्युपेक्षिते चोपवेशनादि कुर्वतः प्रथमोऽतीचारः १, एवं रजोहरणादिनाऽप्रमार्जिते दुष्प्रमार्जिते वा द्वितीयः २, एवमुच्चारप्रश्रवणभूमीनामपि द्वावतीचारौ वाच्यौ, अत उक्तं 'तह चेव'त्ति तथा चैव भवत्यनाभोगो-अनुपयुक्ततायां सत्यामित्यतिचारचतुष्टयं ४, तथा 'पौषधविधिवैपरीत्यं' पोषधस्य चतुर्विधस्यापि यथाप्रतिपन्नस्य विधिः–सम्यक्पालनं तस्य वैपरीत्यं–अन्यथाकरणमसम्यक्पालनमित्यर्थः यथाऽऽहारादिपोषधे कृते सति क्षुत्तापा-र्त्ततया पोषधे पूर्णे स्वार्थमाहारपाकदेहसत्कारादि इत्थमित्थं कारयिष्ये इत्यादि ध्यायतीति पञ्चमोऽतीचारः, यत्सूत्रम्–"अप्पडिलेहिअदुप्पडिलेहिअसिज्जासंथारए १ अप्पमज्जिअदुप्पमज्जिअसिज्जासंथारए २ अप्पडिले-हिअदुप्पडिलेहिअउच्चारपासवणभूमी ३ अप्पमज्जिअदुप्पमज्जिअउच्चारपासवणभूमी ४ पोसहोववासस्स सम्मं अणणुपालणया ५" "भोअणाभोए"त्ति पाठान्तरं वा तत्र भोजने–आहारे उपलक्षणत्वाद्देहसत्कारादौ चाभोगः–उपयोगो भोजनाभोगः, कदा पोषधं पूर्णं भविष्यति येनाहं स्वेच्छया भोजनादि करिष्ये इत्यादि ध्यायतः पञ्चमोऽतिचारः ५, एषु पञ्चस्वतिचारेषु पोषधविधेर्वैपरीत्ये सति, शेषं प्राग्वत्, पोषधव्रते च शक्तौ सत्यां

कस्माद्दोषः?, उच्यते, विभूषालोभादिनिमित्तत्वेन सामायिके तयोरपि निषिद्धत्वात्, आहारस्य त्वन्यथा शक्त्यभावे धर्मानुष्ठाननिर्वाहार्थं साधुवदुपासकस्याप्यनुमतत्वात्, उक्तं चावश्यकचूर्णौ पौषधव्रताधिकारे—"तं सत्तिओ करिज्जा तवो अ जो वन्निओ समणधम्मे। देसावगासिएणं जुत्तो सामाइएणं वा ॥ १ ॥" निशीथभाष्येऽप्युक्तं पौषधिनमाश्रित्य—"उद्दिट्ठकडंपि सो भुंजे" इति, निशीथचूर्णौ च "जं उद्दिट्ठकडं तं कडसामइओऽवि भुंजइ" त्ति, इदं च पौपधसहितसामायिकापेक्षयैव संभाव्यते, तद्रहिते सामायिके मुहूर्त्तमानत्वेन पूर्वाचार्यपरम्परादिना आहारग्रहणस्याक्रियमाणत्वात्, श्रावकप्रतिक्रमणसूत्रचूर्णावप्युक्तम्—"जदि देसओ आहारपोसहिओ तो भत्तपाणस्स गुरुसक्खिअं पाराविता आवस्सिअं करित्ता ईरिआसमिईए गंतुं घरं ईरिआवहिअं पडिक्कमइ, आगमणालोअणं करेइ, चेइए वंदेइ, तओ संडासयं पमज्जित्ता पाउंछणे निसीअइ, भायणं पमज्जइ, जहोचिए अ भोअणे परिवेसिए पंचमंगलमुच्चारेइ, सरेइ पच्चक्खाणं, तओ वयणं पमज्जित्ता—असरसरं अचवचवं अदुअमविलंबिअं अपरिसाडिं। मणवयणकायगुत्तो भुंजइ साहुव्व उवउत्तो ॥ १ ॥ जायामायाए भुच्चा फासुअजलेण मुहसुद्धिं काउं नवकारसरणेण उट्ठाइ देवे वंदइ वंदणयं दाउं संवरणं काउं पुणोवि पोसहसालाए गंतुं सज्झायंतो चिट्ठइ" त्ति। अतो देशपोपधे सामायिकसद्भावे यथोक्तविधिना भोजनमागमानुमतमेव दृश्यते, पोषधग्रहणविधिस्तु पोषधप्रकरणादेरवसेयः। अथास्यातिचारान्निन्दति—

संथारुच्चारविही पमाय तह चेव भोइणाभोए। पोसहविहिविवरीए तइए सिक्खावए निंदे ॥ २९ ॥

न समर्थो धारयितुमिति, आवश्यक-
वाचयति धर्मध्यानं ध्यायति यथैतान् साधुगुणानहं मन्दभाग्यो सामायिकार्थस्य पौषधेनैव गतत्वेऽपि
चूर्णिश्रावकप्रज्ञप्तिवृत्त्यादावपि सर्वमेतदुक्तं, इह च सावद्यवर्जनरूपस्य एतेषां चाहारादिपदानां चतुर्णां देश-
पौषधसामायिकलक्षणव्रतद्वयाराधनाभिप्रायादिना फलविशेषोऽभ्यूह्यः, प्रागुक्ता एवाष्टौ, द्विक-
सर्वविशेषितानामेकद्व्यादिसंयोगजा अशीतिर्भङ्गा भवन्ति, तथाहि–एककसंयोगाः भङ्गा भवन्ति, सर्वे चतु-
संयोगाः षट्, एकैकस्मिंश्च द्विकसंयोगे दे दे १ दे स २ स दे ३ स स ४ एवं चत्वारो स दे दे ५ स दे स ६ स
विंशतिः, त्रिकयोगे देशसर्वापेक्षया दे दे दे १ दे दे स २ दे स दे ३ दे स स ४ देशसर्वापेक्षया षोडश
स दे ७ स स स ८ एवमष्टौ अष्टौ भवन्ति, सर्वे द्वात्रिंशत्, चतुष्कयोग एकस्तत्र स दे स ६ दे स स दे ७
भङ्गाः–दे दे दे दे १ दे दे दे स २ दे दे स दे ३ दे दे स स ४ दे स दे दे ५ दे स स दे दे १३ स स दे स १४
दे स स स ८ स दे दे दे ९ स दे दे स १० स दे स दे ११ स दे स स १२ पूर्वाचार्यपरम्परया
स स स दे १५ स स स स १६, एवं सर्वेषां मीलनेऽशीतिर्भङ्गाः स्युः, एतेषां मध्ये सामायिकेन सहा-
सामाचारीविशेषेणाहारपौषध एव देशसर्वभेदाद्द्विधाऽपि सम्प्रति क्रियते, निरवद्याहारस्य ग्रहणात्, शेषास्त्रयः
विरोधदर्शनात्, सर्वसामायिकवता साधुनोपधानतपोवाहिश्रावकेणाप्याहारस्य "सावज्जं जोगं पच-
पौषधाः सर्वत एवोच्चार्यन्ते, देशतस्तैः प्रायः सामायिकस्य विरोधात्, यतः सामायिके निरवद्यदेहसत्कारव्यापारयोः
क्खामी" त्युच्चार्यते, शरीरसत्कारादित्रये तु प्रायः सावद्यो योगः स्यादेव, ननु

सययं धणयं व तो । सधे विहीइ गिण्हंति, अहो धम्मेगछत्तया ॥ २५ ॥ धणओ धणदाणेण, सम्माणेण य सव्वओ । थिरीकरेइ धम्मंमि, सव्वं साहम्मिअं जणं ॥ २६ ॥ किच्चा मणीहिं णेगाणं, उवगारं वयं इमं ॥ आराहिंतो सहस्सारं, पत्तो तत्तो सिवंपि सो ॥ २७ ॥ धणयकहाणयमेअं निसुणिअ तस्साणुसारओ सुअणा ! । देसावगासिअवयं अणवरयं धरह दुभवहिअं ॥ २८ ॥

॥ इति दशमव्रते धनदकथा ॥

उक्तं दशमव्रतं, साम्प्रतं पौषधोपवासाख्यमेकादशं शिक्षाव्रतं तु तृतीयं, तत्र पोषं-पुष्टिं प्रस्तावाद्धर्मस्य धत्ते इति पोषधः-अवश्यमष्टम्यादिपर्वदिनानुष्ठेयो व्रतविशेषस्तेनोपवसनं-अवस्थानं पोषधोपवासः, अथवा पौषधं-पर्वदिनमष्टम्यादि तत्रोपवासः-अभक्तार्थः पौषधोपवासः, इयं च व्युत्पत्तिरेव प्रवृत्तिस्त्वस्य शब्दस्याहारशरीरसत्काराब्रह्मचर्यव्यापारपरिवर्जनेषु, समवायाङ्गवृत्तौ श्रीअभयदेवसूरिभिरेवमेव व्याख्यातत्वात्, पौषधश्चाहार १ शरीरसत्कार २ ब्रह्मचर्य ३ अव्यापार ४ भेदाच्चतुर्द्धा, पुनरेकैको द्वेधा-देशसर्वभेदात्, एवमष्टौ भङ्गाः, तत्रैकाशननिर्विकृत्यादिकरणं देशत आहारपोषधः १ सर्वतस्त्वहोरात्रं यावच्चतुर्विधाहारवर्जनरूपः २, एवं शरीरसत्कारपौषधादयोऽपि देशतः सर्वतश्च वाच्याः, यदा देशतः पौषधं करोति तदा सामायिकं करोति वा न वा, यदा तु सर्वतः करोति तदा सामायिकं नियमात्करोति, अकरणे तु तत्फलेन वञ्च्यते, सर्वतः पोषधं चैत्यगृहे वा साधुमूले वा गृहे वा पौषधशालायां वोन्मुक्तमणिसुवर्णः प्रतिपद्य पठति पुस्तकं

तत्थ तवेअणा तस्स, नट्ठा सीअव्व तक्खणा। भीअव्व तीइ अग्गीए, अहो वाहिविचित्तया ॥ १० ॥ तेणग्गिणा अणेगाणि, मंदिराणि गुरूणिवि। तक्खणा तणगिहाणीव, छारीभूआणि सव्वओ ॥ ११ ॥ एवं दहंते दहणे, सव्वसंहारकारणे। अवइन्ने जुगंतेव्व, अच्चासन्नेवि आगए ॥ १२ ॥ सयणेहिं जणेहिंपि, पिल्लिओवि बहुं २। वयभंगभया नेव, निग्गओ धणओ गिहा ॥ १३ ॥ युग्मम् ॥ किं तु जं होइ तं होउ, सयं अंगीकयं वयं। कहं भंजेमि जाणंतो, दढत्तं धम्मजीविअं ? ॥ १३ ॥ इय चिंतित्तु सागारं, पच्चक्खाइत्तु उत्तमो। ठिओ तत्थेव साहुव्व, साहुसाहसमेरिसं ॥ १४ ॥ तस्स तद्धम्ममाहप्पमणप्पमिव दंसिउं। गिहं पयक्खिणीकाउं, वज्जग्गी अग्गओ गओ ॥ १५ ॥ वज्जग्गी संमुहग्गीए, विज्झाइ अहवा सयं। विसस्स वज्जित्तु विसं, पायसो नत्थि ओसहं ॥ १६ ॥ अजाणणाए तज्जत्ती, न कया तम्मि केणवि। तत्तो सो परिसंतो व, उवसंतो सयं कमा ॥ १७ ॥ खारसारजलापुन्ने, दढभूभागसागरे। दीवं व दीसए दिव्वं, भवणं धणयस्सऽहो ! ॥१८॥ दड्ढेवि सव्वओ पासे, आवासे धणयस्सऽहो। धूममित्तंपि नो लग्गं, पंकं व गणयंगणे ॥ १९ ॥ गयं गेहं ठिअं देहं, इअ राया पया तया। ससोआ सप्पमोआ य, पत्ता निअनिए पए ॥ २० ॥ धणयस्स सरूवं तं, विआणित्तु जणुत्तयं। उवसंतपुव्वकोवो, भूवो अइचमक्किओ ॥ २१ ॥ जाए पहाए राएणं, आहवित्ता तओ इमो। पुच्छिओ वच्छ ! दुप्पिच्छे, किं ठिओसि पलीवणे ? ॥२२॥ तेणावि तंमि सव्वंमि, सरूवंमि परूविए। तं नरेसो पसंसेइ, संसेइ निअचिंतिअं ॥२३॥ अणप्पधम्ममाहप्पपिक्खणेण य तक्खणे। राया पया य संजाया, सम्मं धम्मंमि सायरा ॥ २४ ॥ देसावगासिअवयं,

रिअपासाओ, तओ रन्नो जणा तक्खणा गया धणयाकारणत्थं, जणाविअं धणयस्स सव्वं सरूवं निवस्स, पल्लविओ तेणवि तेसिं गहिअनियवयअभिग्गहो, तओ तेहिं बहु २ प्पयारेहिं पन्नविओ जाव वंतरुव्व गहियदेहाओ न निस्सरेइ सो कहवि निअगिहाओ ताव तेहिं रुट्ठेहिं दुट्ठेहिं पिसुणव्व तहा निवपुरओ किंपि जंपिअं जहा जमव्व जाओ अइतिव्वरोसावेसो नरेसो, आइट्ठं च तेण तेसिं-रे मज्झ पाणंतसंकडेवि उवेहाकरं (चोरियाकरं) व तं बंधिऊण आणेह लहुं जेणं दंसेमि आणाभंगफलं सुबहुं, तओ ते बुभुक्खिअव्व निमंतिआ मित्ता इव आमंतिआ जोहा इव उच्छाहिआ भव्वा इव पडिबोहिआ गहगहिआ आगया जाव तं बंधिउं तग्गिहासन्नं ताव जं जायं तं सुणेह-इओ अ जीअलोअस्स, अणत्थबहुलत्तओ। विचित्तयाइ दिव्वाइ, गईएवि विसेसओ ॥ १ ॥ तत्थ संतत्थनिस्सेसमणुस्सोवि सुदुस्सहो। वज्जघायव्व वज्जग्गी, अकम्हा चेव उट्ठिओ ॥ २ ॥ सहाओ तस्स संजाओ, महावाओवि सव्वओ। तक्कालं कुनरिंदस्स, कुमंतिव्व सुतिव्वओ ॥३॥ दुट्ठस्स दुट्ठमित्तो उ, विसिट्ठस्स विसिट्ठओ। सरिसेहिं सुदूरेवि, रच्चंति सरिसा धुवं ॥ ४ ॥ जलंतो जलणो सव्वभक्खणो रक्खसोव्व तो। निरंकुसो न केणावि, सक्किओ विणिवारिउं ॥ ५ ॥ वज्जग्गिमुज्जआ लोआ, विज्झवंति जहा जहा। तहा तहा स वड्ढेइ, कावि हा विवरीअया? ॥ ६ ॥ लोआ सोआउरा तत्तो, भवणाणि धणाणि अ। कुंडुबाणिवि उज्झित्ता, झत्ति नट्ठा दिसो दिसिं ॥ ७ ॥ तेणग्गिणा निवजणा, तक्खणाउ घणा इव। पवणाओ पलाणा उ, मुहाभूअमणोरहा ॥ ८ ॥ विम्हारिअसिरोपीडो, निवापीडोवि गेहओ। निग्गओ अग्गिभीईए, मरणं हि महाभयं ॥९॥

शाखिनां सफलता शनैः २। तुष्यतां क्षितिभृतां तु दृष्टिभिः, तत्क्षणादपि नृणां फलोदयः ॥१॥" अन्नया पुव्व-पुन्नवसओ गओ सो सुगुरुसगासे, भणिओ अ तेहिं असंबन्धबन्धवेहिं किवामहन्नवेहिं–भो भद्द! भद्दकामेण अमुद्दरुद्दचिंतासमुद्दपडिएणावि धम्मो कायव्वो, यतः–"व्याकुलेनापि मनसा धर्मः कार्योऽन्तराऽन्तरा। मेढीबद्धोऽपि हि भ्राम्यन्, घासग्रासं करोति गौः ॥ १ ॥ युगपत्समुपेतानां कार्याणां यदतिपाति तत्कार्यम्। अतिपातेष्वपि फलदं फलदेष्वपि धर्मसंयुक्तम् ॥२॥" एवमुवइट्ठो सवित्थरं सुगुरूहिं सम्मत्तरम्मो सावयधम्मो, उवविट्ठो अ तस्स चित्तंमि भावणरसेण जडिओ कंचणंमिव मणी, तओ जहासत्ति सम्मत्ताइ पडिवज्जित्ता तेण पडिवन्नं एवं–सव्वत्थ सव्वकालेवि, सवेसिं सुकरं इमं। देसावगासिअवयं, गहियव्वं मए सया ॥ १ ॥ सकज्जरज्जकज्जेहिं, आउलाणं अहोनिसं। अम्हारिसाण उचिअं, वयं देसवगासिअं ॥ २ ॥ अहो जिणिंदधम्मस्स, पहो कोवि सुहावहो। अम्हारिसावि वच्चंति, निच्चधम्मि जहासुहं ॥ ३ ॥ एवं भाविअहिअओ गओ सो गिहं निअयं, गहेइ अहोनिसं देसावगासिअं वयं, अन्नया रन्नो उचिअकिच्चाइ किच्चा जामिणिबीअजामे पवन्नो सो निअवासभवणं, पडिवन्नो अ तं वयं रविउदयं जाव निअभवणाओ निग्गमणवज्जणरूवं, इत्तो अ असारयाए सरीरस्स रोगबहुलयाए सरीरस्स विचित्तयाए सरीरस्स विचित्तयाए कम्मस्स जाया अकम्हा चेव महीसस्स सीसवेयणा, चेयणावि जीसे तिव्वत्तणेण नट्ठव्व जाया, तीए इंदासणीएव्व तिव्वाए छिज्जइव्व भिज्जइव्व जलइव्व दलइव्व फुट्टइव्व तुट्टइव्व तस्स सीसं, तओ राइणा आणाविअं निअकोसाओ तव्वेयणाहरं रयणवरं भंडा-

सबहुमाणं धणयमाहवित्ता सम्मं सरूवं च परूवित्ता पुच्छिअं-भो सच्चमेव वुच्चसु किं नु तए तं कंकणं न गहिअं?, वणिणो कागिणिगणणानिउणा इक्काइ कागणीएवि। लोहक्खोहिअहिअया कुणंति वीसत्थदोहमवि ॥ १ ॥ इह इत्तिअमित्तंमिवि वित्तंमि तुमं तु खोहिओ न कहं? । किं तुह परधणगहणे निअमो संका व मह जाया? ॥ २ ॥ तेणवि भणिअं सामी! निअमो मह कोवि नऽन्नधणगहणे?। तुह संकावि न कावि हु पडिअग्गहणे हि को दोसो? ॥ ३ ॥ किं तु परवित्तगहणं अणओ अणओ अ दविणखयजणओ । को वा दुन्नयकारी सुपुरिससद्दं ससीहंते? ॥ ४ ॥ तम्हा कयावि न कयं इमंमि जम्मंमि जं मए पुव्विं। तं परदविणादाणं पावट्ठाणं कहं कुवे? ॥ ५ ॥ तओ रन्ना चिंतिअं-अहो उत्तमपगइत्तणमिमस्स-दढनियमनिबद्धावि हु पधाविरा केवि कुप्पहंमि सया। निअमं विणावि एगे संजमिआ निअयपगईए ॥ १ ॥ वायससाणखराई निवारिआवि हु हवंति असुइरई। हंसकरिसीहपमुहा न कयावि पणुल्लिआवि पुणो ॥ २ ॥ तओ उवलद्धविसुद्धतप्परिक्खणेण भूधणेण संजायएगंतविस्सासो एसो निअभंडारिअपए रज्जपएव अपुव्वपव्वपुव्विं ठाविओ भणिओ अ सबहुमाणं-भो! भरेहि मह भंडारं कणेहिं कोट्ठागारं व अपुव्व २ तररयणेहिं, गिण्हिज्जमाणमाणिक्काणं दसमं २ माणिक्कं तुमए गहिअव्वं अपुव्वंपि सव्वंति, विहिओ अ तस्स पसाओ, अहो! नयमग्गस्स संगस्सव निसग्गसुहरससग्गस्स अणग्गलं किंपि इहंपि फलं, तओ तेण परिक्खिअ २ कमेण संगहिआणि रन्नो सिरिहरे रयणायरे इव अणेगाणि अपुव्वरयणाणि, सोवि दसंसमणिमित्तसंगहेण जाओ कमेण मणिकोडीसरो, यतः-"जायते जलदवृन्दवृष्टिभिः,

रयणत्तयं, परिक्खिअं च सकोउगं पढममणिदुगंपि फोडाविऊण जाव मज्झे जहा धणएण भणिअं तं तहेव सवं, तत्तो सो भूवित्तो अइविम्हिअचित्तो चिंतिउं पवत्तो—एस एरिसविसेसन्नू जइ भंडारिअपए ठविज्जइ तो नूणं एएण धणएण परिक्खिअ २ संगहिएहिं उक्किट्ठरयणेहिं चेव मह भंडारो इंदभंडारोव भरिज्जइ, नवरं इमस्स हत्थसुद्धी धम्मिअस्स चित्तसुद्धीव कहमवि सम्मं जाणिअवा, अहवा परिक्खा एसावि विआणिस्स- इत्ति चिंतंतो भूकंतो पंचंगपसत्थनेवत्थपहिरावणपुविं सवपरिक्खगाण अग्गेसरत्तपए तया तं ठावेइ सबहुमाणं पावेइ महिमं निस्समाणं, कमेण मरणावसाणयाए जीवलोअस्स अप्पडिआरत्तआए आउअस्स उवरए जणए धण- एण पडिवन्ने गिहनाहत्ते गहनाहत्ते व रविणा, अन्नंमि दिणंमि धणयपरिक्खट्ठा आइट्ठा अत्तनरा नराहिवेण, तओ तेहिं अंतोजडिअकोडिअमुल्लमहल्लमणिगणं कणगकंकणं इक्कं मुक्कं धणयगिहासन्नपहंमि नहंमि व रविमंडलं झलहलंतकंतिमंडलं, सयं ठिआ कत्थवि कुड्डाइअंतरे ते गुत्तवित्तीए, इओ अ तत्थ समागओ धणओ नियपुरि- ससहिओ, तं निहालिऊण विम्हिओ वाहरेइ—अहह केणावि पाडिअं इत्थ इमं हहा महाहाणी कस्सवि सं- पन्ना इच्चाइ भणंतो तं परस्स अत्थं पच्चक्खमणत्थं व मन्नंतो पासट्ठिअनिअपुरिसेहिं विविहउत्तिजुत्तिविन्ना- सेहिं बहुपिल्लिओवि साहुव सवहा अक्खोहिओ पलोअणत्थमवि अणिट्ठपत्थरखंडं व हत्थे अगिण्हित्ता गओ सगिहं, जओ—"तो पढिअं तो गुणिअं तो मुणिअं तो य चेइओ अप्पा। आवडिअपिल्लिआमंतिओवि जइ न कुणइ अकज्जं ॥ १ ॥" तं तस्स सरूवं रन्नो विन्नविअं तेहिं जहट्ठिअं, तओ अइअच्छरिअमणेण भूधणेण पहाए

तिण्हं पुण पढमरयणं पिसुणपेसलवयणं व वहेइ अंतो कलुसत्तणं उप्पत्तिसमए मज्झट्ठिअपंकिलजलेण बिइयं तु गब्भिअं मंडुकीपुट्टं व मंडुकीए कहंचि दगमट्टीसंजोएण उप्पत्तिसमए संमुच्छिआए तओ अंतो असारत्तणओ थेवेणवि संघसेण इमाणि दुन्निवि पक्कदाडिमफलं व तडिक्ति फुट्टिहिंति तेण विसेसमुल्लं न किंपि लहंति, तइयं पुण इमं रयणं दिव्वरयणं व अणप्पपभावं पासट्ठिअंमि इमंमि न पभवंति नरस्स वंतररक्खसाइ खुद्दुवद्दवा दवा इव वारिमज्झट्ठिअस्स न उब्भवंति केवि कुट्ठदुट्ठजरभगंदराइ रोगा सोगा इव समग्गसंजोगाणुगयस्स न दुक्खाविंति सुतिक्खाऽवि सप्पा अवि सप्पसरा सरा इव सन्नाहसणाहस्स न हवंति खणंपि समरगणंमि संमुहा महावेरिनिवहा गहा इव गहाहिवस्स तम्हा नत्थि इमस्स मुल्लं अन्नं वा कत्थवि तुल्लं, अहवा नाणं पच्चयसारंति पच्चक्खं चेव अवधारउ देवो इमस्स परिक्खं, देव! इत्थेव कलमसालीए भराविज्जउ थाली मोआविज्जंतु सालिभक्खिणो सव्वओ पक्खिणो, थालीसालीए उवरि इमंमि मुक्के इक्कोवि कणो जइ पक्खीहिं भक्खिज्जइ ताव धुवं वंचगस्स व मह वयणं सच्चंपि वितहं अन्नह सव्वन्नुस्स व सव्वंपि अवितहं, तओ धणयस्स वद्धावणत्थमिव महीवइणा आणाविआ सालिभरिआ थालिआ मुक्कं च नालिकेरंव तीसे उवरि तं माणिक्कं मिलिहआ य बुभुक्खिआ कीरसाहलिआइआ पक्खिआ, ते पुण तं सव्वओवि ससंभमं परिब्भमंति न पुण गहा इव मेरुगिरिं परामुसिउंपि सक्कंति, तंमि दूरीकए पुण सव्वेवि ढुक्का रंका इव तब्भक्खणकए, तओ जायचमक्केण महीसक्केण रयणवणिआण मुहमग्गिअबहुकोडिदीणाराइमहामुल्लमुल्लदाणसम्माणपुव्वयं गहिअं तं

तेहिवि बहु निहालिऊण साहिअं–सामि! इमं महातेअत्तणेण निरुवमं पढमिल्लं बीयं च रयणकोडिमुल्लं
तइअं पुण अप्पतेअत्तणेण अप्पमुल्लं, जओ रयणाण तेयगुणेण गहाणमिव पहाणअपहाणत्तणं, तंमि समयंमि ईसिं
हसिओ धणओ रन्नो आसन्ननिविट्ठो दिट्ठो अ रन्ना पुट्ठो निब्बंधेणं तक्कारणं पभणेइ पडिवयणं–दक्खत्तणाभि-
माणा जणा असेसावि पायसो नडिआ। दक्खत्तणं हि सम्मं जिणिंदधम्मं व अइदुलहं ॥ १ ॥ तत्थवि रय-
णपरिक्खा दुल्लक्खा देव! देवयाणंपि । किं पुण इह मणुआणं सिक्खिअविन्नाणअणुआणं ॥ २ ॥ तहविहु
जह विन्नायं विन्नवइस्सामि सामिपायपुरो। अगणिज्जा जाईओ जए मणीणं दुमाणं व ॥३॥ तेसिं विविहा पहावा
रेहपहावन्नबिंदुपमुहेहिं । तत्थवि इत्थ पसिद्धा जाईउ इमाउ नामेहिं ॥४॥ पद्मराग १ पुष्पराग २ मरकत ३ कर्केतन-
४ वज्र ५ वैडूर्य ६ सूर्यकान्त ७ चन्द्रकान्त ८ जलकान्त ९ नील १० महानील ११ इन्द्रनील १२ रागकर १३-
विभवकर १४ ज्वरहर १५ रोगहर १६ शूलहर १७ विषहर १८ शत्रुहर १९ रुचिकर २० लोहिताक्ष २१ मसारगल्ल-
२२ हंसगर्भ २३ विद्रुम २४ अङ्क २५ अञ्जन २६ रिष्ठ २७ मुक्ताफल २८ श्रीकान्त २९ शिवकान्त ३० शिवङ्कर-
३१ प्रियङ्कर ३२ भद्रङ्कर ३३ प्रभङ्कर ३४ आभङ्कर ३५ चन्द्रप्रभ ३६ सागरप्रभ ३७ प्रभानाथ ३८ अशोक ३९-
वीतशोक ४० अपराजित ४१ गङ्गोदक ४२ कौस्तुभ ४३ कर्कोट ४४ पुलक ४५ सौगन्धिक ४६ सुभग ४७-
सौभाग्यकर ४८ धृतिकर ४९ पुष्टिकर ५० ज्योतीरस ५१ श्वेतरुचि ५२ गुणमालि ५३ हंसमालि ५४ अंशुमालि-
५५ देवानन्द ५६ क्षीरतैल ५७ स्फटिक ५८ अहिमणि ५९ चिन्तामणयः ६० इति ६० रत्नजातयः, एएसिं

विषधरादिविषं निजमन्त्रप्रयोगेण दंशे एवानीयते, एवं धार्मिकेणाप्येतद्व्रतप्रयोगेण बहुसावद्यव्यापारः सङ्क्षिप्यते, तत्सङ्क्षेपे च कर्मणामपि सङ्क्षेपस्ततश्च क्रमेण निःश्रेयसावाप्तिरित्यष्टाविंशगाथार्थः ॥ २८ ॥ अत्रायं नृपकोशाध्यक्षधनदसम्बन्धः—

चक्कपुरंमि पुरंमि चक्किपुरंमिव समिद्धिपउरंमि । हरिकेऊ केऊ इव रिऊण सुविऊ निवो आसी॥१॥ लोअठिइलोअवयणिज्जजाणणट्ठा स नट्ठचरिआए । चरइ पुरे धुत्तो इव ठिई हि एसा नरेसाणं ॥ २ ॥ रत्तिं कयाइ गुत्तं निहालए बहुमिलंतजणघट्टं । चउहट्टंमि पयट्टं सो नट्टं दिव्वनट्टं व ॥ ३ ॥ धणसारसिट्ठितणओ धणनामेणं गुणकलानिलओ । कलभोव्व उन्नयकरो लीलायंतो तहिं पत्तो ॥ ४॥ सामन्नो कोवि इमो इअ भिच्चस्स व निवस्स सो खंधे । हत्थेण देहभारं दाउं पिक्खेइ पिक्खणयं ॥ ५ ॥ पिक्खणयंते पिक्खणकराण धणएण दाउ धणमुचिअं । तंबोलजुओ रन्नो दिन्नो सोवन्नदीणारो ॥ ६ ॥ खणमित्तभारभाडयनिमित्तमवि किंपिऽहो कयन्नुत्तं । निअगोवणाय गहिओ स निवेणवि मग्गणव्व लहुं ॥ ७ ॥ युग्मम् ॥ धणयस्स नएण निवो तुट्ठो लीलाइ तह पहायंमि । तं आहवेउं हसिउं साहइ सज्जेसु मह खंधं ॥ ८ ॥ धणिअं धणओवि तओ चमक्किओ संकिओ अ समयन्नू । भासइ भूभारखमे तुह खंधे को णु मह भारो ? ॥९॥ तो तं विसेसतुट्ठो निवइविसिट्ठो ठवेइ पुत्तपए । उचिअवयणं हि चिंतारयणं व न किं च विअरेइ ? ॥१०॥ अन्नया समागया तत्थ रयणवणिआ उवणीअं च तेहिं रन्नो रयणत्तयं तिलोअणलोअणत्तयं व अइदिप्पंतयं, रन्नावि आइट्ठा रयणपरिक्खादक्खा तप्परिक्खट्ठा,

आणवणे पेसवणे सद्दे रूवे अ पुग्गलक्खेवे। देसावगासिअंमी बीए सिक्खावए निंदे ॥ २८ ॥

'आणवणे' त्ति गृहादौ देशावकाशिके कृते सति गृहादेर्बहिः स्थितं किञ्चिद्वस्तु यदा स्वयं प्रस्थितकर्मकरादिपार्श्वा-दानाययति तदानीमानयनप्रयोगः १, गृहादेर्बहिः स्वप्रयोजनाय प्रेषणादिना कर्मकरादिव्यापारणं प्रेष्यप्रयोगः २, गृहादेर्बहिःस्थितस्य स्वकार्यकारणार्थं व्रतभङ्गभिया साक्षादाह्वातुमशक्यतया दम्भादुच्चैः काशितादिशब्देनात्मानं ज्ञापयतः शब्दानुपातः ३, एवं निजरूपं दर्शयतो रूपानुपातः निश्रेण्यादौ क्वाप्यारुह्य पररूपाणि प्रेक्षमाणस्य वा रूपानुपातः ४, गृहादेर्बहिर्लेष्टुकाष्ठादिक्षेपणेन स्वकार्यस्मारणे पुद्गलक्षेपः ५, देशावकाशिकव्रतं हि मा भूद्गमना-गमनादिव्यापारजनितः प्राण्युपमर्द इत्यभिप्रायेण गृह्यते, स तु स्वयं कृतोऽन्येन कारित इति न कश्चित्फले विशेषः, प्रत्युत स्वयंगमनादिव्यापारे ईर्यापथविशुद्ध्यादिगुणाः, कर्मकरादेः पुनरनिपुणत्वानिःशूकत्वादिनेर्या-समित्यभावादिदोष इत्यानयनप्रयोगादयो न कल्पन्ते, स्वयंगमनादिना व्रतभङ्गो मे मा भूदिति व्रतसापेक्षत्वे-नानाभोगादिना च प्रवृत्तेरतिचारता, ननु सर्वव्रतसङ्क्षेपकरणमपि देशावकाशिकमित्युक्तम्, अतिचाराश्च दिग्व्रतसङ्क्षेपकरणस्यैवोक्ता न व्रतान्तरसङ्क्षेपकारणस्य ततस्तेऽपि दर्श्यताम्?, उच्यते, प्राणातिपातविरम-णादिव्रतान्तसङ्क्षेपकरणेषु वधबन्धादय एवातिचाराः, दिग्व्रतसङ्क्षेपकरणे तु क्षेत्रस्य सङ्क्षिप्तत्वादानयनप्रयो-गादयः पृथगपि संभवन्ति, विशेषव्याख्या पूर्ववत्, एतत्फलं चैवम्–यथा हि केनचिन्मान्त्रिकेण सर्वाङ्गगतं

जीवं गृहीतदिग्विरतिव्रतस्य यथाऽभीष्टकालं गृहशय्यास्थानादेः परतो गमननिषेधरूपं सर्वव्रतसङ्क्षेपकरणरूपं वा स्यात् मुहूर्त्ताद्यवधि, आरम्भैकदेशोऽवकाशः २ अवकाशः—अवस्थानं तेन निर्वृत्तं देशावकाशिकं, यदुक्तम्—"एगमुहुत्तं दिवसं राइं पंचाहमेव पक्खं वा। वयमिह धारेइ दढं जावइअं उच्छहे कालं ॥ १ ॥" योगशास्त्रवृत्तौ त्वेवमुक्तं—दिग्व्रतविशेष एव देशावकाशिकव्रतम्, इयांस्तु विशेषो—दिग्व्रतं यावज्जीवं संवत्सरं चतुर्मासीपरिमाणं वा, देशावकाशिकं तु दिवसप्रहरमुहूर्त्तादिपरिमाणमिति, अनेन च व्रतेन सर्वव्रतनियमानां प्रतिदिनं सङ्क्षेपः कार्यः स्यात्, अत एव "सचित्त १ दव्व २ विगई ३ वाणह ४ तंबोल ५ वत्थ ६ कुसुमेसु ७। वाहण ८ सयण ९ विलेवण १० बंभ ११ दिसि १२ ण्हाण १३ भत्तेसुं १४ ॥ १ ॥" इति गाथोक्तनियमान् सम्प्रति प्रतिप्रातः श्राद्धा गृह्णन्ति सायं च सङ्कोचयन्ति प्रत्याख्यानप्रान्ते 'देसावगासिअं पच्चक्खामी'त्यादिना गुरुसमक्षं तद्व्रतं च प्रतिपद्यते, उक्तञ्च—"देसावगासिअं पुण दिसिपरिमाणस्स निच्चसंखेवो। अहवा सव्ववयाणं संखेवो पइदिणं जो उ ॥ १ ॥" स्वापाद्यवसरे च विशेषतः सर्वव्रतसङ्क्षेपरूपमिदं ग्रन्थिसहितादिना स्वीकार्यम्, उक्तं हि दिनकृत्ये—पाणिवहमुसादत्तं मेहुणदिणलाभऽणत्थदंडं च। अंगीकयं च मुत्तुं सव्वं उवभोगपरिभोगं ॥ १ ॥ गिहमज्झं मुत्तूणं दिसिगमणं मुत्तु मसगजूआई। वयकाएहिं न करे न कारए गंठिसहिएणं ॥२॥" 'दिणलाभ'त्ति विद्यमानः परिग्रहो दिनलाभश्च प्रातर्न नियमित इदानीं तमपि नियच्छामीत्यर्थः। अथास्य पञ्चातिचारान्निन्दति—

दिव्वसत्तीए? ॥ ६० ॥
॥ ५९ ॥ तो वंतरोवि भग्गो उवसंतो संधिऊण तस्स सिरं । खिप्पं करेइ सज्जं किमसज्झं दिव्वसत्तीए? ॥ ६० ॥
उक्तञ्च पञ्चमाङ्गे चतुर्दशशतेऽष्टमोद्देशके–"पभू णं भंते ! सक्के देविंदे पुरिसस्स सीसं सपाणिणा असिणा
छिंदित्ता कमंडलुंमि पक्खिवित्तए !, हंता पभू, से कहमिआणिं पकरेइ ?, गोयमा ! छिंदिआ २ व णं पक्खि-
वेज्जा भिंदिआ २ व णं पक्खिवेज्जा कुट्टिआ २ व णं पक्खिवेज्जा चुण्णिआ २ व णं पक्खिवेज्जा तओ पच्छा
खिप्पामेव पडिसंघाइज्जा नो चेव णं तस्स पुरिसस्स किंचि आबाहं वा वाबाहं वा उप्पाएज्ज"त्ति ॥ मुणिवेसप्प-
णपुव्विं तत्तो उवउत्तसासणसुरीए । कयमहिमो हेमसहापउमे निविसेइ रायरिसी ॥ ६१ ॥ तो वाणमंतराइसु
अइविम्हिरपुरनरेसुवि मिलित्ता । नमिअ निविट्ठेसु इमो सम्मं धम्मं पयासेइ ॥ ६२ ॥ मुक्खस्स परमबीअं
साहइ सामाइअं तु सविसेसं । अणुभूअफलं को वा न परहिअत्थी विसेसेइ ? ॥ ६३ ॥ खामेइ मुणिं तत्तो स वं-
तरो झत्ति पत्तसम्मत्तो । लोआवि दुविहधम्मं सम्मं जहसत्ति गिण्हंति ॥ ६४ ॥ परदुक्खे जे ठविआ तेणत्ते
तेण ताण परसुक्खं । मुक्खं दिंतेण धुवं पडिआरिओ पुव्वअवराहो ॥ ६५ ॥ एवं सो पुहवीए विहरित्तु चिरं
हरित्तु अन्नाणं । सन्नाणं भव्वाणं दिंतो पत्तो पयं परमं ॥ ६६ ॥ सव्वप्पहाणं नवमस्स सामाइआभिहाणस्स वयस्स
एवं । फलं मुणित्ता धणमित्तपत्तं, कुणंतु तत्थेव बुहा ! पयत्तं ॥ ६७ ॥

॥ इति सामायिकव्रते धनमित्रकथा ॥

उक्तं नवमव्रतमिदानीं देशावकाशिकं नाम दशमं शिक्षाव्रतं तु द्वितीयं, तच्च पूर्वं योजनशतादिना याव-

रेइ अइपीडं ॥ ४५ ॥ तहवि मणसावि मुणिणो व्व निप्पकंपस्स तस्स उप्पन्नं । भाणुव्व भासमाणं महप्पमाणं अवहिनाणं ॥ ४६ ॥ जाणेइ अ तेण निवई तं वंतरवइवइअरमसेसं । तत्तो विचित्तचित्तो इअ अणुसासेइ अप्पाणं ॥ ४७ ॥ रे जीव ! पाव पावं परसंतावं अकासि जइ पुव्विं । तो कह छुट्टसि इण्हि ? ता सम्मं सहसु धम्मकए ॥ ४८ ॥ यतः–"सह कलेवर ! दुःखमचिन्तयन्, स्ववशता हि पुनस्तव दुर्लभा । बहुतरं च सहिष्यसि जीव ! हे, परवशो न च तत्र गुणोऽस्ति ते ॥ ४९ ॥" रे जीव ! अवज्झाणं अणुप्पमाणंपि कुणसि जइ इण्हि । सामाइआइआरो ता तुह अइदुहकरो होही ॥ ५० ॥ बहुपुन्नेहिं सहाओ अहव इमो वंतरो तए पत्तो । जो कम्मक्खयकरणा तुह होही परमपयहेऊ ॥ ५१ ॥ सुहझाणमेव एवं कुणमाणमिमं मुणित्तु नाणेणं । सो जाओ अइरुट्ठो चिट्ठा दुट्ठाण एसेव ॥ ५२ ॥ तत्तो सो अइभीसणरक्खसरूवं विउव्विउं गयणे । उप्पइउं उप्पाडइ वज्जसिलं कालचक्कं व ॥ ५३ ॥ जंपइ अ मूढ ! मुंचसु धम्ममिमं अन्नहा तुह सिलाए । पक्कभंडंव मुंडं सहस्सखंडं लहु करिस्सं ॥ ५४ ॥ एवंपि जा न भिज्जइ सो सुहझाणं घणंव अइकिविणो । तेण सिला तस्स सिरे ता मुक्का निक्किवत्तमहो ! ॥ ५५ ॥ विज्जुपडणाओ इव तग्घायाओ न केवलं तस्स । मुंडं नंभंडंपि हु सव्वदिसिं फुट्टई व तया ॥ ५६ ॥ एवं फुट्टेवि सिरे समंतओ अज्जमंजरीइव्व । जं सो न मओ वंतरसत्ती खलु कारणं तत्थ ॥ ५७ ॥ चुज्जं वज्जसिलाए हणिज्जमाणस्स तस्स सुहझाणं । नहु हणिअं अंसेणवि घाइ कुकम्मं तुऽणंतमवि ॥ ५८ ॥ सुहडव्व अवगणंतो तंपि इमो वेअणं खवगसेणिं । पाविअ पावइ केवलमवि सामइयस्स अहह ! फलं

पुव्विं आसि तं तए पत्ता । इब्भकुलाइसमिद्धा वंछिअसिद्धीवि सव्वत्थ ॥ ३१ ॥ वसणप्पसत्ततक्करपसंसणा-
ओ तुहंपि तह जाओ । जहिं बहुमाणो पुव्विं तं सुलहं होइ बीइ भवे ॥ ३२ ॥ पावाण पसंसाइम बहुमाणो
इहवि बहु अणत्थकरो । किं पुण अन्नंमि भवे ? तो कह कुणंतु तं विबुहा ? ॥ ३३ ॥ अव्वत्तं सामइअं मुहुत्त-
मित्तं तु जं तया तुमए । निअजीवहिअं विहिअं सुत्तुच्चाराइरहिअंपि ॥ ३४ ॥ तप्पुण्णपभावेणं तेणस्सवि
तुज्झ एरिसं रज्जं । जायं वहठाणेविहु किंवा पुन्नेहिं दुस्सज्झं ? ॥ ३५ ॥ रज्जाइफलं सामाइअस्स अव्वत्तयस्स
खलु वुत्तं । संपइनिवोवि तेणं चिअ रज्जं पाविही परमं ॥ ३६ ॥ इअ आयन्निअ राया दढपुन्नो पीइपूरपडि-
पुन्नो । अन्नेवि मंतिमाई सामाइअउज्जुआ जाया ॥ ३७ ॥ तो निवई सुद्धमई सामाइअवयं सयावि निअमेणं ।
पालंतो बहुकालं गमेइ कम्मं च बहुअयरं ॥ ३८ ॥ अवरदिवसंमि संझासमए सामाइअं विहेऊणं । पडिक-
मिऊण य सम्मं सुहज्झाणं झायए राया ॥ ३९ ॥ इत्तो अ तक्करत्ते इक्कस्स दिअस्स निवइणा पुव्विं । कीडीइ
तित्तिरेण व संचिअदव्वं हरिअमासी ॥ ४० ॥ कोहपवन्नो खिन्नो निव्विन्नो तावसो तओ होउं । मरिउं जाओ
मिच्छद्दिट्ठी सो वंतरो कूरो ॥ ४१ ॥ सो भमिरो भमरो इव कयसामइअं निवं तहिं दट्ठुं । उल्लसिअपुव्ववेरो
रुट्ठो दुट्ठो विचिंतेइ ॥ ४२ ॥ पव्वयसिहराओ इव धम्मवराओ कहंचि भंसित्ता । निविडं विडंवणाहिं विडंवि-
ऊणं हणिस्समिणं ॥ ४३ ॥ जह लहइ दुग्गदुग्गइदुहाणि दुसहाणि एस विविहाणि । जं धम्मनिअमभंसे भवइ
अणंतं खु भवदुक्खं ॥ ४४ ॥ इअ चिंतिअ सो उअरे सिरंतरे नयणवयणकन्नेसुं । अवरंगोवंगेसुवि तस्स उई-

यउल्लासगो उचिअं ॥ १६ ॥ पुव्वकयसुकयवसओ वसीकयाणेगदेसनिवनिवहो । रज्जं भुंजेइ इमो विण्हुव्व
विलासदुल्ललिओ ॥ १७ ॥ रज्जेण तस्स अइविम्हिरेसु सव्वेसु कोवि मुणिवसहो । वसहोव्व चरणभारुव्वहणे
नाणी तहिं पत्तो ॥ १८ ॥ निवईवि सपरिवारो गंतुं वंदित्तु पुच्छए भयवं ! । पापपरतक्करस्सवि रज्जं कह नाह !
मह जायं ? ॥ १९ ॥ पभणइ मुणीवि नरवर ! पुव्वभवे आसि मिच्छदिट्ठि तुमं । पाडोसिओ अ तुह पुण सड्ढो
राहुस्स चंदुव्व ॥ २० ॥ पाडोसिएण वहुसो बहुबहुजुत्तीहिं पन्नविज्जंतो । जाओ इमोवि भद्दय ! भावो उवलुव्व
बहुघडिओ ॥ २१ ॥ जिणवरधम्मो भव्वो इअ बहुमाणं वहेइ सो तत्तो । सुप्पाडोसो अक्खयकोसोव्व सुदुल्लहो
पायं ॥ २२ ॥ पारक्केहिवि धूवयकपूरकत्थूरिआइवत्थूहिं । आसन्नो अन्नोविहु भाविज्जइ सुरभिभावेणं ॥ २३ ॥
सामाइअं कुणंतो पइदिवसं सावओ अ सो तेणं । पुट्ठो साहइ एअं वयं सुसाहुं व सुबहुफलं ॥ २४ ॥ मणवं-
छिअत्थसाहणसमत्थयं वन्निमो किमेअस्स ? । तक्खणमेअं अक्खयसुक्खं मुक्खंपि जं देइ ॥ २५ ॥ यतः—
"किं तिव्वेण तवेणं किं च जवेणं च किं चरित्तेणं । समयाइ विणा मुक्खो नहु हूओ कहवि नहु होही ॥२६॥"
इअ सुणिअ भद्दओ सो भणेइ ता होउ मज्झवि इमंति । पभणित्तु सचित्ताई मुत्तुं सड्ढुव्व सोवि ठिओ ॥ २७ ॥
तारिसमवि सामइअं विणिम्मिअं तेण इक्कसिं चेव । जं धम्मकम्मजोगो थोवतरो साइसलिलं व ॥ २८ ॥ सत्त-
वसणप्पसत्तं तहिमिक्कं तक्करं सुरवरं व । सो विलसंतं दट्ठुं बहुं पसंसेइ मुद्धमई ॥ २९ ॥ सो सड्ढो सड्ढगुणे
आराहिअ अच्चुअंमि संपत्तो । इअरो भद्दयभावो मरिऊण इहं तुमं जाओ ॥ ३० ॥ जिणधम्मे बहुमाणो जं

इत्तो अ तंमि नयरे नरेसरो सो मओ अतणओ अ । अणओ अ एस रज्जं जं दिज्जइ जस्स कस्सावि ॥ २ ॥ पूइत्तु गोत्तदेविं तत्तो अहिवासिआइं मंतीहिं । हत्थिहयछत्तचामरभिंगारा पंच दिव्वाणि ॥ ३ ॥ अह गोत्तिएसु तह नत्तुएसु अहिगारिएसु सुहडेसुं । बंभणवणिआईसुवि कारूसुवि सज्जभूएसु ॥ ४ ॥ मा होउ पंतिभेओ एसिं सव्वेसि सरिसआसाणं । इअ उल्लंघिअ सव्वे नयराओ निग्गओ स गओ ॥ ५ ॥ युग्मम् ॥ वणसावयं वणं पइ पट्ठियमेअंति जंपिरजणाणं । वयणाणि अवगणंतो भसणाणिव भसणनिवहाणं ॥ ६ ॥ जत्थत्थि तक्करो सो तम्मिलणत्थं व तत्थ सोऽवि गओ । नवजलहरुव्व सहलं करेइ गलगज्जिअं अउलं ॥ ७ ॥ जुगलं ॥ सव्वेसु विम्हिएसुं तेण गइंदेण गज्जिअपरेणं । अमएण व अहिसित्तो भिंगारजलेण सो चोरो ॥ ८ ॥ आरोविओ अ पिट्ठे सुविसिट्ठकेसरिव्व गिरिसिहरे । हेसारवो पसंसारवोव्व विहिओ हएणावि ॥ ९ ॥ पत्तं सिरंमि छत्तं कलंकविकलंव मंडलं ससिणो । जुण्हुव्व तस्स दुहओ वित्थरिआ चामरमिसेणं ॥ १० ॥ दिवि दुंदुहीण पुहवीतलंमि पडुपडहपमुहतूराणं । नाएण विवाएणव बंभंडं फुट्टई व तया ॥ ११ ॥ देवीइ दिन्नरज्जोत्ति मन्निओ तक्करोऽवि सव्वेहिं । सामंताईहिं निवो अलंघणिज्जं हि सुरकज्जं ॥ १२ ॥ अह सो महइड्ढीए महंतसामंतमंतिपमुहेहिं । इंदोव्व देवलोए पवेसिओ तंमि नयरंमि ॥ १३ ॥ सो उत्तिन्नो रन्नो भवणे सिंहासणे सुहनिसण्णो । सामंताईहिं महामहेण अहिसिंचिओ रज्जे ॥ १४ ॥ पुण्णं एअस्स दढं इअ एसो नामओवि दढपुण्णो । विक्खाओ जं पाओ महत्तणे नाममवि नव्वं ॥ १५ ॥ सामंतदिन्नकन्नागणेण सो तारगागणेणं व । सोहइ अहिअं राया कुवल-

तहवि। तीए नाओ तस्संचाराइपउत्तचित्ताए ॥ ८७॥ तो तीए धुत्ताए कहंवि जाणित्तु गुत्तमवि खत्तं। रुंभाविअं भडेहिं तद्दारं कुगइदारं व ॥ ८८॥ पुव्विंचिअ सज्जाओ धूवघडीउव्व धूमघडिआओ। सयराहं बहुआओ झडत्ति उग्घाडिआओ अ ॥ ८९॥ तद्धूमसमूहेणं तन्नयणा भग्गसलिलभंड व्व। गलिआ तहा जहा तग्गयं गयं अंजणं सव्वं ॥ ९०॥ तंमि घणंमि व नयणंजणंमि सव्वंमि विहडिअंमि लहुं। सो संजाओ पयडो पयडो केउव्व लोआणं ॥ ९१॥ तो निग्गंतुमसक्को सिग्घं वग्घुव्व निग्घिणभडेहिं। बंधाविओवि तीए बुद्धी धुत्तीइ कावि अहो ॥ ९२॥ ता तीइ निअपइन्नापूरणओ पूरिआइ हरिसेण। छागुव्व इमो बद्धो समप्पिओ दंडपासिस्स ॥ ९३॥ राया मउत्ति तेणवि सयं पहाए वहाय आइट्ठो। निवइअभावे कज्जं कुणंति अहिगारिणो चेव ॥ ९४॥ जमपुरिससमाणेहिं पाणेहिं निग्घिणेहिं अह चोरो। खरआरोहणखरकाहलपमुहविडंबणापुव्वं ॥ ९५॥ लोएहिं मिलिएहिं कलिएहिं कुऊहलेण कोहेणं। हीलिज्जंतो तज्जिज्जंतो नीओ पुरा बाहिं ॥ ९६॥ जुअलं ॥ अह सो चिंतइ चोरो हहा! किमेसो अणत्थवित्थारो?। सुहसउणेहिवि विहिअं जायं अहियं अहह किमिमं? ॥ ९७॥ अहवा मह पावेणं सउणा सयणा य विहडिआ नूणं। कह अन्नह नहु इण्हिं रिवुं व मं रक्खए कोवि ॥ ९८॥ किं वा किंवागफलंपिव पावं पढममेव अइमहुरं। परिणामे पुण विरसं न देइ दुसहं दुहं इहवि ॥९९॥ छुट्टेमि कहवि ता जइ इमाउऽणत्थाउ तो चए पावं। सव्वं दवंव दुसहं करं नु वा छुट्टणं इण्हिं? ॥ १००॥ इअ चिंतिरो स दीणं पयंपिरो कंपिरो अ पाणेहिं। जमदाढाएव्व महासूलाए अंतिअं नीओ ॥ १॥

गयाऽसि ? । महिलासहावसुलहं सा कित्तिमसुत्तरं देइ ॥ ७३ ॥ जुअलं ॥ निद्दाघुम्मिअनयणो पुणोवि सुत्तो तहेव महिरमणो । सा पुण संकिअहिअया हिअए झाएइ पावहया ॥ ७४ ॥ धुवमज्ज अकज्जरया इमेण परिजाणिअम्हि ता इण्हिं । कहमवि मारेमि इमं जहा जहिच्छाइ विलसेमि ॥ ७५ ॥ इअ चिंतिअ दुट्ठाए पाविट्ठाए निकिट्ठअंगुट्ठो । रन्नो गलंमि दिन्नो धिद्धी असईण चरिआइं ॥ ७६ ॥ बद्धमुहो मेसो इव तीइ तहिं सो विडंबिओ जह से । पाणा झडत्ति नट्ठा भीआ इव तीइ दुट्ठाए ॥ ७७ ॥ तो सा धम्मविमुक्का पुक्कारिअ उट्ठिआ कवडचरिआ । हा हा हया हयाहं रन्नो जायं किमेअंति ? ॥ ७८ ॥ कालमुहा मेहा इव मंतिप्पमुहा महादुहा ताहे । वज्जाहयव्व जाया निवं निरूविंत्तु निज्जीवं ॥ ७९ ॥ तीइ इमं दुच्चरिअं दुप्पिच्छं पिच्छिऊण सव्वंपि । पावाणवि पावाए कुच्छाणवि कुच्छणिज्जाए ॥ ८० ॥ वज्जं विज्जूव सिला पडेउ निविडं इमीई सीसंमि । इअ अंतो पभणंतो तओवि तेणो स निक्खंतो ॥ ८१ ॥ जुअलं ॥ चिंतइ अ चोरिआए विग्घा वग्घा व किं समुट्ठंति ? । दुन्निमित्ताणि इमाणि अ अलंघणिज्जाणि सविसेसं ॥ ८२ ॥ ता मह विहला विहवा जुव्वणलच्छिव्व हा निसा एसा । अज्जवि अहवा गच्छे विहिअपइन्नाइ तीइ गिहं ॥ ८३ ॥ पडिवन्नयनिव्वाहो मज्झवि एवं हवेइ जइ कहवि । इअ चिंतिअ तीइ गिहं सुहसउणपणुल्लिओ स गओ ॥ ८४ ॥ पमुइअचित्तो तत्तो खणित्तु खत्तं निअं दुकम्मं व । पविसइ तीसे गेहं देहे जीवोव्व गूढगई ॥ ८५ ॥ जा तस्स मंजूसाओ अमयं राहुव्व अमयकुंडाओ । सारं हरेइ ता सो तीए नाओऽणुमाणेणं ॥ ८६ ॥ जइवि अदिस्सो दस्सू एस पिसाउव्व पविसए

मदिणं तेण विसेसेण चिंतणिज्जमिणं । पच्चक्खमणत्थ[illegible]ता किं एआइ अत्थेणं ? ॥ ५९ ॥ इअ चिंतित्ता सत्त-
मरत्तीइ खणित्तु गुत्तखत्तं सो । कोडीसरस्स कस्सवि गिहं पविट्ठो निअगिहं व ॥ ६० ॥ तहिं पिच्छइ दुम्म-
इणा पिउणा कुद्धेण किविणगणवइणा । ताडिज्जंतं कागणिकज्जे पुत्तंपि सत्तुं व ॥ ६१ ॥ तत्तो विचित्तचित्तो
चिंतइ नूणं इमस्स किविणस्स । सव्वस्सं गिण्हिस्सं जइ ता हिअयंपि फुट्टिहिइ ॥ ६२ ॥ इअ झाइअ तग्गि-
हओ नीहरिओ झत्ति असुइगिहउव्व । सो पविसइ पुव्विंपिव सुवण्णकारस्स वरभवणं ॥ ६३ ॥ जा पिच्छइ
निच्छारयछारयधूलीण पुंजए बहुए । उक्करडपुंजए इव निवाइ गेहाहिं गहिआणं ॥ ६४ ॥ एगत्थ य गिहनाहं तं
धूलिं धमिअ धमिअ अमिअतरं । कणगरयं अणुमित्तं कहवि गहंतं स पेहेइ ॥ ६५ ॥ रंकेहिंपिव घरमाणुसेहिं
पत्थिज्जमाणयं च तयं । दट्ठुं किमिह गहिस्सं ? इअ चिंतिअ निग्गओ स तओ ॥ ६६ ॥ तो सो निवमहिआए
महिड्ढिआए इगाइ गणिआए । गच्छइ गिहं सुगूढं अमावसाए ससिव्व नहं ॥ ६७ ॥ तं पिच्छइ अइपिच्छिलग-
लंतकुट्ठेण दुट्ठचित्तेणं । जच्चंधवुड्ढएण य रममाणिं सुरवरेणंव ॥ ६८ ॥ धिद्धी धणलवगिद्धीअंधाइ इमाइ कुच्छ-
णिज्जाए । इअ चिंतिअ निग्गंतुं गिहं गओ खत्तिअवरस्स ॥ ६९ ॥ कुद्धेण तेण कणमूडयं च अइचंडदंडघा-
एहिं । भज्जं हणिज्जमाणिं लहुगयपाणं व दट्ठूणं ॥ ७० ॥ निक्किट्ठदुट्ठनिट्ठुरपहारभीउव्व निग्गओ स तओ । उ-
ज्झिअ सव्वे रन्नो पविसइ पासायमुल्लसिओ ॥ ७१ ॥ जुगलं ॥ जा तस्स अग्गमहिसी सा असई कुब्बडेण संघ-
डिआ । रमिऊण चिरं पच्छा आगच्छइ जाव ताव निवो ॥ ७२ ॥ दिव्ववसा गयनिद्दो निद्दोसो पुच्छए कहिं

वि पुण अहह धुत्तत्तं ॥ ४४ ॥ किंकिच्चजडो राया तो घोसावेइ पडुपडहपुव्वं । जो पयडइ चोरमिमं कोडिं कणयस्स से देमि ॥ ४५ ॥ चुलसीइसु चउहट्टयपहेसु पडहोवि वज्जमाणो सो । धुत्ताए एगाए गणिआइ चिआरिउं छविओ ॥ ४६ ॥ तो सा गंतुं नरवइपासे भासेइ सत्तदिणमज्झे । गूढं पुररोगमिमं दस्सुमवस्सं हि पयडिस्सं ॥ ४७ ॥ रन्ना दिन्नमुदिन्नप्पसएण इमीइ बीडयं ताहे । को वा न माणणिज्जो विसमं कज्जं पवज्जंतो ? ॥ ४८ ॥ तो सा चिंतइ नूणं अंजणसिद्धो व विज्जसिद्धो वा । सो तक्करो न केणवि जंतो इंतो व दीसइ जं ॥ ४९ ॥ ता तद्धरणनिमित्तं वित्तं सव्वंपि निअगिहस्संतो । खिविउं दारं पिहिउं गाढं चिट्ठेइ तच्चित्ता ॥ ५० ॥ रत्तिं तु निअगिहंतरगया महाजोगिणिव्व गयनिद्दा । तं चिअ चोरं झायइ तस्सेव परं अनन्नमणा ॥ ५१ ॥ चोरो धरिज्जमाणो मारइ नूणंति तस्स धरणट्ठा । वाहव्व तिक्खसुणहे सुहडे ठावेइ सा पासे ॥ ५२ ॥ तेणोऽवि तीइ सारं मुसिउमदिस्सो पुणो पुणो इंतो । सुणहव्व तग्गिहंतो नो सक्कइ पविसिउं दिवसे ॥ ५३ ॥ तत्तो सो तहि रत्तिं खत्तं खणिउं हवेइ जा सज्जो । जणणी इव हिअजणणीइ वारिओ ताव छीआए ॥ ५४ ॥ विविहेहिं असउणेहिं विहिअनिसेहस्स तस्स छद्दिवसा । एवं गया न सक्कं तीइ गिहं तेण पुण मुसिउं ॥ ५५ ॥ तो सो चिंतइ चित्ते धुत्ता एसा धुवं महं धरिही । विणिवारंति पुणो पुण कह अन्नह दुन्निमित्ताइं ? ॥ ५६ ॥ दुनिमित्तवारिअं पुण नेमित्तिअवारिअं व नहु काउं । उचिअविऊणं जम्हा ताणिवि नरकम्मवसगाणि ॥ ५७ ॥ जओ–“गयणंमि गहा सयणंमि सुविणया सउणया वणग्गेसु । तह वाहरंति पुरिसं जह दिट्ठं पुव्वकम्मेहिं ॥ ५८ ॥” अज्ज पुण सत्त-

चोरिया उ लया। तक्कालमेव जायइ जीइ महिड्ढी दरिद्दोवि ॥ ३० ॥ ता किं करिस्समिण्हिं अहवा जं होइ होउ तं सव्वं। चोरिं मुंचामि कहं जीए विलसामि सच्छंदं ? ॥ ३१ ॥ अंजणमदिस्सकरणं जइ वा विज्जं कहंपि पावेमि। ताऽहं होमि कयत्थो पूरेमि मणोरहे निअए ॥ ३२ ॥ इअ चिंततो अंतो नयरं सुइरं परिब्भमंतो सो। एगत्थ जोगसिद्धं कलासमिद्धं निहालेई ॥ ३३ ॥ तं तह बहुधणदाणेणाधज्जइ सो जहा लहुं देइ। तं अंजणं मणंपिव निअयं किं वा न दाणाओ ? ॥ ३४ ॥ जओ–"दानेन भूतानि वशीभवन्ति, दानेन वैराण्यपि यान्ति नाशम्। परोऽपि बन्धुत्वमुपैति दानात्, ततः पृथिव्यां प्रवरं हि दानम् ॥ ३५ ॥" सीहो व पक्खरजुओ पक्खजुओ विसहरो व सो दुसहो। चित्तापत्तोव्व रवी जाओ तेणंजणेण जणे ॥ ३६ ॥ तत्तो सो सच्छंदं गिण्हइ दविणाणि सव्वभवणाणि। परिमुसिउं २ चोरो अवरोव्व रोहिणिओ ॥ ३७ ॥ परइत्थिओवि भुंजइ गिहंतरे वंतरुव्व पविसित्ता। एवं सो अदिस्सो लोअं विनडेइ सव्वमवि ॥ ३८ ॥ तेणासन्नगिरिस्स य गूढगुहब्भंतरे परधणेहिं। विहिओ निअभंडारो पच्चक्खो पावभंगारो ॥ ३९ ॥ जीवुव्व अप्पडिहओ सुहुमो वाउव्व संचरंतो सो। गाढपयत्तपरेहिवि निउणेहिवि न मुणिओ कहवि ॥४०॥ नरवइणो वयणाओ तह पिउणो चोरिआ मए चत्ता। इअ भणिरो इब्भो इव निवसहाए सया एइ ॥ ४१ ॥ जो तक्करस्स गरिहं करेइ तं पयडिउं पइन्नं वा। सो मुसइ तस्स गिहं रुट्ठं दिव्वं व सव्वंपि ॥ ४२ ॥ अणुमाणेणं तेणं तं जाणंतावि पुव्वचिट्ठाए। रायाई नहु भाणिउं सक्का हत्थे अचडणाओ ॥ ४३ ॥ अइगूढं सुहुमंपिहु अत्थं सत्थस्स पयडयंति विऊ। पयडं पोढंपि इमं न को-

च कामदुहं । नयरंगणं च अमरंगणं व मज्जाइ अमयं व ॥ १७ ॥ सुअनाणविरुद्धंपि हु निद्धम्माणं पमाणणिज्जं ही । अन्नेसि कुच्छणिज्जं साणाणं भक्खणिज्जं हि ॥ १८ ॥ अन्नदिणंमि स दुन्नयकारी चोरीइ कत्थवि पविट्ठो । पाविट्ठो लहु गहिओ केणवि कोलुग्ग वाहेण ॥ १९ ॥ बंधिअ नीओ नरवइ पुरओ सो जाणिओ अ सिट्ठिसुओ । तो रन्ना हक्कारिअ धणओ सिट्ठी इमं सिट्ठो ॥ २० ॥ वज्झोवि तुज्झ पुत्तोत्ति अज्जाणज्जो इमो मए मुक्को । नेव पुणो मुंचिस्सं जमिक्कसिं चेव दक्खिन्नं ॥ २१ ॥ यतः—"स्थानं सर्वस्य दातव्यमेकवारापराधिनः । द्वितीयपतने दन्ता, वक्रेणापि विवर्जिताः २२ ॥" ववहारिओवि साहइ महापसाओ इमो नवरि एसो । बहुसिक्खिओवि न मुअइ अणयं टारव्व टारत्तं ॥ २३ ॥ ता एस न मे पुत्तो अहंपि न पिऊ इमस्स अज्जदिणा । दूरीकओ हु कूडक्खरोव्व एसो अकज्जकरो ॥ २४ ॥ यतः—"दुष्टः सुतोऽपि निर्वास्यः, स्वामिना न्यायगामिना । ग्रहपङ्क्तेर्ग्रहाधीशः, शनिमन्ते न्यवीविशत् ॥ २५ ॥" रन्नावि साहु साहुत्ति वन्निओ मन्निओ अ बहुसिट्ठी । किंव न कज्जविऊणं संपज्जइ उचिअकज्जाओ ॥ २६ ॥ यतः—"आदेयत्वमसंस्तुतेऽपि हि जने विस्तारयत्यञ्जसा, दुर्वृत्तानपि सान्त्वयत्यवनिभृत्प्रायानपायोद्यतान् । तं संकर्षयति त्रिवर्गमिह वाऽमुत्रापि यस्माच्छुभं, किं वा तन्न तनोति यत्सुकृतिनामौचित्यचिन्तामणिः ॥ २७ ॥" अह धणयसुओ तइआ रन्ना मुक्कोवि चिंतिउं ढुक्को । अह जइ रन्नो हत्थे चडिओ ता मारिओ चेव ॥ २८ ॥ न य आजम्मविणिम्मिअअच्छम्मपिम्माइ चोरिआइ विणा । सक्को इक्कंपि दिणं ठाउं पाणप्पिआइव्व ॥ २९ ॥ वल्लीओ वेलाए फलंति सयलाओ

पयावपईवो पयं पयंगस्स देइ सत्तूणं। चित्तं तु तप्पिअंसुअसलिलेहिं पज्जलइ अहिअं ॥ ३ ॥ मयणपहा-
पमुहाओ इंदस्स व तस्स अग्गमहिसीओ। अट्ठ पसिद्धा एवं पंच सया आसि दइआओ ॥ ४ ॥ विविहेहिं
उवाएहिं जाओ तणओ न तस्स इक्कोवि। तो मन्नइ रज्जसिरिं सो विहलं उच्छुलट्ठिं व ॥ ५ ॥ सिट्ठी विसिट्ठ-
तणओ धणओ अवरोव्व नामओ धणओ। वसइ तहिं जस्स सयं कोडीओ कंचणस्सेव ॥ ६ ॥ जिणधम्मभा-
विएणं न केवलं धम्मओ धणाओवि। नेगमअडहिअसहसो जेण कओ अप्पणो सरिसो ॥ ७ ॥ तस्स धण-
स्सिरिनामा गिहिणी गिहिणीइनिउणमइविहवा। दुविहाइ धणसिरीए सो सोहइ अणुवमत्तेण ॥ ८ ॥ तप्पुत्तो
धणमित्तो अविणयचित्तो अ दुण्णयपसत्तो। सुविसिट्ठसिट्ठिकुलदिट्ठिदोसपडिसेहणत्थं वा ॥ ९ ॥ बालत्त-
णओवि इमो पइदियहं पिउगिहं परिमुसंतो। चोरव्व घोरकम्मो दव्वं सव्वंपि विफडेइ ॥ १० ॥ अणयाओ
जणयाईहिं बहुपडिसेहिओ हिअत्थीहिं। सो अ विवरीअसिक्खिअहयव्व अहिअं पयट्टेइ ॥ ११ ॥ वाणिज्जाइक-
लाओ सुसिक्खिआओवि तेण न हु कलिआ। चोरिक्काइकलाओ असिक्खिआओवि अक्खलिअं ॥१२॥ जुव्वण-
मणुपत्तो पुण जाओ वसणेसु सत्तसु पसत्तो। कढिओ खलु निंबरसो अइकडुओ चेव जाएइ ॥ १३ ॥ खत्ताइं
देइ नरयद्दाराणि व गिहवईण गेहेसु। गिण्हेइ तेसि सव्वं दव्वं पावंव पच्चक्खं ॥ १४ ॥ जूअं अणत्थभूअं अइप्प-
भूअं च नरयगइदूअं। खिवइ मिल्हियलज्जो सोऽणज्जो दुभवहइसज्जो ॥ १५ ॥ वेसावसणपसत्तो मज्जं मंसंपि र-
क्खसो इव सो। भक्खेइ किं अभक्खं पणंगणासंगयाणं वा? ॥ १६ ॥ सो मन्नइ अत्ताणं तिअसवरं चोरिअं

निर्व्यापारताया
करेइ'त्ति, एवं च द्विसन्ध्यमेव सामायिकं विधेयमिति यत्केचिन्नियमयन्ति तदपास्तं मन्तव्यं, निर्व्यापारताया
दिनमध्ये बहुशोऽपि सम्भवात्, विशेषयुक्तिश्चात्र पूज्यप्रणीतविचारामृतसङ्ग्रहादवगन्तव्या, ननु 'निव्वावारो
सव्वत्थ करेइ' इत्युक्तं, यदा च निर्व्यापारताऽर्द्धघटिकादिमात्रमेवास्ति नतु घटीद्वयं यावत्तदा 'जाव नियमं
पज्जुवासामी' त्येवं सामायिकं कथं कुर्यात्?, नियमस्य जघन्यतोऽपि घटीद्वयमानतयोक्तत्वात्?, सत्यं, तत्सा-
मायिकं दण्डकोच्चारकादि विनैव समताभावमात्ररूपं संभाव्यते, तत्त्वं तु बहुश्रुतगम्यं, सामायिकफलं चै-
वमाहुः—"दिवसे २ लक्खं देइ सुवन्नस्स खंडिअं एगो। इअरो पुण सामइअं करेइ न पहुप्पए तस्स ॥ १ ॥
सामाइअं कुणंतो समभावं सावओ अ घडिअदुगं। आउं सुरेसु बंधइ इत्तिअमित्ताइं पलिआइं ॥ २ ॥ बाणवई
कोडीओ लक्खा गुणसट्ठि सहस पणवीसं। नवसय पणवीसाए सतिहा अडभाग पलिअस्स ॥३॥" अङ्कतोऽपि-
९२५९२५९२५। ५/३। तिव्वतवं तवमाणो जं नवि निट्ठवइ जम्मकोडीहिं। तं समभाविअचित्तो खवेइ कम्मं खणद्धेणं
॥ ४ ॥ जे केवि गया मोक्खं जेवि अ गच्छंति जे गमिस्संति। ते सव्वे सामाइअमाहप्पेणं मुणेअव्वा ॥ ५ ॥
नः हूयेत न तप्येत, दीयेत वा न किञ्चन। अहो! अमूल्यक्रीतेयं, साम्यमात्रेण निर्वृतिः ॥ ६ ॥" इति ससविं-
शगाथार्थः ॥ २७ ॥ अत्र व्रते व्यवहारिपुत्रधनमित्रज्ञातं यथा—
सत्थं व अइमहत्थं न पुणो सत्थं वऽणत्थसत्थकरं। सुपसत्थसत्थिअसमं सत्थिअपुरमत्थि पुहवीए ॥ १ ॥
सवसीकयअरिविंदो अरविंदो नाम नरवरिंदो अ। इद्धीइ सुरवरिंदो गरिमाए गिरिवरिंदो अ ॥ २ ॥ जस्स

ह– सामायिके द्विविधस्य त्रिविधेन प्रत्याख्याते रोद्धुमशक्येन मनसा दुष्प्रणिधानसम्भवात्सामायिकाभाव एव व्रतभङ्गजनितं च प्रायश्चित्तं स्यादतस्तदङ्गीकारादनङ्गीकार एव श्रेयान्, मैवं वोचः, सामायिकप्रतिपत्तौ हि सावद्यं मनसा न करोमि १ न कारयामि २ वाचा न करोमि ३ न कारयामि ४ कायेन न करोमि ५ न कारयामीति ६ षण्णियमास्तेष्वनाभोगादिनैकतरभङ्गेऽपि शेषसद्भावान्न सर्वथा सामायिकाभावः, मनोदुष्प्रणिधाने च मिथ्यादुष्कृतेनैव शुद्धिभणनान्न सामायिकास्वीकारः श्रेयस्करः, अन्यथा सर्वविरतेरप्यस्वीकार्यताप्रसङ्गात्, यच्चाविधिकृतादनुष्ठानाद्वरमकृतमिति केचिद्वदन्ति तदप्ययुक्तं, यदुक्तम्–"अविहिकया वरमकयं' असूअवयणं भणंति समयन्नू। पायच्छित्तं जम्हा अकए गुरुअं कए लहुअं ॥ १ ॥" किञ्च सातिचारादप्यनुष्ठानादभ्यासतः कालेन निरतिचारमनुष्ठानं भवति, अभ्यासो हि कर्मणां कौशलमावहति न हि प्रथमत एव धनुर्द्धरादीनाप्यमोघकर्मत्वं, अभ्यासे सत्येव तद्भावाद्, यथा कर्णार्जुनादीनां, लिखनपठनगीतनृत्यादिकला अप्यभ्यासेनैव प्रायः प्रकर्षं प्राप्नुवन्ति, न हि सकृन्निपातमात्रेणोदबिन्दुरपि ग्राव्णि निम्नतामादधाति, अतः सम्यगमनःशुद्ध्यादौ प्रयत्नपरेण यथाक्षणं पुनः २ सामायिकं कर्त्तव्यं, तथा चागमः–"सामाइअंमि उ कए समणो इव सावओ हवइ जम्हा। एएण कारणेणं बहुसो सामाइअं कुज्जा ॥ १ ॥ जीवो पमायबहुलो बहुसोवि अ बहुविहेसु अत्थेसु। एएण कारणेणं बहुसो सामाइअं कुज्जा ॥ २ ॥" आवश्यकचूर्णावप्युक्तम्–"यदा सव्वसामाइअं काउमसत्तो तदा देससामाइअंपि ताव बहुसो कुज्जा'इति, तथा 'जत्थ वा वीसमइ अच्छइ वा निव्वावारो सव्वत्थ सामाइअं

**तिविहे दुप्पणिहाणे अणवट्ठाणे तहा सइविहूणे । सामाइय वितहकए बिए सिक्खावए निंदे ॥ २७ ॥**

'तिविहे' इति 'त्रिविधे' त्रिप्रकारे 'दुष्प्रणिधाने' मनोवाक्कायानां दुष्टप्रयोगः सावद्यव्यापार इत्यर्थः, तत्र मनसा गृहहट्टादिसावद्यव्यापारचिन्तनं मनोदुष्प्रणिधानं प्रथमोऽतिचारः१, आहुश्च—"सामाइअं तु काउं घरचिंतं जो अ चिंतए सड्ढो । अट्टवसट्टोवगओ निरत्थयं तस्स सामइअं ॥ १ ॥" तथा वाचा कर्कशादिसावद्यभाषणं वाग्दुष्प्रणिधानं २, कायेनाप्रतिलिखिताप्रमार्जितभूमौ निषदनादि पादप्रसारणादि वा कायदुष्प्रणिधानम् ३, अनवस्थानं—मुहूर्त्तादिवेलावधेरपूरणं यथाकथञ्चित्सामायिककरणं वा, यद्वा प्रतिनियतवेलासद्भावेऽप्यनादरात्सामायिकाकरणमनवस्थानं, सामायिकं हि क्षणिकेनावश्यं कर्त्तव्यम्, अन्यथा प्रमादः, आह चावश्यकचूर्णिकृत्—"जाहे खणिओ ताहे सामाइअं करेइ" त्ति ४, तथा 'स्मृतिविहीनम्' इति निद्रादिप्राबल्याद्गृहादिचिन्तावैयग्र्याद्वा शून्यतया मया सामायिकं कृतमस्ति न वा? इति इयं वा मम सामायिकवेलेत्यादि यदा न स्मरति तदा स्मृतिविहीनत्वं पञ्चमोऽतिचारः, स्मृतिमूलत्वान्मोक्षसाधनानुष्ठानस्य, तथा चाहुः—"न सरइ पमायजुत्तो जो सामइयं कया य कायव्वं । कयमकयं वा तस्स हु कयंपि विहलं तयं नेअं ॥१॥" ५, एतेषां पञ्चानामपि जीवस्य प्रमादबहुलतयाऽनाभोगादिनाऽतिचारत्वम्, एतेषु सत्सु 'सामाइअ'त्ति सप्तमीलोपात्सामायिके प्रथमे शिक्षाव्रते 'वितथकृते' सम्यगननुपालिते योऽतिचारस्तं, अथवा प्रथमे शिक्षाव्रते यद्वितथं कृतं तन्निंदामि, आ-

सम्म खीरखंडजुई । दोरे हारस्स चिई इगमेआइं तु दव्वंमि ॥ २ ॥ आउवमाइ परदुक्खमकरणं १ रागदोसमज्झत्थं २ । नाणाइतिगं ३ तस्साइ पोअणं भावसामाई ॥ ३ ॥" तच्च "करेमि भंते ! सामाइअ"मित्यादि दण्डकोच्चारपूर्वकं कर्त्तव्यं, उक्तं चावश्यकनिर्युक्तिबृहद्वृत्तौ सामायिकाधिकारे श्रीहरिभद्रसूरिभिः-"गृहस्थोऽपि गृहस्थसामायिकं "करेमि भंते ! सामाइअं सावज्जं जोगं पच्चक्खामि जाव नियमं पज्जुवासामि दुविहं तिविहेणं" इत्येवं कुर्यादिति, ननु त्रिविधं त्रिविधेन प्रत्याचक्षाणस्य को दोषः ?, उच्यते, पूर्वप्रवृत्तकृष्यादिकर्मारम्भेष्वनुमत्यनिषेधेन भङ्गप्रसङ्ग एव, नन्वागमे त्रिविधंत्रिविधेनापि गृहस्थप्रत्याख्यानमुक्तं तत्किंविषयम् ?, उच्यते, अतिस्थूलसावद्ययोगविषयमेतत्, तथा च महाभाष्यकारः-"जइ किंचिदप्पओअणमप्पप्पं वा विसेसिउं वत्थुं । पच्चक्खेज्ज ण दोसो सयंभुरमणाइमच्छुव्व ॥ १ ॥" सामायिकदण्डके च सामान्येन नियमग्रहणेऽपि विवक्षातः पूर्वाचार्यपरम्पराप्रामाण्याच्च जघन्यतोऽपि घटिकाद्वयमानं तत्कर्त्तव्यं, तथा च प्रतिक्रमणसूत्रचूर्णिः-"जाव निअमं पज्जुवासामित्ति जइवि सामन्नवयणमेअं तहावि जहन्नओवि अंतोमुहुत्तं नियमे ठायव्वं, परओवि समाहीए चिट्ठउ" त्ति । कलिकालसर्वज्ञश्रीहेमाचार्यैरप्युक्तम्-"त्यक्तार्त्तरौद्रध्यानस्य, त्यक्तसावद्यकर्मणः । मुहूर्त्तं समता या तां, विदुः सामायिकव्रतम् ॥ १ ॥" न चाशठपूर्वाचार्यपरम्परा न प्रमाणं, आगमेऽपि तस्याः प्रामाण्यसमर्थनात्, यदुक्तं सूत्रकृताङ्गनिर्युक्तौ-"आयरिअपरंपराएँ आगयं जो अ आणुपुव्वीए (उ छेयवुद्धीए)। कोवेइ छेअवाई जमालिनासं स नासिहिई ॥१॥" एवंविधस्य सामायिकव्रतस्यातिचारपञ्चकनिन्दनायाह-

गुरुसमक्षं यथाविधि सामायिकदण्डकोच्चारादि कृत्वा यथाज्येष्ठमाचार्यादीन् वन्दते पुनरपि गुरुं वन्दित्वा
प्रत्युपेक्ष्य निविष्टः शृणोति पठति पृच्छति वा, एवं चैत्यापि द्रष्टव्यं–यदा तु स्वगृहे पौषधशालायां वा सामायिकं
गृहीत्वा तत्रैवास्ते तदा गमनं नास्ति, यस्तु राजामात्यश्रेष्ठ्यादिर्महर्द्धिकः स गन्धसिन्धुरस्कन्धाधिरूढश्छत्रचाम-
रादिराजालङ्करणालङ्कृतो हास्तिकाश्वीयपादातिरथकट्यापरिकरितो भेरीभाङ्कारभरिताम्बरतलो बन्दिवृन्दको-
लाहलाकुलीकृतनभस्तलोऽनेकसामन्तमण्डलेश्वराहमहमिकासम्प्रेक्ष्यमाणपादकमलः पौरजनैः सश्रद्धमङ्गु-
ल्योपदर्श्यमानो मनोरथैरुपस्पृश्यमानस्तेषां सेवाञ्जलिबन्धान् लाजाञ्जलिपातान् शिरःप्रणामांश्चानुमोदमानोऽ-
हो! धन्यो धर्मो य एवंविधैरप्युपसेव्य इति प्राकृतजनैरपि श्लाघ्यमानोऽकृतसामायिक एव तीर्थप्रभावनाहेतो-
र्जिनालयं साधुवसतिं वा गच्छति, तत्रागतो राजककुदानि छत्रचामरोपानन्मुकुटखड्गरूपाणि परिहरति, आ-
वश्यकचूर्णौ त्वेवमुक्तम्–"सामाइअं करिंतो मउडं न अवणेई, कुंडलाणि नाममुद्दं पुप्फतंबोलपावारगमादि
वोसिरइ" त्ति, ततोऽसौ जिनार्चनं साधुवन्दनं वा करोति, ततश्च सामायिकं, सामायिकं च त्यक्तसावद्य-
कर्मणो मुहूर्त्तं यावत्समताभावो, यदाहुः—"सावज्जजोगविरओ, तिगुत्तो छसु संजओ। उवउत्तो जयमाणो,
आया सामाइअं भवे ॥ १ ॥ जो समो सव्वभूएसुं, तसेसुं थावरेसु अ। तस्स सामाइअं होइ, इइ केवलिभा-
अं ॥ २ ॥" सामायिकशब्दार्थश्च त्रिधाश्चतुर्धा, यदाह निर्युक्तिकृत्–"सामं १ समं च २ सम्मं ३ इग सिह
सामाइअस्स एगट्ठा। नामं ठवणादविए भावंमि अ तेसि निक्खेवो ॥ १ ॥ महुरपरिणामसामं १ समं तुला २

प्रासावच्युते त्रैदृशीं श्रियम् ॥ ५५ ॥ च्युत्वा यातौ विदेहं तौ, निस्संदेहं महर्द्धिताम् । लब्ध्वा बुद्ध्वाऽऽर्हतं धर्म, भाविनौ शिवगामिनौ ॥ ५६ ॥ अखण्डधर्मे विहितेऽप्यनर्थदण्डस्य हास्यादपि किञ्चिदेवम् । प्रचण्डदण्डं परिभाव्य भव्यास्तत्त्यागतः श्राक् सुखितां श्रयध्वम् ॥ ३५७ ॥ ॥ इत्यष्टमव्रते वीरसेनकुसुमश्रीदृष्टान्तः ॥

इति श्रीतपागच्छनायकपरमगुरुश्रीसोमसुन्दरसूरिशिष्यश्रीभुवनसुन्दरसूरिविनेयोपाध्यायश्रीरत्नशेखरगणिविरचितायां श्राद्धप्रतिक्रमणसूत्रवृत्तौ गुणव्रताधिकारस्तृतीयः ॥ ग्रन्थाग्रम् ५३३१ ॥

उक्तानि त्रीणि गुणव्रतानि, सम्प्रति चत्वारि शिक्षाव्रतानि प्रस्तुतानि, तेषु च प्रथमं सामायिकव्रतं मूलतस्तु नवमं, तत्रायमावश्यकचूर्णिपञ्चाशकचूर्णियोगशास्त्रवृत्त्याद्युक्तो विधिः– इह श्रावको द्विविधः–ऋद्धिमाननृद्धिकश्च, तत्र योऽनृद्धिकः स चतुर्षु स्थानेषु सामायिकं करोति–जिनगृहे साधुसमीपे पोषधशालायां स्वगृहे वा, यत्र वा विश्राम्यति निर्व्यापारो वा तिष्ठति तत्र च सर्वत्र, यदा च साधुसमीपे करोति तदाऽयं विधिः–यदि कस्मादपि भयं नास्ति केनचिद्विवादो वा नास्ति ऋणं वा न धारयति मा भूत्तत्कृताकर्षणापकर्षणनिमित्तश्चित्तसङ्क्लेशः, यदि च निर्व्यापारोऽस्ति तदा स्वगृहे सामायिकं कृत्वेर्यां शोधयन् सावद्यां भाषां परिहरन् काष्ठलेष्ट्वादिना यदि कार्यं तदा तत्स्वामिनमनुज्ञाप्य प्रतिलिख्य प्रमार्ज्य च गृह्णन् खेलसिङ्घाणादींश्चाविवेचयन् प्रत्यवेक्षितप्रमार्जितस्थण्डिले वा विवेचयन् एवं पञ्चसमितित्रिगुप्तियुक्तो नैषेधिकीपूर्वं साध्वाश्रयं गत्वा गुरून्नत्वा

ऽप्यन्वमन्यत ॥३९॥ ताभ्यां तथाऽन्धकरणेऽन्धकारे द्वौ पृथक् पृथक्। मुक्तौ ततो वियुक्तौ तौ, क्षणं जातौ भयद्रुतौ
॥४०॥ अत्युदारं च शृङ्गारं, कारयित्वाऽथ धारिणी। देवरस्य प्रियां रूपमञ्जरीं प्रियमञ्जरीम् ॥४१॥ निवेश्य मुग्धां
सौधान्तरभ्यधाद्देवरं रहः। देवरागच्छ गच्छेह, वेश्यां त्वं पश्य पश्य च ॥४२॥ युग्मम्। सोऽप्यागतः स्वकवधूं, वीक्ष्य
मन्दाक्षदुःखभाग्। तं प्रेक्ष्य साऽप्यभूद्भूरिखेदमेदखिला ह्रिया ॥४३॥ इति कौतुकमात्रेण, मात्राधिकविपाकभृत्।
क्षेमङ्करधारिणीभ्यां, सञ्चितं दुष्कृतं कियत् ॥ ४४ ॥ हास्यमात्रेण को नाम, दोष इत्यवहीलनात्। नालोचितं
गुरोस्ताभ्यां, प्रतिक्रान्तं च नैव तत् ॥४५॥ सम्यग्धर्मार्जितानन्तसुकृतौ तौ च तद्भवम्। क्रमात्समाप्य सौधर्मेऽ-
भूतां शक्रसमौ सुरौ ॥ ४६ ॥ ततश्च्युत्वाऽवतीर्णौ तौ, पृथग् राजकुले युवाम् । युवयोः प्राग्भवस्नेहात्पाणिग्रह-
महाद्यभूत् ॥ ४७ ॥ लघुबान्धवजीवोऽपि, धर्ममाराध्य किञ्चन। देवतादिभवान् भ्रान्त्वा, जज्ञे धनपतिः स तु
॥ ४८ ॥ तवाभूत्प्राग्भवाभ्यासात्स्नेहस्तेन सह क्षणात्। दीर्घिकायामक्षिपस्त्वं, तं तत्त्वं सोऽपि वारिधौ ॥४९॥
पूर्वाचीर्णानुसारेण, नवयोर्युवयोरपि। वियोगोऽभूत्तथैवास्याः, ख्यातं वेश्यात्वमप्यहो! ॥ ५० ॥ स्वल्पमप्य-
र्ज्यते जीवैः, प्राग्भवे कर्म यद्यथा। तत्तथा वेद्यते हन्त!, पुरोऽनन्तगुणाद्यपि ॥ ५१ ॥ चतुर्विधस्य विधिवद्ध-
र्मस्याराधनाच्च ते। देव्या सहाभूद्रत्नानां, राज्यानां च चतुष्टयी ॥ ५२ ॥ इत्याकर्ण्योभयाकर्णौ, सकर्णौ तावु-
भावपि। जातजातिस्मृती पूर्वं, सर्वं सस्मरतुर्भवम् ॥ ५३ ॥ निर्वेदाच्च प्रपेदानौ, तौ श्राद्धद्वादशव्रतीम् । वि-
शिष्य सर्वथाऽनर्थदण्डत्यागव्रतं पुनः ॥ ५४ ॥ चतुर्विधं विशुद्धैवं, धर्ममाराध्य तौ चिरम् । प्रान्तेऽनशनतः

कुतोऽभूत् ? किञ्च किंकृतः । वेश्येति निष्कलङ्कायाः, कलङ्कः कुसुमश्रियाः ॥२४॥ युग्मम् । अथादिदेश भगवान्, केवली के बलीयसा । अल्पीयसाऽपि विषवत्कर्मणा नेह जघ्निरे ? ॥ २५ ॥ हास्येनाप्यर्जितं कर्म, मर्माविच्चण्डकाण्डवत् । सर्वथाऽनर्थदण्डोऽयमार्यैस्तद्विनिवार्यते ॥ २६ ॥ युवाभ्यां हि युवभ्यां प्राग् भवे कौतुकमात्रतः । यथाऽर्ज्यते स दुष्कर्म, सकर्णाकर्ण्यतां तथा ॥ २७ ॥ सम्मेतशैलतलहट्टिकायां ग्रामसत्तमे । क्षेमङ्करः सार्थनामा, ग्रामाध्यक्षो भवानभूत् ॥ २८ ॥ तदा च सद्गुणश्रेणिधारिणी धारिणीत्यभूत् । इयं ते वल्लभा प्राणवल्लभाऽतिशुभाशया ॥ २९ ॥ शुद्धश्राद्धौ समृद्धौ तौ, द्वावपि श्रद्धयाऽधिकौ । नैकयात्रिकलोकस्यातुल्यवात्सल्यकारिणौ ॥ ३० ॥ तीर्थमार्गे प्रपादानदायिनौ दीनतायिनौ । शुद्धान्नवस्त्रपात्राद्यैः, सुपात्राराधिनौ मुदा ॥ ३१ ॥ प्रायश्चतुर्विधाहारप्रत्याख्यानविधायिनौ । सच्चित्तपरिहारेण, सकृदाहारभोजिनौ ॥ ३२ ॥ पञ्चपर्व्यां चतुष्पर्व्यां, त्रिपर्व्यां च विशेषतः । आरम्भवर्जिनौ ब्रह्मपोषधोपोषणार्जिनौ ॥ ३३ ॥ दानादिभिश्चतुर्भेदं, विधिवद्धर्ममादरात् । आराध्यन्तौ धार्मिकाणामीयतुः श्लाघनीयताम् ॥ ३४ ॥ पञ्चभिः कुलकम् ॥ तस्य बन्धुः स्निग्धमुग्धोऽनुरूपां प्रियमञ्जरीम् । कनीं कनीयानन्येद्युः, परिणिन्ये परैर्महैः ॥ ३५ ॥ भीष्मे ग्रीष्मेऽन्यदा रात्रौ, तौ नवोढौ वधूवरौ । गृहोद्याने दीर्घिकायां, जलक्रीडार्थमीयतुः ॥ ३६ ॥ वृद्धेन बन्धुना स्नेहसिन्धुना प्रेमहास्यतः । अकस्मात्तावपात्येतां, तदा तद्दीर्घिकोदके ॥ ३७ ॥ न यद्यप्यधिकं दूनौ, तावद्यूनोदकाश्रयात् । तदप्याकस्मिकीं कामप्याप्तुतां व्याकुलात्मताम् ॥ ३८ ॥ क्षेमङ्करेण तत्क्रीडापरेणैतद्व्यकाचि च । तत्कुतूहलकारिण्या, धारिण्या-

सवधूकः पुरं निजम् ॥ ८ ॥ नव्यजन्मोत्सवेनेव, पुत्रस्यागमनेन सः । आसादयद्यमानन्दं, स तु वाचामगो-
चरः ॥ ९ ॥ ततस्तया देवतया, तदुदन्ते निवेदिते । खेदाद्भुताभ्यां भूपाद्या, रसं सङ्कीर्णमाप्नुवन् ॥ १० ॥ अथा-
न्यदा मुदाऽमुष्मै, कुमाराय निजं पदम् । प्रदाय दीक्षामादाय, क्ष्मापः प्राप परं पदम् ॥ ११ ॥ असानं निस्स-
मानं तन्महिमानं च शुश्रुवान् । परमानन्दवांस्तस्मै, स्वराज्यं श्वशुरोऽप्यदात् ॥ १२ ॥ स्वभारसारोपितवान्नय-
सारोऽपि भूपतिः । आगृह्य गृह्यवत्तस्मिन्, लोकः पूजितपूजकः ॥ १३ ॥ देव्यप्यवादीत्कुसुमपुरे यः प्राङ्
नरेश्वरः । स दुष्टो दुर्नयी दुर्धीः, प्रायस्तज्जाश्च तादृशाः ॥ १४ ॥ इति तन्मत्सराद्वत्स !, वत्सरात्परतः पुरम् ।
तन्मयोद्वासितं शाला, वरं शून्या न चौरयुक् ॥ १५ ॥ त्वामथाभ्यर्थये तस्मिन्, नगरे भव भूविभुः । विद्या
राज्यं च दीयेते, योग्यायैवेति हि स्थितिः ॥ १६ ॥ इत्थं तदुद्वासनोत्थोऽपवादोऽप्यपयाति मे । श्रुत्वेति प्राक्-
शुकप्रोक्तसंवादि प्रत्यपादि सः ॥ १७ ॥ दिव्यश्रीभिर्भासितं तद्देव्या द्राग् वासितं ततः । तदात्वोत्पन्नशक्रेणा-
लञ्चक्रे धौरिवामुना ॥ १८ ॥ एवं तस्याभवच्छ्स्या, प्राज्यराज्यचतुष्टयी । चतुष्टयीव श्रीः श्रेष्ठा, दिक्पालै-
रुपढौकिता ॥ १९ ॥ वशीकृतायाः सुकृतैर्देवतायाः प्रभावतः । निष्कण्टकत्वमेवासीत्तद्राज्येच क्रिराज्यवत्
॥ २० ॥ केवली कनकसालः, पुरस्योपवनेऽन्यदा । आययौ निर्ययौ चैष, वन्दितुं सपरिच्छदः ॥ २१ ॥ नत्वा
स्तुत्वा च तस्यासौ, तत्त्वातत्त्वार्थदेशिनीम् । श्रवःप्रवेशिनीं चक्रे, देशनां क्लेशनाशिनीम् ॥ २२ ॥ सोऽथ प्रस्ता-
वयामास, प्रस्तावे संशयं निजम् । नैतर्नूतनयोगे नौ, वियोगः केन कर्मणा ? ॥ २३ ॥ अब्धिपातादिकष्टं च,

॥ ९२ ॥ तदादि वत्स! वात्सल्याद्वत्सलाऽम्बेव तेऽनुगा। सान्निध्यं विदधानाऽस्मि, त्वत्पुण्यैर्वशवर्त्तिनी ॥ ९३ ॥ सकृत्त्वामब्धेरुद्धृत्यानीतः पोते मया तदा। अद्यापि संनिधास्ये ते, सर्वकार्येषु सर्वदा ॥ ९४ ॥ इयद्दुःखं तु यज्जातं, तद्धा प्राग्दुष्कृतैः कृतम्। न शक्यतेऽन्यथा कर्त्तुं, शक्रैरपि कुतो मया? ॥ ९५ ॥ यतः–"अस्ति बुद्धिः परेषां हि, कोपव्यावर्त्तनक्षमा। शक्रोऽपि कुपितं कर्म, नैव सान्त्वयितुं पटुः ॥ ९६ ॥" अतःपरं परं भाग्यं, परंतप! निरन्तराः। निरन्तरायाः प्राप्तोऽसि, चिरं सम्पत्परम्पराः ॥ ९७ ॥ जीवितोपकृतिक्रीतः, प्रीतस्तस्मै स भूपतिः। क्षमयित्वा ददौ राज्यं, स पुनर्नाग्रहीत्तदा ॥ ९८ ॥ पल्यङ्कं स्वतुरङ्गं च, सरङ्गं जगृहे तु सः। सन्तो हि सन्तोषजुषः, प्रत्तेष्वप्यन्यवस्तुषु ॥ ९९ ॥ स स्त्रीरत्नेन तद्रत्नत्रितयेन च सङ्गतः। रङ्गतः कतिचित्तत्र, दिनांस्तस्थौ दृढाग्रहात् ॥३००॥ तमापृच्छय नृपं सोऽथ, प्रतस्थे स्वपुरं प्रति। देवीकृतविमानस्थो, निस्समानमहर्द्धियुक् ॥१॥ अथ च–वीरसेनस्य सैन्यं तत्, स्वपुरोद्यानमागतं। तस्यानागमनात्तत्र, हृदि दुःखमधाद्भृशम् ॥२॥ वीरसेनं विना सेना, शून्या तनुरिवात्मना। तस्थौ कथञ्चित्तत्रैवापेक्षमाणा तदागमम् ॥ ३ ॥ एतद्व्यतिकरं दुःखाकरं श्रुत्वा पिताऽप्यभूत्। दुःखाद्वयमयः पुत्रशोकात् को वा न दूयते? ॥ ४ ॥ जनोऽन्यदा तदागच्छद्दिव्यप्रेक्षणकक्षणम्। दिव्यं विमानं वीक्ष्योच्चैर्निःशेषोऽपि विसिष्मिये ॥ ५ ॥ दिष्ट्या वर्द्धाप्यसे देव!, तव सूनुः समेत्ययम्। इत्यादि वर्द्धापनिकोत्सवं कीरोऽकरोत्तदा ॥ ६ ॥ अथो पृथूत्कण्ठितेन, स्वसैन्येन पुराद्बहिः। यूथेश इव यूथेन, संजग्मे जगतीशसूः ॥ ७ ॥ प्रावेश्यत ततः पित्रा, पुत्रश्चित्रकृदुत्सवैः। रामो दशरथेनेव,

दुःखवारिणा मोचयत्वमुम् ॥ ७७ ॥ चक्रुश्च पट्टदेव्याद्यास्तथा न त्वभवत्फलम् । दुःसंभवा हि मनसा, वि-
शुद्धिः शीलशीलने ॥ ७८ ॥ तदपत्रपया तासु, न्यङ्मुखास्वखिलास्वपि । का सती स्याद्विशुद्धेति, संशयाने
जनेऽखिले ॥ ७९ ॥ देव्युवाद स्वापवादच्छेदायोत्सर्गकारिणी । फुम्फागृहेऽस्ति श्लाघ्याऽहो! कुसुमश्रीर्महास-
ती ॥ ८० ॥ युग्मम् ॥ कुमारमन्त्रिप्रमुखाः, सर्वे गर्वेण वर्जिताः । स्वयं गत्वा स्वेष्टसिद्ध्यै, प्रह्वा आह्वानयंतु ताम्
॥ ८१ ॥ विस्मिता देवतावाक्यात्तेऽपि तत्र गता द्रुतम् । आह्वयन् बहुमानात्तां, कीरोऽपि प्रैरयत्तथा ॥ ८२ ॥
देवताऽप्येत्य तत्रोचे, बाले! बालेन्दुनिर्मले! । शीललीलायितं किञ्चित्, कौमुदीवत् प्रदर्शय ॥ ८३ ॥ ततः सा
पारितोत्सर्गा, निसर्गादपि वत्सला । उपक्ष्मापतिं प्रापद्दिव्यनव्यमहोत्सवैः ॥ ८४ ॥ मनसा वचसा कायेनाप्या-
जन्म न चेत्परः । अकामये कुमारात्तत्सिद्धिरत्रास्तु माऽन्यथा ॥ ८५ ॥ इत्युच्चैः प्रोच्य सा तोयच्छटयाऽच्छोटयन्नृपम् ।
बन्धाश्च शीर्णतृणवत्त्रटत्त्रटदिति तुत्रुटुः ॥ ८६ ॥ आकाशात्पुष्पवृष्टिश्च, तदाऽभूत्तोयवृष्टिवत् । शीलेन निष्कल-
ङ्केन, किं किं वा दुर्लभं नृणाम्? ॥ ८७ ॥ स्वस्थीभूतस्ततो भूतधात्रीशः स प्रभूतमुत् । व्रीडाविषादविस्मयर-
सैश्च विवशोऽप्यभूत् ॥ ८८ ॥ वेश्यावेश्मस्थिताऽप्येषा, प्राग्रेखा सतीष्वहो । कथमित्थं कुमारोऽथ, देवीं
पप्रच्छ वत्सलाम् ॥ ८९ ॥ ततस्तया समस्तेऽपि, वृत्तान्ते कथितेऽद्भुते । चित्रीयमाणाः सर्वेऽपि, श्लाघन्ते स्म
शुकं च ताम् ॥ ९० ॥ केयं किमसत्सान्निध्यं, विदध्यादिति विस्मितौ । कुसुमश्रीकुमारौ तु, देव्युवाद प्रसाद-
भृत् ॥ ९१ ॥ सुभगौ मां युवां दक्षौ, नोपलक्षयथः कथम्? । पद्मदेव्यसि कुसुमपुरे प्राक् तोषिता त्वया

गतप्राणे, निस्त्राणे रमणे भुवः। किंकर्त्तव्यविमूढेषु, प्रौढेष्वपि च मन्त्रिषु ॥ ६२ ॥ हाहारवपरे पौरे, निकरे परितोऽपि च। दिव्याविरभवद्दिव्या, वाग् युगान्ताब्दगर्जिवत् ॥ ६३ ॥ युग्मम् ॥ भो! भो जनाः! निजनिजं, स्थानं यात द्रुतं द्रुतम्। पापः पापफलं ह्येष, लम्भनीयोऽधुना ध्रुवम् ॥ ६४ ॥ धूपोत्क्षेपादिभक्त्याऽपि, विनयोक्त्याऽपि मन्त्रिणाम्। अदृष्टः कोऽप्यसौ कोपाटोपो यावन्न शाम्यति ॥६५॥ तावत्परोपकारैकरतिः प्रकृतिसत्तमः। कुमारः स्माह तं स्वामिन्!, मुञ्च मुञ्च कृपां कुरु ॥६६॥ युग्मम्। प्रसीद सीदति जनेऽस्मिन्नशेषे विषादिनि। प्रत्यक्षीभूय चाख्याहीत्याख्याते क्षितिभृद्भुवा ॥ ६७ ॥ वेतालवत्करालः कोऽप्याविर्भूयाभ्यधात्सुरः। कथं मोचयसे वीर!, वीरसेन! निजं रिपुम् ॥ ६८ ॥ अरिकेशरिराजेन्द्रकुलाधार! कुमार! किम्। न स्मरस्येष खट्वाभ्यौ, पुरा तेऽपहरिष्यति? ॥ ६९ ॥ प्राप्तोऽयं वां विवाहे तौ, दृष्ट्वा लुब्धस्तथा छलात्। विद्यया बहुरूपिण्या, हृत्वा त्वां व्यसनेऽक्षिपत् ॥७०॥ दुष्टाः कष्टफलं स्पष्टं, दृष्टं विना न मन्वते। उक्त्वेति मुद्गरेणोच्चैस्तं प्रहर्त्तुं दधाव सः ॥७१॥ तदाऽन्तरे कुमारेणाचिरेणैव प्रवेशिना। पादयोः पतितेनोपशमितः कथमप्यसौ ॥७२॥ लोकोऽस्तोकोऽपि विस्मेरविस्मयश्च व्यचिन्तयत्। शत्रोरपि परित्राणे, धीरहो! धीरचेतसः ॥ ७३ ॥ स्वस्वीयः स्वहितः स्वस्याद्विष्टो वा कैर्न रक्ष्यते?। विपक्षरक्षादक्षास्तु, त्रिजगत्यपि दुर्लभाः ॥ ७४ ॥ परावर्त्याऽथ तद्रूपं, स्वरूपं दिव्यरूपिणी। स्फुटीकृत्यावदद्देवी, भो भोः शृणुत तात्त्विकम् ॥ ७५ ॥ इमे वज्रमया बन्धा, निर्बन्धाः क्रुद्धया मया। कृताश्छुटिष्यन्ति महासतीहस्तेन नान्यथा ॥ ७६ ॥ तदत्राऽऽजन्म या शुद्धा, प्रसिद्धा सा महासती। स्वहस्तवारिणा

"टङ्कच्छेदे न मे दुःखं, न दाहे न च घर्षणे। एतदेव महद्दुःखं, गुञ्जया सह तोलनम् ॥ ४७ ॥" तां तथा दुः-
स्थितावस्थां, निध्याय ध्यायति स्म सः। नेयं नाम पणस्त्रीव, कुलस्त्रीव तु लक्ष्यते ॥ ४८ ॥ तदियं दयिता
किं मे, धिग् धिग् वा सा महासती। किमेतद्धामनामापि, शफरीव दवं सहेत्? ॥ ४९ ॥ तदेषा काचि-
दन्यैव, दुर्दैववशतस्तु सा। को वेद क गता कास्ति, नास्ति वा काऽसि हा प्रिये! ॥ ५० ॥ स्मृतदुःखं तमप्येवं,
न्यङ्मुखं वीक्ष्य पक्षिराट्। स जगाद विषादोऽयं, कः प्रमोदपदेऽद्य वाम्? ॥ ५१ ॥ श्रुत्वेत्यूर्द्ध्वमुखः प्रेक्ष्य, प्रे-
क्षावान् पञ्जरे शुकम्। अयं क्रीडाशुकः किं मे?, यावदेवं व्यतर्कयत् ॥ ५२ ॥ तावदागात्तदुत्सङ्गे, रङ्गणात्यु-
त्सुकः शुकः। उपलक्ष्य च संभाष्य, स्नेहात्तेनाप्यपृच्छ्यत ॥५३॥ वत्स! वेत्सि प्रियाशुद्धिं, कामपीत्यथ सोऽ-
प्यवक्। स्वामिन्! कोऽयं भ्रमस्तेऽद्य, देवीयं पुरतः स्थिता ॥ ५४ ॥ ॥ तन्निशम्य कुमारः श्राग्, निकामं श्या-
मलाननः। चित्तान्तश्चिन्तयामास, धिगहो चरितं स्त्रियाः ॥ ५५ ॥ इयं तस्य महीभर्त्तुर्दुहिता मम च प्रिया।
अद्रष्टव्यमथाश्रव्यं, वेश्यात्वं कथमाचरेत्? ॥ ५६ ॥ माननीयः सतां पुत्रस्थानीयश्च शुकोऽप्ययम्। कारयेदी-
दृशं कर्म, धिग् द्वयोर्निर्विवेकताम् ॥५७॥ तदस्या अतिनिन्द्याया, न युक्तं दर्शनाद्यपि। विषादविपदाहेन, या-
वदेवमदाहि सः ॥५८॥ उत्तालस्तुमुलस्तावद्भूपालभवनेऽभवत्। तां त्याज्यामिव तद्व्याजात्त्यक्त्वा द्राक् तत्र सो
ऽप्यगात् ॥५९॥ युग्मम्। अद्राक्षीच्च दृढं क्रौञ्चबन्धं बद्धं धराधवम्। फेनायमानं भूपीठे, लुठन्तं वध्यजन्तुवत् ॥६०॥
अथ संभाव्य तद्दिव्यमक्रियन्त प्रतिक्रियाः। मन्त्रिभिर्मन्त्रतन्त्राद्या, नैकास्तास्त्वभवन् वृथा ॥ ६१ ॥ अथ कण्ठ-

इत्थिलाभो कन्नेसु अ सोहणं कुणइ सद्दं। नेत्तंते धणलाभो उट्ठे विजयं विआणाहि ॥ ३२ ॥ पिट्ठे पराजओ-
विहु भोगो अंसे तहेव कंठे अ। हत्थे लाहो विजओ वच्छे नासाइ पीई अ ॥ ३३ ॥ लाभो थणेसु हिअए
हाणी अंतेसु कोसपरिवुड्ढी। नाभीइ थाणभंसो लिंगे पुण इत्थिलाभो अ ॥ ३४ ॥ कूलेसु सुओप्पत्ती ऊरूहि
बंधुणो अरिट्ठं तु। पासेसु वल्लहत्तं वाहणलाहो फिजे भणिओ ॥ ३५ ॥ पायतले फुरणेणं हवइ सलाभं
नरस्स अद्धाणं। उवरिं च थाणलाभो जंघाहिं थोवमद्धाणं ॥ ३६ ॥ पुरिसं स य महिलाए पुरिसस्स य दाहिणा
जहुत्तफला। महिलं सपुरिसमहिलाण हुंति वामा जहुत्तफला ॥ ३७ ॥" तां निर्णिनीषुरेषोऽथ, फुम्फागृहमुपा-
गतः। फुम्फायै प्रददे द्रव्यपदे स्वां मणिमुद्रिकाम् ॥ ३८ ॥ अथाङ्गस्फुरणात्तस्या, निर्णीय प्रियसङ्गमम्। याव-
द्व्यलोकयत् कीरः, कुमारं तावदैक्षत ॥ ३९ ॥ तां च वर्द्धापयामास, प्रियस्यागमनेन सः। क्षिप्रं निर्वापयामास,
तस्याश्च विरहानलम् ॥ ४० ॥ शृङ्गारं कारयामास, सारं रोमाञ्चितां च ताम्। दास्याऽथाकारयामास, ससम्यां
भुवि तं द्रुतत् ॥ ४१ ॥ भाग्ययोगाद्वियोगान्धकूपादिव स भूपभूः। उच्चैरुच्चैरथारोहत्, प्रापिवान् प्रेप्सितं पदम्
॥ ४२ ॥ स च चातुर्यपेटीनां, चेटीनां प्रतिपत्तिभिः। अनल्पमुद्दिव्यतल्पकल्पे तल्पे निविष्टवान् ॥ ४३ ॥ तदा
त्वसन्दसन्दाक्षाद्वीक्षापन्नासने पृथक्। निषण्णाऽधोमुखी दध्यावीदृक् सा साश्रुदृक् सुदृक् ॥ ४४ ॥ अस्मिन्
स्थाने स्थिताया मे, प्रस्थाने सद्गुणश्रियाम्। प्राणनाथः कथं हा धिक्, प्रत्येष्यति विशुद्धताम्? ॥ ४५ ॥ अनु-
भूतं महद्दुःखं, न मे स्वाट्कुरुने तथा। निन्दास्थानमवस्थानमिदं दैवकृतं यथा ॥ ४६ ॥ उक्तं चान्योक्तिकृता-

क्रणेनेवाभवद्बाष्पाम्बुपूर्णदृग् ॥ १६ ॥ व्यलापीच ततस्तेनाचिन्ति नूनं महेभ्यभूः । कोऽप्ययं पृच्छया पूर्व-
दुःखं स्मृत्वेदृशोऽजनि ॥ १७ ॥ तदलं तुच्छयाऽस्यैतत्पृच्छया हि महेच्छताम् । अतुच्छतां स्वच्छतां चाख्या-
न्ति सल्लक्षणान्यपि ॥ १८ ॥ यतः—“अभणंताविहु नज्जंति सुपुरिसा गुणगणेहिं निअएहिं । किं वुल्लंति मणीओ
जाउ सहस्सेहिं घिप्पंति” ॥ १९ ॥ सैवं विचिन्त्य कृत्यज्ञस्तमपुत्रः पवित्रधीः । इव राज्यपदे पुत्रपदे सद्यो न्य-
वीविशत् ॥ २० ॥ तस्यावकृत्रिमप्रेम्णा, सोऽप्यकृत्रिमपुत्रवत् । छेकानां छेकता सैव, यत्कार्यं समयोचितम्
॥ २१ ॥ वित्तैः प्रभूते जरसाऽभिभूते श्रेष्ठिनि क्रमात् । खःपथे पथिकीभूते, सोऽभूत्तद्भवनप्रभुः ॥ २२ ॥ ततोऽ-
यं स्वप्रियाशुद्ध्यै, वाणिज्यव्याजतः सुधीः । संभ्रमी बंभ्रमीति स्म, देशाद्देशं पुरात्पुरम् ॥ २३ ॥ भवे भव्य
इव आम्रयन्त्रभवं वाञ्छितप्रदम् । पुण्यैरगण्यैस्तु ततः, स प्राप श्रीपुरं पुरम् ॥ २४ ॥ तस्मिन् प्रविशतस्तस्य,
प्रशस्यशकुनादिभिः । काऽप्यासीज्जीवितेशा सा, जीविताशेव रोगिणः ॥२५॥ मध्येपुरं प्रविष्टश्च, निविष्टः कापि
हट्टके । अपृच्छदुत्सुकः कश्चित्स्वरूपं तत्पुरस्य सः ॥२६॥ सोऽप्याह नयसारोऽत्र, राजेन्द्रः श्रीपुरे पुरे । व्यवहारिण-
श्चानेके, शुद्ध्यैव व्यवहारिणः ॥२७॥ फुस्फावेश्यागृहे चैका, युवतिर्युवचेतसाम् । साक्षादेकरतिः काचिदत्रास्त्येकर-
तिः श्रुता ॥२८॥ सौवर्णपञ्चशत्याऽपि, तत्सङ्गस्त्वेकरात्रिकः । शृण्वन्नित्यादि सोऽध्यासीज्जात्वियं सैव संभवेत् ॥२९॥
सा वा स्यात्कथमीदृक्षेत्यमुना संशयालुना । निर्णीतमङ्गस्फुरणैर्मिलेदेवाद्य सा क्वचित् ॥३०॥ यदङ्गविद्या—“सिरफु-
रणे किर रज्जं पियमेलो होइ वाहुफुरणंमि । अच्छिफुरणंमि अ पिअं अहरे पिअसङ्गमो होइ ॥ ३१ ॥ गल्लेसु

असौ तत्तद्रसावेशविवशः पशुवत्पुनः। विभातायां विभावर्यामावासान्निरवास्यत ॥ १ ॥ तस्यास्तु भूमौ सस्मयां, तस्थुष्या दुर्भुजिष्यवत्। पट्टदेव्या इव क्वापि, नैक्षिष्ट मुख्यमप्यसौ ॥ २ ॥ बिडालः शिक्यकाद्भ्रष्ट, इव फालच्युतः कपिः। दायाद्वा धूतकृद्भ्रान्तस्ततो हस्तौ जघर्ष सः ॥ ३ ॥ मुधा द्रव्यव्ययात्स्वेष्टकार्यभ्रंशाच्च सोचकैः। सव्यथोऽपि व्यथां नाख्यद्धूर्त्तो घृष्टो हि मौनभाग् ॥ ४ ॥ अन्येषामपि यद्येवं, भवेद्यूनां विडम्बना। तदाऽन्यैः समता मे स्यान्न दुःखं पश्चभिः सह ॥ ५ ॥ ध्यायन्निति स धूर्त्तात्मा, स्वभ्रान्तरप्यनीक्षितम्। रूपादि तस्याः प्राशंसीत्, पुरो यूनां मुहुर्मुहुः ॥ ६ ॥ ततस्तद्वद्युवानोऽन्येऽप्युत्सुका यान्ति तद्गृहम्। वञ्च्यन्ते च तथैवाहो !, कामिनां सुखवञ्च्यता ॥ ७ ॥ मिथः सम्भावितस्यापि, वञ्चनस्याप्रकाशनात्। तुल्योक्तीनां तदा तेषां, धूर्त्तमैत्र्यमिवाभवत् ॥ ८ ॥ तस्याश्चैकरतीत्याह्वा, सार्थका शुककल्पिता। एकप्रकारानुभवात्, ख्याता तेष्वपि सार्थका ॥ ९ ॥ एवं निरर्गलद्रव्यप्राप्त्या प्रीता पणाङ्गना। स्वशीलपालनात्साऽपि, काऽपि कीरस्य धीरहो !॥१०॥ प्रतीपयोरपि मिथः, स्वार्थसिद्ध्या द्वयोस्तयोः। माननीयः स भूम्नाऽभूत्, प्राज्ञो मान्यो न कस्य वा ?॥ ११ ॥ आशालग्ना महादुःखमग्ना सेत्थं कथञ्चन। सुमुखी शुकसाहाय्यात्, कालं बहुमवाहयत् ॥ १२॥ इतश्च वीरसेनोऽब्धितटे सफलकः क्रमात्। क्षिप्तः सप्तदिनैः पुण्यकर्मणेव स वायुना ॥ १३ ॥ स नष्टचेतनः कष्टपतितस्तत्र दैवतः। ददृशे स्वदृशाऽऽसन्ननगरव्यवहारिणा ॥ १४ ॥ दयालुनाऽमुनाऽऽनीय, स्वधाम्नि विविधौषधैः। सज्जीकृत्य च वृत्तान्तमयं यावदपृच्छ्यत ॥ १५ ॥ तावदेव स्मृतप्राच्यावस्थः सन् दौस्थ्यमास्थितः। शल्यखा-

गाक्षी च, दक्षाख्याहि समीक्ष्य मे। भावी न वा प्रिययोगो, यदि नो तत्त्यजाम्यसून् ॥ ८६ ॥ अस्या विवेकक्कु-ट्टिन्याः, कुट्टिन्याः पुरतोऽन्यथा। कथं शीलं मया रक्ष्यमथाचख्यौ समीक्ष्य सः ॥ ८७ ॥ मा सन्दिग्धा असन्दिग्धे, सौग्ध्याद्दयितसङ्गमे। परं कालविलम्बः प्राग्, देव्याऽप्युक्तः कथं टलेत्! ॥ ८८ ॥ मातर्माऽतः परं तस्मात्, खेदं कार्षीस्तव ध्रुवम्। शीलं निर्वाहयिष्येऽहं, कुरु स्नानादिकं मुदा ॥ ८९ ॥ दृढाशा साऽथ षण्मास्यां, पूर्णायां तूर्णमातनोत्। स्नानाङ्गभोगशृङ्गारान्, विज्ञोक्ते का विचारणा ? ॥ ९० ॥ दास्यादिभ्यस्ततस्तस्या, विश्वस्याप्यद्भुतप्रदाम्। रूपादिसम्पदं श्रुत्वाऽन्यदाऽऽगात् कश्चिदिभ्यभूः ॥ ९१ ॥ उत्कण्ठिते स्थिते द्वारि, तस्मिन् विस्मेरयौवने। दास्याऽथ तस्या विज्ञप्तं, यूनोऽभ्यागमनं मुदा ॥ ९२ ॥ सती प्रोक्तवती साऽथ, शुकोऽत्रार्थे समर्थधीः। यद्वक्ति वितनुध्वं तत्ततः कीरोऽप्युदैरयत् ॥ ९३ ॥ दीनारान् वितरेत् पञ्चशतीं चेत्षोडशोत्तराम्। तदैकरात्रं सोऽभ्यैतु, गत्वाऽऽख्यत् साऽपि तस्य तत् ॥ ९४ ॥ हृष्यन्नासैश्वर्य इव, स वेश्याव्यसनी धनी। तदपि प्रतिपद्य द्राग्, यावद्द्रव्यमुपानयत् ॥ ९५ ॥ तावत् समग्राः सामग्रीः कुशाग्रीयधिया रयात्। कामुकस्य चतुर्यामातिक्रमार्थं पृथक् २ ॥ ९६ ॥ दासीर्दक्षाः शिक्षयित्वा, रहः कीरेण कारिताः। प्रीत्याऽऽगत्याथ कुट्टिन्यै, स द्रव्यं देयवद्ददौ ॥९७॥ विशेषकं ॥ अभ्यङ्गोद्वर्त्तनस्नानैर्यामिन्या याममादिमम्। अथाद्यभूमौ क्षणवद्दास्या तस्यात्यवाहयत् ॥ ९८ ॥ एवं भूमौ द्वितीयायां, द्वितीयं याममादरात्। अशनैः पानकैः खाद्यैः, स्वाद्यैश्च विविधैर्वरैः ॥ ९९ ॥ तृतीयायां तृतीयं तु, गीतवाद्यादिकौतुकैः। तुर्यं नृत्यादिचातुर्यात्तुर्यायां भुवि चाद्भुतात् ॥ २०० ॥

कृती लोकाय यः कामितम् ॥ ७० ॥" अपि कार्पटिकादिभ्यः, पतिशुद्ध्यै विशुद्धधीः। वैदेशिकेभ्यः सर्वेभ्यः, प्रदत्ते सा यथोचितम् ॥ ७१ ॥ तेन स्वामिवियुक्तेन, शुकेन भ्रमता वने। विदग्धचूडामणिना, दुःखिना शुश्रुवे त्वदः ॥ ७२ ॥ यत् काचित् कामिनी नित्यं, दुःखिनी नवयौवना। नित्यमव्यग्रचित्तेन, प्रदत्ते पक्षिणां कणान् ॥ ७३ ॥ स ततोऽस्याः स्थितिस्थाने, सकर्णस्तूर्णमागमत्। कुसुमश्रीरियं नूनं, भाविनीति विचिन्तयन् ॥७४॥ तत्रागतः स तद्दृष्टिरपि तां पिहिताङ्गिकाम्। अभिज्ञोऽनभिजानंस्तत्पार्श्वे चूर्णिमिषाद्ययौ ॥ ७५ ॥ अत्यासन्नः स विज्ञस्तु, व्यालोक्य क्रममक्रमात्। तां निर्णीय निजां वाणीं, प्रणयेन प्रणुन्नवान् ॥ ७६ ॥ स्वामिनि ! स्वं जनं किं न, प्रसन्ननयनैर्निजैः। सम्भावयसि ? भावज्ञं, मिलनोत्कण्ठुलं चिरात् ॥ ७७ ॥ अचिन्तितामृताम्भोदसागरां तां गिरं चिरम्। सा स्वकर्णपुटैः पीत्वा, परमानन्दमासदत् ॥ ७८ ॥ उद्घाट्य वदनं स्नेहसदनं वीक्ष्य तं शुकम्। ससम्भ्रमं निजोत्सङ्गे, रङ्गेण जगृहेऽथ सा ॥ ७९ ॥ तयोस्तदा हृदानन्दबाष्पाकुलितनेत्रयोः। स्पर्द्धयेव द्वयोरासीत्, कोऽपि रोमाञ्चकञ्चुकः ॥ ८० ॥ सा तमालिङ्ग्य सस्नेहं, स्नेहपात्रं स्वपुत्रवत्। आलापयत् प्रियालापैरावापैरमृताम्भसः ॥ ८१ ॥ अथ प्रार्थितसञ्जाततदागमनजातया। स्वपत्यागमनप्रत्याशया प्रीताऽन्वयुङ्क्त तम् ॥ ८२ ॥ पत्युः शुद्धिं वत्स ! वेत्सि ?, सखेदं सोऽपि नेत्यवक्। निराशेव दुरालापान्, विलापान् सा व्यधास्ततः ॥ ८३ ॥ ततः कीरेण धीरेण, धीरिता भणिता च सा। सर्वमम्ब ! शुभं भावि, स्मर तद्देवतावचः ॥८४॥ पूर्वसाङ्गतिकः क्रीडाकीरोऽसावित्युदीर्य सा। दास्यानीते ततोऽक्षेप्सीत्तं कीरं मङ्क्षु पञ्जरे ॥८५॥ तमप्राक्षीन्मृ-

विशेषवेषभूषणात् । लावण्ययौवनश्रीस्ते, हलेऽस्यास्तु फलेग्रहिः ॥५६॥ सती ध्यातवती त्वत्र, शीलमाजन्म नि-
र्मलम् । हा ! निर्वाह्यं कथं शौचमिव श्वपचपाटके ? ॥ ५७ ॥ पत्युः प्रत्याशया मृत्युः, साम्प्रतं नहि साम्प्रतम् ।
शुद्धबुद्धिः स कीरोऽपि, दूरोऽभून्मम दैवतः ॥ ५८ ॥ यद्वा स्यात्कालविक्षेपोऽप्यशुभे शुभसम्पदे । कीरोऽपि
जातु मिलतीत्यजल्पत् परिकल्प्य सा ॥५९॥ मातरस्मत्कुले रीतिरियं यद्दयिते मृते । षण्मासान् पक्षिणां भक्ष्यं,
दीनदानं च दीयते ॥ ६० ॥ ततः स्वैरं तु शृङ्गारकरणाद्यपि युक्तिमत् । इत्युक्त्या कुट्टिनी हृष्टा, तदर्थं सर्वमार्पि-
पत् ॥ ६१ ॥ युग्मम् । सा शीलशालिनी शालिमुख्यासङ्ख्यकणोत्करान् । अनेकांस्तनुते नित्यं, कुट्टिनीहर्म्यकुट्टिमे
॥ ६२ ॥ केकिकाकशुकक्रौञ्चकलविङ्ककपिञ्जलाः । कपोतचक्रचाषाश्च, वहिका लावकादयः ॥ ६३ ॥ पक्षिणोऽ-
न्येऽप्यनेके तद्भक्ष्यभक्षणकाङ्क्षिणः । तत्राययुर्याचकवद्दिने दिनेऽधिकाऽधिकाः ॥६४॥ युग्मम् । तेषां ग्रासभिया
क्लृप्तसर्वाङ्गाच्छादना तु सा । कृतावगुण्ठना नित्यं,कणान् दत्तेऽतिदुःखिनी ॥६५॥ विश्वस्ता अपरित्रस्तास्ततस्तेऽपि
पतत्रिणः । दूरातिदूरादायान्ति, कणानाहारयन्ति च ॥ ६६ ॥ मिथश्च कथयन्ति स्म, विस्मिताः सस्मिताश्च
ते । नरा नराणां दानानि, ददते न तु पक्षिणाम् ॥ ६७ ॥ इदमस्याः पुनर्दानं, निदानं सर्वसम्पदाम् । दीयमानं
विमानं हि, निस्समानं कथं स्तुमः ? ॥६८॥ इत्थं पक्षिगणास्तस्याः, सद्गुणोद्घोषघोषणैः । दानर्णं शोधयन्तीव,
सांराविणपरायणाः ॥ ६९ ॥ यतः–"आरोहन्ति सुखासनान्यपटवो नागान् हयांस्तज्जुषस्ताम्बूलाद्युपभुञ्जते नट-
विटाः खादन्ति हस्त्यादयः । प्रासादं चटकादयोऽपि निवसन्त्येते न पात्रं स्तुतेः, स स्तुत्यो भुवने प्रयच्छति

दुःखं, वहन्तीं तां महासतीम् । कुम्फा प्राहान्यदा वत्से !, वत्सलं मद्वचः शृणु ॥ ४१ ॥ एषा मदनलेखा मे, लब्धरेखाऽङ्गनाजने । धन्या कन्या जगन्मान्या, मन्यतां भगिनी त्वया ॥ ४२ ॥ अस्मत्कुलं हि विमलं, महाभाग्येन लभ्यते । यत्र नित्यमवैधव्यं, दिव्यं भोगसुखादि च ॥४३॥ स्वकुटुम्बवियुक्तस्य, कस्य स्यान्नहि दुःखिता ? । नित्योत्सवं त्विदं वेश्म, स्वर्वत्प्राप्ताऽसि पुण्यतः ॥४४॥ विमुच्य दुःखं सौख्याङ्गभोगानङ्गीकुरुष्व तत् । तवायत्तमिदं सर्वं, परीवारगृहादिकम् ॥ ४५ ॥ इदं दुःशकुनारावमिवोद्वेगकरं परम् । श्रुत्वा सा विधुराऽध्यासीद्, धिगस्या मूढभाषितम् ॥ ४६ ॥ निन्द्येभ्योऽप्यतिनिन्द्याया, न द्रष्टव्यमुखा च या । यन्नाम्नाऽपि सतां शङ्का, धिग् साऽपि स्वं विकत्थते ॥ ४७ ॥ यदवाच्यं यदश्रव्यं, यन्महापापकारणम् । उपदेश्यं तदप्यस्या, अहो ! नीचजनस्थितिः ॥४८॥ किमुत्तरं करोम्यस्याः ?, मौनेन च कियच्चिरम् । मया स्थेयं ? विधेयं च, किं वा ? काऽत्र गतिर्मम ? ॥ ४९ ॥ इति चिन्ताकुला बाला, तयाऽलापि पुनर्दृढम् । स्वस्वरूपं त्वया वत्से !, वाच्यमेवाधुना मनाग् ॥ ५० ॥ उक्तिः सम्यग् न युक्ताऽत्रेत्यजल्पत् साऽपि कल्पितम् । श्रीवसन्तपुरे श्रेष्ठी, देवसेनः पिता मम ॥ ५१ ॥ पतिः पुनर्वसन्ताख्यः, सांयात्रिकतया मया । सार्द्धमब्धावगाद्भग्ने, पोते मां तिमिरग्रहीत् ॥५२॥ इति श्रुत्वाऽश्रुमिश्राक्षी, कुट्टिनी कपटे पटुः । प्राह हा ! हा ! महाकष्टमीदृग् मा भूद्विषामपि ॥ ५३ ॥ अन्तस्तु हृष्टा दुष्टा साऽध्यासीत्सिद्धं ममेप्सितम् । इयं मृतधवा दैवाद्देवीवाऽऽप्ता मयाऽनघतः ॥ ५४ ॥ एवं विचिन्तयन्ती सा, परिवारान्विताऽपि ताम् । आवर्जयन्ती सर्वाङ्गैरन्यदा प्रावदन्मुदा ॥ ५५ ॥ अङ्गीकुरु कुरङ्गाक्षि !,

चेष्टितम् ॥ २६ ॥ पातालं प्रविशन्तीव, मज्जन्ती सा ततोऽम्बुधौ । जग्रसेऽजगरेणेव, महामत्स्येन केनचित्
॥ २७ ॥ यतः–"छित्त्वा पाशमपास्य कूटरचनां भङ्क्त्वा बलाद्वागुरां, पर्यन्ताग्निशिखाकलापवसनान्निर्गत्य दूरं
वनात् । व्याधानां शरगोचरादतिजवेनोत्प्लुत्य धावन् मृगः, कूपान्तः पतितः करोतु विधुरे किं वा विधौ पौरु-
षम् ? ॥ २८ ॥" वज्रकुम्भीनिभे मत्स्यकुक्षौ कृच्छ्रेण सा स्थिता । जीवन्ती हन्त ! कथमप्यापि नारकदुःखिताम्
॥ २९ ॥ भवितव्यतानुभावाद्भ्रामं २ तिमिश्च सः । काप्यल्पनीरे तीरेऽगाद्विपेदे च सपद्यपि ॥ ३० ॥ तं मत्स्यं
मात्स्यिकोऽगृह्णान्मूल्याच्च जगृहुस्ततः । फुरुफाह्ववेश्यादास्योऽष्टावासन्नश्रीपुरागताः ॥ ३१ ॥ ताभिस्तुष्टाभि-
र्दृष्टाभिरिष्टाभिर्गणिकागृहे । कष्टेनोत्पाट्य नीतोऽसौ, शङ्कया यावदुद्यदार्यत ॥ ३२ ॥ तावदाविरभूत्तत्र, चित्रकू-
द्रूपसम्पदा । मञ्जूषान्तर्गता साक्षाल्लक्ष्मीरिव मृगेक्षणा ॥ ३३ ॥ तां मृतामिव मूर्च्छालां, बालां बहुविधौषधैः ।
पटूकृत्य पटूल्लापगुम्फफुम्फा मुदाऽवदत् ॥ ३४ ॥ निश्चितं ते कुलं बाले !, वपुर्लावण्यलीलया । तथाऽपि कथय
त्वं का, किं वाऽभूद्दुर्दशेदृशी ? ३५ ॥ सुगन्धिशीलकुसुमा, कुसुमश्रीस्त्वचिन्तयत् । मग्नाऽब्धौ किं न ? किं नाहं
विलीना मीनकुक्षिगा ? ॥३६॥ इयद्दुःखप्रदानेनाप्यतृप्तेन दुरात्मना । धिग् दग्धविधिना कस्मिन्, स्थाने क्षिप्ताऽ-
स्मि शत्रुवत् ? ॥ ३७ ॥ सासह्ये सर्वदुःखानि, वावह्ये वेन्धनाद्यपि । परं दद्ये प्रसह्येदं (ह), गृहनाम्नाऽप्यहं बहु
॥३८॥ तत्किं प्रतिश्रुवे ? यद्वा, मौनं सर्वार्थसाधकम् । ध्यात्वेति ध्यानलीनेव, मौनमेव ततान सा ॥३९॥ इदा-
नीमार्द्रदुःखेयं, क्रमात्सर्वं करिष्यति । इति साऽपि तदालापे, शिथिलीभावमावहत् ॥ ४० ॥ अनन्तमन्तस्तद्-

दम्पती रात्रिरथाङ्गमिथुनस्थितिम् ॥११॥ समयज्ञस्तु दम्पत्योरुड्डीयोड्डीय कीरराट्। गतागतैः कियत्कालं, मिथः शुद्धिमचीकथत् ॥ १२ ॥ ततः श्रान्तं शुकं शोकापिच्छलं श्रितवत्सलः। सोऽगदद्गद्गदं दैवाद्दुर्दशेयं पपात नः ॥ १३ ॥ मा भूदस्मत्कृते तेऽपि, मृतिरत्र पतत्रिणः। तन्मे शुद्धिं वदंस्तस्या, वत्स! गच्छ वनान्तरे ॥ १४ ॥ जीवन् पुनर्नः क्वापि त्वं, प्रियदर्शन! दर्शयेः। को वेद वा भावि किं नः, प्राणितेऽप्यद्य संशयः ॥ १५ ॥ धीरः कीरस्ततोऽवादीद्, देव! मा मुञ्च धीरताम्। धीरतामेव जानीहि, सेतुमापत्पयोनिधौ ॥ १६ ॥ यतः-"सत्यमनुज्झितधाम्नां स्खलितान्तरितोऽपि भवति पुनरुदयः। उदयत्येव सुराद्रेरस्तं गत्वाऽपि दिननाथः ॥ १७ ॥" लब्धोऽप्याराधितोऽपि प्राक्, सम्यग्धर्मोऽन्तरा क्वचित्। अखण्डि नूनं तज्जज्ञेऽस्माकं वैशसमीदृशम्॥१८॥ यतः-"सेवितः किल सम्पूर्णः, सम्पूर्णं तनुते फलम्। जनानां जिनधर्मोऽपि, खण्डितः खण्डितं पुनः ॥१९॥" पुनः सर्वं शुभं भावि, यद्भाग्यं भवतोऽद्भुतम्। न किं स्मरसि देव्योक्तमित्युक्त्या तमधीरयत् ॥ २० ॥ मुहुर्विसृष्टः कृच्छ्रेणापृच्छ्यान्तरश्रुदृक् शुकः। तस्याः पार्श्वे समायासीत्, परमाभीष्टबन्धुवत् ॥ २१ ॥ विविधं विलपन्ती तां, धीरयन् धीरधीरयम्। न्यवेदयत्कुमारोक्तं, साऽप्यथो साऽश्रुदृग् जगौ ॥२२॥ याहि याहि निजान् प्राणान्, पाहि २ कथञ्चन। अवश्यं प्राकृतं कर्मास्माभिर्भोक्तव्यमत्र तु ॥२३॥ ततो वहन् महादुःखमनन्यगतिकः सकः। शुकः कथमपि प्रापदासन्ने कानने क्वचित् ॥ २४ ॥ रुदती सुदती साऽथ, तुदती स्वकर्मार्त्तिभिः। अत्याकुलीकृता वीचीभिर्भैर्जलचरैरपि ॥ २५ ॥ दुष्कर्मवशतस्तस्याः, फलकं हस्ततस्ततः। जीवितव्यमिव भ्रष्टं, कष्टं धिग् विधि-

धरत् ॥९५॥ युग्मम्। विस्मयानन्दयोर्द्वैतमद्वैतं दधती तु सा। पप्रच्छ स्वच्छधीः स्वामिन्!, क्व गतश्चागतः कुतः?
॥९६॥ सोऽपि प्राह प्रिये! नैव, जानेऽब्धौ केन पातितः?। इतस्ततस्तरन्मुक्तोऽप्युद्धृत्यात्र च केनचित् ॥९७॥
अकृत्रिमं मुमुदिरेऽन्ये सार्थेशस्तु कृत्रिमम्। अन्तराकस्मिकभयानुशयाभ्यां भृशार्दितः ॥ ९८ ॥ कुमारस्तस्य
दुर्वृत्तं, नैवावादीद्विदन्नपि। अहो! कारुण्यदाक्षिण्यनैपुण्यनिधिता सताम् ॥ ९९ ॥ मनसाऽप्यस्य नाध्यासीद्वि-
रुद्धं शुद्धधीरयम्। कृत्याकृत्यफलं सर्वः, स्वयं सर्वोऽप्यवाप्स्यति ॥ १०० ॥ उक्तं हि—"अपकारिषु मा पापं,
विचिन्तय कदाचन। स्वयमेव पतिष्यन्ति, कूलजाता इव द्रुमाः ॥ १ ॥" प्राग्वदेव कुमारेऽथ, तस्थुषि स्वस्थता-
जुषि। सार्थपोऽपि तथैवास्थाद्रक्तभृत्य इवानिशम् ॥२॥ इतश्च दुश्चरिततां, तस्य वीक्ष्येव कोपतः। पवनः प्रति-
कूलः सन्, प्रचण्डोद्दण्डतां दधौ ॥ ३ ॥ महावातोच्छलल्लोलकल्लोलैः कौतुकादिव। प्राप्यन्त हन्त ते पोता-
स्तदानीं कान्दुकीं कलाम् ॥ ४ ॥ महोपलैरिव महाकल्लोलैः प्रबलैस्ततः। आस्फाल्यास्फाल्य भग्नास्ते, भाण्डव-
त्खण्डशः क्षणात् ॥ ५ ॥ सार्थेशः सह सार्थेन, वस्तुसार्थे गतेऽम्बुधौ। मोहात्तत्पृष्ठगामीव, हा हा कुर्वन्निमग्न-
वान् ॥ ६ ॥ अत्युग्रपुण्यपापानामिहैव फलमाप्यते। इतीव सार्थवाहस्य, तादृशी दुर्दशाऽभवत् ॥ ७ ॥ कुमारः
कीरयुग् दैवात्फलकं प्राप्य तत्क्षणात्। कुसुमश्रीरपि तथा, काऽप्यहो! सुकृतप्रथा ॥ ८ ॥ फलके चेलतुस्ते च,
पान्थाविव पृथक् २। व्यञ्जन्ती इव जीवानां, भवे भिन्नपथां गतिम् ॥ ९ ॥ मुक्ताविवेकतः किञ्चिन्निकटेऽपि तटे
तदा। ऊर्मिभिः कर्मभिर्दूरं, नीयेते ते तु जन्तुवत् ॥ १० ॥ अभिलाषभवाद्दैवलम्भिताद्विप्रलम्भतः। प्राप्तौ तौ

दितः कूपादिव स्यात्तव निर्गमः ॥ ८० ॥ इत्युक्त्वाऽन्तर्हितायां द्राग्, देवतायां तदैव सः । तचैत्योत्तुङ्गशृङ्गाग्रे, चिह्नहेतुं ध्वजं न्यधात् ॥ ८१ ॥ सांयात्रिको धनपतिः, सार्थपोऽथ परार्थकृत् । वीक्ष्य चिह्नध्वजं प्रैषीद्वणिक्पुत्रान् द्रुतं निजान् ॥ ८२ ॥ तेऽप्यागत्य कुमाराय, प्रोचिरेऽस्मत्प्रभुः प्रभो ! । उद्धरत्यब्धिपतितान्, प्रदत्ते शम्बलाद्यपि ॥ ८३ ॥ पादावधार्यतां द्राक् तत्सोऽथ हृष्टः सुरीमवक् । देवि ! मामापदः पायाः, पूरयेश्च मनोरथान् ॥ ८४ ॥ इत्युक्त्वा स सुरीं नत्वा, शुकमादाय सप्रियः । उपेतः पोतपतिना, स्वपोतेऽप्यध्यरोप्यत ॥८५॥ पृष्ट्वा ज्ञाते कुमारस्य, वृत्तान्ते सार्थपोऽप्यथ । दुःखीबभूव को वा न, दुःखी दुःखे महात्मनाम् ? ॥ ८६ ॥ ततः सार्थपतिस्तत्तद्वचनैस्तं प्रमोदयन् । भक्त्या भुक्त्यादिसद्युक्तिं, कुर्वन्नावर्जयत्तराम् ॥ ८७ ॥ क्रियासमभिहारेणान्यदा तु कुसुमश्रियः । रूपं निष्प्रतिरूपं निरूपयन्मुह्यति स सः ॥ ८८ ॥ तस्यां लुब्धश्च दुर्बुद्धिश्छलं लब्ध्वाऽथ तं निशि । क्षिप्रं चिक्षेप विश्रब्धमब्धौ स्वं तु भवाम्बुधौ ॥ ८९ ॥ अब्धौ नृपाततुल्योऽभूत्, निर्घातः कोऽपि सम्प्रति । भो ! भो ! स्वस्वमनुष्यांस्तत्सम्भालयत यत्नतः॥ ९० ॥ इत्युच्चैः पूत्कृते पोतपतिनैव च कैतवात् । सोत्थिता चक्रवाकीव, स्वं पतिं नैक्षत क्वचित् ॥ ९१ ॥ छिन्नशाखेव साऽकस्मान्मूर्च्छिता न्यपतत्ततः । कथञ्चिदुत्थिता चापि, विललाप मुहुर्मुहुः ॥ ९२ ॥ विलापं दाम्भिकालापं, सोऽप्युच्चैश्चकृवांस्ततः । सर्वेऽन्येऽपि तदा दीनं, लपन्ति विलपन्ति च ॥ ९३ ॥ अथ जाते प्रभातेऽन्यै,र्वार्यमाणाऽपि सर्वथा । सती सुतीव्रदुःखाब्धौ, यावज्झम्पां ददाति सा ॥ ९४ ॥ तावद्देव इवाकस्मात्प्रादुर्भूयाशु भूपभूः । मा मा राभस्यमितिवाग्, बाहुभ्यां तामदी-

कस्मै न प्रभविष्णवः ? ॥ ६५ ॥ तस्यां पश्चिमायां च, शुकः सुप्तोत्थितस्ततः । अपश्यंस्तौ कुमारं च, चुस्वारावं विनिर्ममे ॥ ६६ ॥ कुसुमश्रीर्जजागार, तं श्रुत्वा दुःश्रवं रवम् । आरेकया कुमारोऽपि, भवेद्यावत्पराङ्मुखः ॥६७॥ गीतनृत्यादिकं तावदिन्द्रजालमिवाखिलम् । काप्यनेशद्भृशं सोऽपि, शशाङ्के च विसिष्मये ॥ ६८ ॥ स्वस्थानगश्च तौ खट्वाऽश्वाववीक्ष्य विलक्षहृत् । दध्यौ धिग्मे मुधा केयं, मूढता दुष्प्रमादिनः ? ॥ ६९ ॥ आः कीरेण तथोक्तेऽपि, काऽपि व्याक्षिप्तचित्तता । कूटनाट्येऽप्यभून्मे धिक्, स्वार्थभ्रंशोऽपि नैक्षि यत् ॥ ७० ॥ यद्वा स्वकार्यमूढस्य, प्रमत्तस्यैतदल्पकम् । अत्रामुत्रापि यत्पुंसां, प्रमादोऽनन्तदुःखदः ॥ ७१ ॥ पठ्यतेऽपि–"प्रमादः परमद्वेषी, प्रमादः परमं विषम् । प्रमादो मुक्तिपूर्दस्युः, प्रमादो नरकायनम् ॥ ७२ ॥" इत्याद्यर्त्तिमहादुःखं, दधतं तं प्रबोधयन् । शुकः प्राह प्रभो ! नैवं, युज्यते हि भवादृशाम् ॥ ७३ ॥ यतः–"आपत्सु संपतन्तीषु, पूर्वकर्मनियोगतः । धैर्यमेव परित्राणं, न युक्तमनुशोचनम् ॥ ७४ ॥" एवं ब्रुवन्तं कीरेन्द्रमार्यः पर्यन्वयुङ्क्त सः । सखे ! सखेदचित्तस्य, कृत्यं मे कथयाथ किम् ? ॥ ७५ ॥ सोऽप्याख्यद्देव ! दुर्दैवाद्दिव्यं दुर्ललितं ह्यदः । जज्ञे विज्ञेन तद्देवी, देवेनाराध्यतामियम् ॥ ७६ ॥ सोऽप्युपोष्य विशिष्यार्चाविधिनाऽऽराध्यति स्म ताम् । स्पष्टीभूय तृतीयेऽह्नि, तुष्टाऽभाषिष्ट साऽपि तम् ॥ ७७ ॥ कियत्कालविलम्बेन, मिलिष्यत्यखिलं च तत् । किन्त्वितोऽप्यधिकं दुःखं, भावि प्राक्कर्मतः कियत् ॥ ७८ ॥ यतः–"धारिज्जइ इंतो जलनिहीवि कल्लोलभिन्नकुलसेलो । नहु अन्नजम्मनिम्मिअ सुहासुहो कम्मपरिणामो ॥ ७९ ॥" किन्तु चैत्ये कुरुष्वात्र, ध्वजं चिह्नं यथा द्रुतम् । अब्धिद्वीपा-

तत्र च–ततं वीणादि तालादि, घनं च मुरजादिकम्। आनद्धं शुषिरं वंशाद्येवं वाद्यं चतुर्विधम् ॥५०॥ श्रीरा-
गमुख्या रागाः षड्, भाषास्त्रिंशत् षडन्विताः। षड्जादयः स्वराः सप्त, मयूरादिकशब्दगाः ॥ ५१ ॥ यदुक्तम्–
"षड्जं मयूरा ब्रुवते, गाव ऋषभभाषिणः। अजा वदन्ति गान्धारं, क्रौञ्चः क्वणति मध्यमम् ॥५२॥ पुष्पसाधारणे
काले, पिकाः कूजन्ति पञ्चमम्। धैवतं प्राहुरश्वाश्च, निषादं बृंहते गजः (ब्रुवते गजाः) ॥ ५३ ॥ स्वरानुगास्त्रयो
ग्रामा, मूर्च्छना एकविंशतिः। ताना एकोनपञ्चाशन्मात्रास्तिस्रस्त्रयो लयाः ॥५४॥ चतुर्द्धा रूपकं त्रेधाऽप्येकताली
द्विधा पुनः। रासाष्टतालकानीसारुचकप्रतिमाठकाः ॥५५॥ माठकः षड्विधो धूआभिधः षोडशभेदभृत्। त्रिधा
सुडं झुम्पडकः, करणी वर्त्तनी तथा ॥ ५६ ॥ रागोपरागा रागाङ्गभाषाङ्गानि क्रियाङ्गयुग्। उपाङ्गादीनि गीते
स्युर्भेदा नृत्ये तु ते यथा ॥ ५७ ॥ त्रयोदश भेदाः शीर्षे, सप्तत्रिंशच्च लोचने। कनीनिका नवविधाऽप्यष्टावा-
लोकने गुणाः ॥५८॥ पुटानि नव सप्त भ्रूभेदा नासा कपोलयुक्। षोढाऽधरश्च प्रत्येकं, मुखरागश्चतुर्विधः ॥५९॥
ग्रीवा नवविधा बाहुः, पञ्चभेदः करः पुनः। हस्तकानि चतुःषष्टिर्हृच्च पार्श्वं च पञ्चधा ॥ ६० ॥ कुक्षिकट्यूरुज-
ङ्घाश्च, प्रत्येकं त्रिविधा मताः। करणान्यष्टाग्रशतं, द्वात्रिंशदङ्गहारकाः ॥६१॥ चत्वारो रेचकाः सप्तदश बन्धाश्च
पैण्डिकाः। इत्युच्चैः स्फीतसङ्गीतरसे स विवशोऽभवत् ॥ ६२ ॥ मानुष्यकेऽपि सङ्गीते, जन्तुर्जायेत तन्मयः।
किं पुनर्दैवते ह्यायुरपि पूर्येत यद्रसात्? ॥ ६३ ॥ एकाकिनी तदानीं च, कुसुमश्रीरपि क्षणात्। निद्राणा दैव-
वशातो, भावि स्यात्कथमन्यथा? ॥ ६४ ॥ तावत्तुरङ्गपल्यङ्कौ, चौरवत् कोऽप्यपाहरत्। छलच्छेकाश्छलं प्राप्य,

तस्थिवान् ॥ ३४ ॥ सुवर्णमणिवप्राट्टालकाट्टालयमण्डितम् । समस्तवस्तुविस्तारसारमेतत्पुरं महत् ॥ ३५ ॥ व्योमेव शून्यं तु कुतस्तेनेत्युक्तः शुकोऽब्रवीत् । देव ! संभावये देव्या, कुतोऽपि क्रुद्धयाऽनया ॥ ३६ ॥ उद्वासितं विषहते, ह्यन्यमुद्वासकं कथम् ? । सप्रत्ययेयं स्वस्थानरक्षिणः पक्षिणोऽपि हि ॥ ३७ ॥ त्रिभिर्विशेषकम् ॥ किञ्च किञ्चिन्निमित्तेन नैमित्तिक इव ब्रुवे । विभो ! भावी भवानेव, नगरेऽत्र नरेश्वरः ॥ ३८ ॥ मुदितात्मा तदुदितादुदितात्यन्तकौतुकः । शुकेन साकं सोऽकार्षीत्, काञ्चिद्गोष्ठ्या सुखासिकाम् ॥ ३९ ॥ अथास्तमीयुषि जगच्चक्षुषि ध्वान्तविद्विषि । परितः प्रसृतध्वान्तैः, खलैर्लब्धच्छलैरिव ॥ ४० ॥ ततश्चाकस्मिकं किञ्चित्स शुकः शकुनादिकम् । बुद्ध्याऽवधार्य निर्द्धार्य, कार्यवित् प्राह तं प्रति ॥ ४१ ॥ रात्रिर्घोरान्धकारेयं, स्थानं निर्मानुषं त्वदः । इयं रत्नत्रयी तावद्दुष्प्रापा द्युसदामपि ॥ ४२ ॥ पश्याम्यवश्यं कमपीहाद्य विघ्नं हि भाविनम् । जागर्मि यामयुग्मं तत्पूर्वं पश्चाद्भुवां पुनः ॥ ४३ ॥ यतः—"उद्यमे नास्ति दारिद्र्यं, जपतो नास्ति पातकम् । मौनेन कलहो नास्ति, नास्ति जागरतो भयम् ॥४४॥" जाग्रतां सुप्रतीकारः, स्यात्प्रत्यूहोऽप्युपस्थितः । भयस्थाने हि यः सुप्तः, स विगुप्त इति स्थितिः ॥ ४५ ॥ सुषुप्तेऽथ सदारेऽपि, कुमारे यामिकस्थितिः । वीरवत् कीरराट् तस्थावार्यः कार्ये हि कोऽलसः ? ॥ ४६ ॥ निशीथेऽथ तयोः शय्याप्रभावाद्गीतनिद्रयोः । सुष्वाप प्राप निद्रां द्राक्, शुकः श्रान्त इवाध्वगः ॥ ४७ ॥ पद्मदेव्या गृहे दिव्यं, स्फीतसङ्गीतकध्वनिम् । कुमारः सोऽथ सुश्राव, श्रवःसारङ्गवागुराम् ॥ ४८ ॥ तेनाकृष्ट इवाकृष्टिमन्त्रेण नृपनन्दनः । देहचिन्तामिषं कृत्वा, गत्वा गुप्तं व्यलोकयत् ॥ ४९ ॥

पितृभ्यां पालिताऽप्युच्चैः, परकीयैव पुत्रिका। यान्ती परगृहं पित्रोः, सर्वस्वं या जिघृक्षति ॥ १९ ॥ अदित्सु-
रपि भूकान्तस्त्रपातः स्नेहतश्च सः। तस्मै रत्नत्रयं प्रादाद्धव्यायेव गुरूत्तमः ॥ २० ॥ दिनानि कानिचित्तत्र,
साग्रहं सस्नेहं स्थितः। प्रस्थातुकामः स्वपुरं, श्वशुरं सोऽन्वसीमनत् ॥ २१ ॥ सहाऽद्यां स्वपुरोद्याने, विधाय प्रजि-
घाय सः। पूर्वं सर्वं निजं सैन्यं, द्रुतं प्रस्थितवच्च तत् ॥ २२ ॥ स्वयं त्वारुह्य तं दिव्यहयं नव्यवधूयुतः। पल्यङ्के
पृष्ठगे कीरं कृत्वाऽङ्के हुं चकार सः ॥ २३ ॥ त्रिरत्नीसत्कनीप्राप्तिप्रीत्युद्रेकवशंवदः। संभ्रान्त्या कुसुमपुरोद्यानं
याहीत्युवाच च ॥ २४ ॥ उत्पपात तुरङ्गोऽपि, गरुत्मानिव तत्क्षणात्। योजनानां सहस्राणि, ललङ्घे च लघु
व्रजन् ॥ २५ ॥ तेनाशु पत्रिनेत्रांशुजैत्रवाजेन वाजिना। स्थानं यथोक्तं निन्येऽसौ, रेवंतेन रविर्यथा ॥ २६ ॥
अरण्यानीमिवागण्यारण्यप्राणिगणारवैः। रौद्रैरमुद्रैर्भीष्मं तद्वीक्ष्योद्यानं जगाद सः ॥ २७ ॥ कीरात्र कुत्रायातः
स्म, कीरोऽप्याह प्रभो! त्वया। यन्नामाग्राहि कुसुमपुरोद्यानमिदं हि तत् ॥ २८ ॥ किन्त्विदं नगरं शून्यं, तेनो-
द्यानमपीदृशम्। तत उक्तिप्रमादं स्वं, निनिन्द नृपनन्दनः ॥ २९ ॥ निस्तुल्यं सोऽथ पल्यङ्कं, निःशङ्कं शुकवा-
क्यतः। चिन्तारत्नमिवार्चित्वा, यावद्भोज्यं बुभुक्षितः ॥ ३० ॥ ततस्तेन द्रुतं दत्तैश्चित्तैकप्रीतिकारिभिः। खाद्य-
स्वाद्यादिभिर्भुक्तस्तृप्तिं स प्राप सप्रियः ॥ ३१ ॥ तदर्पितैस्तदर्हैस्तैः, कीरोऽपि तुरगोऽपि च। सञ्जातौ सुहितौ
तल्पस्याहो! काभितदायिता ॥ ३२ ॥ कुमारः कौतुकात् पश्यंस्तत्पुरं स्वःपुरं श्रिया। मध्ये दुःश्वापदाकीर्णं,
दृष्ट्वा बहिरथाययौ ॥ ३३ ॥ पूजाव्यक्तप्रभावायाः, पद्मदेव्या निकेतने। एकतो जगतीमध्ये, वासकं सोऽथ

कुमारमिव भूमिगम् । सप्रश्रयं श्रयन्ति स्म, निस्तुलाः सकलाः कलाः ॥ ३ ॥ इतश्च–पुरे रत्नपुरे रत्नजैनप्रासा-
दसुन्दरे । आसीन्न्यायधुराधीरो, रणधीरो धराधिपः ॥ ४ ॥ पत्नी रत्नावली रत्नावलीवास्य सुनिर्मला । अपत्य-
चिन्तातुरयोस्तयोः कालः कियानगात् ॥ ५ ॥ अथोपयाचितशतैः, प्राक्तनैः सुकृतैस्तयोः । कुसुमश्रीरिति
ख्याता, जाता विश्वाद्भुता सुता ॥ ६ ॥ लावण्यकुल्या निस्तुल्या, सा बाल्यातिक्रमात् क्रमात् । रराज स्मररा-
जस्य, राजधानीव जङ्गमा ॥ ७ ॥ वरचिन्तातुरस्तस्याः, पिताऽज्ञासीच्चरैर्नरैः । साक्षान्मारं कुमारं तं, वीरसेनं
वरं वरम् ॥ ८ ॥ सुरसुन्दरनामानं, निपुणं तत्र मन्त्रिणम् । प्रैषीद्वरैषी राजाऽथ, सत्वरं सोऽपि जग्मिवान् ॥९॥
सर्वाङ्गीणगुणश्रीणां, तं सङ्केतनिकेतनम् । दृष्ट्वाऽतिहृष्टः सचिवस्तस्मै दत्ते स्म तां कनीम् ॥ १० ॥ पित्रादेशा-
न्महासेनो, वीरसेनोऽपि तत्पुरे । अगाद्भृङ्ग इवाकृष्टः, स्वीकर्त्तुं कुसुमश्रियम् ॥ ११ ॥ महीयसा महेनाथ, मही-
शस्तौ व्यवाहयत् । सा त्वाख्यदषडक्षीणं, करमोक्षक्षणे पतिम् ॥ १२ ॥ देव ! देवतया दत्तोऽश्वः पल्यङ्कः शुक-
स्तथा । याच्ञामर्हन्ति न त्वन्यद्धनसैन्यादि किञ्चन ॥१३॥ यथार्थनामा कमलामेलस्तत्र तुरङ्गमः । हुङ्कृतैः कामितं
गन्ता, दिवि दिव्यविमानवत् ॥१४॥ पल्यङ्कः सर्वदा स्वर्गिपल्यङ्क इव सज्जितः । स्वामीष्ट्या पृष्ठगामीष्टनिद्राकृत्
कामितप्रदः ॥१५॥ सुधीः सुधीप्रदस्तादृग्, विधुरासौ सुधीरहृत् । विदग्धचूडामण्याख्यः, शुकश्च शकुनादिवित्
॥ १६ ॥ त्रिरत्नीयं त्रिवेदीव, निजार्थाव्यभिचारिणी । विश्वातिशायिताहेतुः, सैव तन्मार्ग्यतां गुरोः ॥ १७ ॥
पञ्चभिः कुलकम् । तेनापि मुदितेनैवं, याचितेऽचिन्तयन्नृपः । अहो ! गूढरहस्यं मे, ध्रुवं पुत्र्या प्रकाशितम् ॥१८॥

ते, असञ्जीकृते तु स्वयमेव निवारितः स्यात्, एवमग्निरपि यदा गृहस्थैर्गृहे प्रज्वालितः स्यात्तदा प्रज्वालनीयः, चरणार्थं गवादिमोचनं हलशकटवाहनं गृहाट्टारम्भग्रामान्तरगमनाद्यपि प्रथमं न कुर्याद् अधिकरणप्रवर्त्तनादिदोषात्, उक्तं हि–"कार्ये शुभेऽशुभे वाऽपि, प्रवृत्तिर्यैः कृताऽऽदितः। ज्ञेयास्ते तस्य कर्त्तारः, पश्चादप्युपचारतः ॥१॥" अयं हिंस्रप्रदानपरिहारस्यातिचारः ४, 'भोगअइरित्त'त्ति उपभोगपरिभोगातिरिक्तता, उपभोग्यपरिभोग्यवस्तूनां स्नानभोजनभोगपरिधानाद्यर्हाणामाधिक्यमित्यर्थः, तडागादौ स्नानाद्यवसरे हि तैलामलकादीनामाधिक्येऽन्येऽपि तानि याचित्वा स्नानादौ प्रवर्त्तन्ते तथा चानर्थदण्डः, अत्रायमावश्यकचूर्ण्याद्युक्तो विधिः–पूर्वं तावद्गृहे एव स्नातव्यं, तदभावे तु तैलामलकैर्गृह एव शिरो घर्षयित्वा तानि सर्वाणि शाटयित्वा तडागादीनां तटे निविष्टो गालितजलेनाञ्जलिभिः स्नाति, गृहेऽपि स्नानभोजनताम्बूलपुष्पाद्युपस्करालपतैव गुणहेतुः, यदाहुः–"सकलमुपस्करमधिकं मतिमान् स्वगृहेऽपि कारयेन्नैव। मात्राधिकोपकरणैर्लोकः पापं समाचरति ॥ १ ॥" येषु च पुष्पफलादिषु कुन्थ्वादिविराधना तानि परिहरति, एष प्रमादाचरितविरतेरतिचारः ५, एतद्विषये यद्बद्धं तद् 'दंडंमि अणट्ठाए'त्ति अनर्थदण्डाख्ये तृतीये गुणव्रते निन्दामीति षड्विंशगाथार्थः ॥ २६ ॥ अत्र वीरसेनकुसुमश्रीकथा, तद्यथा—

पुरे कनकसालेऽभूद्विशाले सकलर्द्धिभिः। नाम्ना धाम्ना च विख्यातः, क्षितिमानरिकेशरी ॥ १ ॥ तस्य प्रिया प्रियालापा, नाम्ना प्रियमती सती। वीरसेनस्तयोः सूनुरनूनगुणगौरवः ॥ २ ॥ श्रियाः सारं कुमारं तं,

जातं तस्यैव कुटुम्बं भुक्तं मृतं, प्रातर्यावद्विलोकन्ते तावदन्नस्थाल्यां सर्पो दृष्टः, सर्वैरचिन्ति–रात्रौ पाके धूमाकुलः सर्पोऽन्नस्थाल्यां पपातेति, पश्चाद्वधूः क्षमिता, तयोक्तम्–अत एव चुल्हकोपरि चन्द्रोदयं ददे रात्रौ च न भुञ्जेऽहं, ततस्तेषां प्रतिबोधः, सर्वेऽपि जीवितप्रदानात्साक्षात्कुलदेवीमिव तां मन्वानाः पश्चादागताः, तदुपदेशात्सुश्रावका जाताः, मृगसुन्दरीधनेश्वरौ सम्यग्धर्ममाराध्य स्वर्गं गतौ, च्युत्वा युवां जातौ, यत्त्वया प्राग्भवे सप्त चन्द्रोदया दग्धास्तद्दुष्कर्मनिन्दादिना बहु क्षपितं, अंशमात्रं तु स्थितं तेन सप्तवार्षिको व्याधिस्तवाभूत्, यतः–"नाभुक्तं क्षीयते कर्म, कल्पकोटिशतैरपि। अवश्यमेव भोक्तव्यं, कृतं कर्म शुभाशुभम् ॥ १ ॥" तत उभयोर्जातिस्मरणं पुत्रं राज्ये न्यस्य प्रव्रज्य स्वर्गं गतौ क्रमान्मोक्षं च तौ ॥

॥ इति चुल्हकोपरि चन्द्रोदयदाने मृगसुन्दरीकथा ॥

अशोधितेन्धनधान्यजलादिव्यापारणमपि प्रमादाचरितं तद्यतना प्रथमव्रते प्रागुक्ता, चतुर्विधोऽपि चानर्थदण्डोऽनर्थहेतुरेव निरर्थकश्च, नहि तेन विना कश्चिदनिर्वाहः, तथाहि–आर्त्तरौद्ररूपापध्याने न काचिदिष्टसिद्धिः प्रत्युत चित्तोद्वेगवपुःक्षीणताशून्यताघोरदुष्कर्मबन्धदुर्गत्याद्यनर्थ एव, उक्तञ्च–"अणवट्ठिअं मणो जस्स झायइ बहुआइं अट्टमट्टाइं। तं चिंतिअं च न लहइ संचीणइ पावकम्माइं ॥ १ ॥ वयकायविरहिआणवि कम्माणं चित्तमित्तविहिआणं। अइघोरं होइ फलं तंदुलमच्छुव्व जीवाणं ॥ २ ॥" अतोऽशक्यपरिहारं ज्ञात्वपध्यानं क्षणमात्रं स्यात्तदाऽपि राग एव परिहार्यं मनोनिग्रहयतनया, यदाह मनोनिग्रहभावनाकृत्–"साहूण साव-

यत्, तत्र च महेभ्ययशोदत्तपुत्री लक्ष्मीवती शीलादिसर्वगुणमयी तथा पटहं निवार्य हस्तस्पर्शेन कुष्ठः स्फेटितः, यतः-"यस्य स्मरणमात्रेण, सर्वाः संसारजा रुजः। शरीरिणो विशीर्यन्ते, सोऽयं शीलभिषङ् नवः ॥ १ ॥" ततस्तयोः पाणिग्रहमहः, पुत्रं राज्ये न्यस्य दीक्षाऽऽददे राज्ञा, तत्र चैकदा पाटलाचार्या ज्ञानिन ऐयुः, गुरुवन्दनार्थं नृपराज्ञ्योर्गमनं, देशनान्ते प्राग्भवपृच्छा, गुरुराह-वसन्तपुरे व्यवहारिदेवदत्तस्य चत्वारः पुत्राः-धनदत्तो १ धनदेवो २ धनमित्रो ३ धनेश्वर ४ श्च मिथ्यात्विनः, इतश्च मृगपुरे जिनदत्तः श्रेष्ठी जैनः, पुत्री मृगसुन्दरी तस्या अभिग्रहत्रयं-जिनं पूजयित्वा १ साधूनां दानं दत्त्वा भोक्ष्येऽहं २ रात्रौ च न भुञ्जे ३, अन्यदा व्यवसायार्थं धनेश्वरो मृगपुरे ययौ, दृष्टा रूपश्रीजितसुरसुन्दरीवृन्दा मृगसुन्दरी, दृढमनुरागो जज्ञे, मिथ्यात्विनो नैनां दत्ते पितेति ज्ञात्वा कपटश्रावकीभूय तां परिणिन्ये सः, स्वगृहे नीता, धर्मेर्ष्यया जिनपूजादि निषिद्धं, तस्याः क्षपणत्रयं जातं, तया गुरवः पृष्टाः, गुरुभिर्गुणागुणं विचार्योक्तं-चुल्हकोपरि चन्द्रोदयं बध्नीयास्तेन पञ्चसाधुदानेन पञ्चतीर्थ्याश्च नमस्क्रियया यादृशं पुण्यं जायते (तादृशं पुण्यमवाप्यते), ततस्तया तथा कृते श्वशुरादिभिः किमपि कार्मणमनया कृतमिति विचार्योक्तं धनेश्वरस्य, तेन स चन्द्रोदयो ज्वालितः तया द्वितीयो बद्धः सोऽपि ज्वालितः एवं सप्त दग्धाः, ततश्च श्वशुरेणोक्तं-भद्रे ! किमर्थोऽयं प्रयासः ?, तयोक्तं-जीवदयार्थं, पुनस्तेन सरोषमूचे-तर्हि पितृगृहे गच्छ, तयोक्तं-सकुटुम्बेन त्वयाऽहं पितृगृहे मोच्या, ततः सर्वेऽपि चलिताः, क्वापि मार्गग्रामे श्वशुरपक्षीयैः प्राघूर्णकार्थं रात्रौ पाकः कृतः, सा वधूः बहुकथनेऽपि न भुङ्क्तेऽतः कोऽपि न भुक्तः, ततो यस्य गृहेऽन्नं

तदीयस्य तदानीमचेतनत्वात्, अचेतनकायमात्रादपि बन्धोपगमे सिद्धानामपि तत्प्रसङ्गः, तत्कायानामपि प्राणातिपातादिहेतुत्वेन लोके विपरिवर्त्तनात्, किञ्च—यथा धनुरादीनि कायिक्यादिक्रियाहेतुत्वेन पापकारणानि स्युस्तज्जीवानां तथा पात्रदण्डादीनि जीवरक्षाहेतुत्वेन पुण्यकारणानि स्युर्न्यायस्य समत्वात्, अत्रोच्यते, अविरतिपरिणामाद्बन्धः, स च यथा पुरुषस्यास्ति तथा धनुरादिजीवानामपि, सिद्धानां तु नास्तीति न बन्धः, पात्रादिजीवानां च न पुण्यबन्धहेतुत्वं, तद्धेतोर्विवेकादेस्तेष्वभावात्, किञ्च—सर्वज्ञवचनप्रामाण्याद्यथोक्तं तत्तथा श्रद्धेयमेवेति तद्वृत्तौ, एवं संसारान्तर्भ्रमद्भिर्जीवैर्यानि २ शरीरायुधादीनि मुक्तानि तैस्तैर्यदा जीववधाद्यनर्थः स्यात्तदा तत्स्वामी भवान्तरगतोऽपि तत्सत्ताऽपरित्यागात्तत्पापेन लिप्यते, तस्मादनन्तभवान्तर (मुक्त) देहशस्त्रादीन्यप्यधिकरणत्वाद्व्युत्सर्जनीयानि विवेकिना, स्वकार्ये कृतेऽपि ज्वलदिन्धनप्रदीपादेरविध्यापनमपि प्रमादाचरणं, नन्वग्नेर्विध्यापनेऽपि दोष एव?, सत्यं, परं विध्यापनेऽग्निजीवानामेव विनाशो ज्वलति तु कियतां तेषां पृथ्व्यादीनां त्रसाणां च बहूनामपि विराधनेत्यधिकदोषः, तदुक्तं भगवत्याम्—"जे से पुरिसे अगणिकायं निव्वावेइ से णं पुरिसे अप्पकम्मतराए चेव"त्ति, अपिहितस्य प्रदीपचुल्हकादेर्धारणं चुल्हकोपरिचन्द्रोदयाप्रदानाद्यपि प्रमादाचरणं, सद्यो जीववधादिबहुदोषहेतुत्वात्, अत्र निदर्शनं यथा—

श्रीपुरे श्रीषेणो राजा तस्य पुत्रो देवराजो देवराज इवापरः, स यौवने दैववशात्कुष्ठी जातः, सप्तवर्षावधि विविधप्रतीकारैरप्यपटुवैद्यैस्त्यक्तः, ततो यो मत्पुत्रं नीरोगं करोति तस्यार्द्धराज्यं ददामीति नृपः पटहमवाद-

ण्डनदलनभूखननमृदादिमर्दनलेपनवस्त्रधावनजलगालनादि च प्रमादाचरितं श्लेष्मादीनां व्युत्सर्गेऽस्थगनाचयतनाऽपि प्रमादाचरितं मुहूर्त्तानन्तरं तत्र संमूर्च्छिममनुष्यसंमूर्च्छनतद्विराधनादिमहादोषसम्भवात्, आह च श्रीप्रज्ञापनोपाङ्गे भगवानार्यश्यामः-"कहिण्णं भंते ! संमुच्छिममनुस्सा संमुच्छंति ?, गोयमा ! अंतो मणुस्सखित्ते पणयालीसाइ जोयणसयसहस्सेसु अड्ढाइज्जेसु दीवसमुद्देसु पन्नरसु कम्मभूमीसु तीसाए अकम्मभूमीसु छप्पन्नाए अंतरदीवेसु गब्भवुक्कंतिअमणुस्साणं चेव उच्चारेसु वा पासवणेसु वा खेलेसु वा सिंघाणेसु वा वंतेसु वा पित्तेसु वा सुक्केसु वा सोणिएसु वा सुक्कपुग्गलपरिसाडेसु वा विगयजीवकलेवरेसु वा थीपुरिससंजोगेसु वा नगरनिद्धमणेसु वा गामनिद्धमणेसु वा सव्वेसु चेव असुइठाणेसु संमुच्छिममणुस्सा संमुच्छंति अंगुलअसंखिज्जभागमित्ताए ओगाहणाए असन्नी मिच्छद्दिट्ठी अन्नाणी सव्वाहिं पज्जत्तीहिं अपज्जत्तगा अंतमुहुत्ताउआ चेव कालं पकरंति" 'सव्वेसु चेव"त्ति अन्यान्यपि यानि कानिचिन्मनुष्यसंसर्गादशुचीनि तेषु सर्वेष्विति तद्वृत्तौ, अधिकरणभूतस्यागतस्य शस्त्रादेर्मलमूत्रादेश्चाव्युत्सर्जनमपि प्रमादाचरितं, यदुक्तं पञ्चमाङ्गे-"पुरिसे णं धणुं परामुसति उसुं परामुसति उड्ढं उव्वहिते समाणे जाइं तत्थ पाणाइं अभिहणाति तते णं भंते ! से पुरिसे कतिकिरिए ?, गोअमा ! से पुरिसे पंचकिरिआहिं पुट्ठे, जेसिंपि अ जीवाणं सरीरेहिंतो धणू निव्वत्तिए तेवि अ जीवा पंचहिं किरिआहिं पुट्ठा, एवं धणुपट्ठे ण्हारू उसू सरे पत्ते फलेवि पंचहिं पुट्ठे"त्ति, ननु पुरुषस्य पञ्च क्रिया भवन्तु कायादिव्यापाराणां तस्य दृश्यमानत्वात्, धनुरादिनिर्वर्त्तकशरीराणां तु जीवानां कथं ताः ?, कायमात्रस्यापि

क्खणाए जाव अपरिआवणाए वट्टंति, एए णं जीवा जागरा समाणा जाव धम्मिआहिं संजोअंति, एए णं जीवा जागरा समाणा पुव्वरत्तावरत्तकालसमयंसि धम्मजागरिअं जागरइत्तारो भवंति एएसिं जागरिअत्तं साहू, एवं बलिअत्तं दुब्बलिअत्तं, दक्खत्तं आलसत्तं, इच्चाइ, 'जागरिआ धम्मीणं, अहम्मीणं तु सुत्तया सेआ। वच्छाहिवभइणीए अकहिंसु जिणो जयंतीए ॥१॥" इति, रूपाणि–रूपादीनां नाटकादौ विलोकितानि परेषां पुरो वर्णितानि वा, रसा–मिष्टान्नशाकादिसम्बन्धिनः परेषामपि गृद्धिवृद्धिहेतवो वर्णिताः, एवं गंधवस्त्रासनाभरणान्यपि परगृद्धिहेतुवृद्धितया व्यावर्णितानि, एतैश्च पञ्चविधविषयलक्षणः प्रमादो दर्शितः, तद्दर्शनाच्च तज्जातीयमद्यादिप्रमादः पञ्चप्रकारोऽपि परिहार्यतया द्रष्टव्यः, यदाहुः–"कुतूहलाद्गीतनृत्यनाटकादिनिरीक्षणम्। कामशास्त्रप्रसक्तिश्च, द्यूतमद्यादिसेवनम् ॥ १ ॥ जलक्रीडान्दोलनादिविनोदो जन्तुयोधनम्। रिपोः सुतादिना वैरं, भक्तस्त्रीदेशराट्कथाः ॥ २ ॥ रोगमार्गश्रमौ मुक्त्वा, स्वापश्च सकलां निशाम्। एवमादि परिहरेत्, प्रमादाचरणं सुधीः ॥ ३ ॥ विलासहासनिष्ठ्यूतनिद्राकलहदुष्कथाः। जिनेन्द्रभवनस्यान्तराहारं च चतुर्विधम् ॥ ४ ॥" तथा आलस्यादिना घृततैलजलादिभाजनानामस्थगनं, मार्गे सति हरितकायाद्युपर्यशोधिताध्वनि वा गमनमनालोकितस्थाने हस्तक्षेपादि सत्यपि स्थाने सचित्तोपरि स्थित्यादि वस्त्रादेर्वा मोचनं पनककुन्थ्वाद्याक्रान्तभुव्यवश्रावणादेस्त्यजनमयतनया कपाटार्गलादानादि वृथा पत्रपुष्पादित्रोटनं मृत्खटीवर्णिकादिमर्दनं वह्न्युद्दीपनगवादिघातदानशस्त्रव्यापारणनिष्ठुरमर्मभाषणहास्यनिन्दाकरणादि रात्रौ दिवाऽप्ययतनया वा स्नानकेशग्रन्थनरन्धनख-

यत्कृतं तथोद्वर्त्तनं त्रससंसक्तचूर्णादिभिर्यत्कृतमुद्वर्त्तिका वा भस्मनि न क्षिप्तास्ततस्ताः कीटिकाकुलाः श्वादिभिर्भक्षिताः पादैर्मर्दिता वा, तथा वर्णकः-कस्तूरिकादिभिः कपोलादिमण्डनं, विलेपनं-चन्दनकुङ्कुमादिभिर्ग्रीष्महैमन्तादौ, एतद्द्वयं सम्पातिमसत्त्वाद्ययतनया यत्कृतं, शब्दो-वेणुवीणादीनां कुतूहलेन श्रुतः निशि चोच्चैःस्वरेण शब्दः कृतस्तस्मिंश्च कृते गृहगोधादिदुष्टजीवा जागरिताः तैश्च मक्षिकादिजीवा हिंसिता जलाद्याद्यारम्भकैर्वोच्चैःशब्देन जागरितैः स्वस्वारम्भः प्रारम्भि, तथा च सति पानीयाहारिकावाणिज्याकारककर्षुकारघट्टिकचाक्रिकरजकलोहकारमात्स्यिकसौनिकवागुरिकघातकचौरपारदारिकावस्कन्ददायकादीनामपि परस्परया कुव्यापारप्रवृत्तिरिति महाननर्थदण्डः, अत एवोक्तं श्रीभगवत्यङ्गे कौशाम्ब्यां शतानीकभगिन्या मृगावतीननन्दुर्जयन्त्याः श्रीवीरपार्श्वे प्रश्नसम्बन्धे-"सुत्तत्तं भंते! साहू जागरिअत्तं साहू?, जयन्ती! अत्थेगइआणं सुत्तत्तं साहू अत्थेगइआणं जागरिअत्तं साहू, जे इमे जीवा अहम्मिआ अहम्माणुआ अहम्मिट्ठा अहम्मक्खाई अहम्मपलोई अहम्मपलज्जणा अहम्मसीलसमुदायारा अहम्मेणं चेव वित्तिं कप्पेमाणा विहरंति एएसि णं जीवाणं सुत्तत्तं साहू, एए णं जीवा सुत्ता समाणा नो बहूणं जीवाणं पाणाणं भूआणं सत्ताणं दुक्खणाए जाव परिआवणाए वट्टंति, एए णं जीवा सुत्ता समाणा अप्पाणं परं वा तदुभयं वा नो बहूहिं अहम्मिआहिं संजोअंति, एएसिं सुत्तत्तं साहू जयन्ती!, जे इमे जीवा धम्मिआ जाव धम्मेणं चेव वित्तिं कप्पेमाणा विहरन्ति एएसि णं जीवाणं जागरिअत्तं साहू, एए णं जीवा जागरा समाणा बहूणं जीवाणं ४ अदु-

तस्याः प्रभावात् प्रभुरेष पृथ्व्याः, पृथ्वीभुजोऽन्यान्निखिलानपि द्राक् । वशीकरोति स्म वशी सुखेन, दुष्टेन्द्रिया-
णीव भवी विरत्याः ॥ ६ ॥ तदा समग्राङ्गसमृद्धिसौख्यैः, खपुष्पवद्ध्यभिधेयशून्याः । दुर्भिक्षदारिद्र्यदुरीति-
नीतिदुर्व्याधिबाधाद्यभिधा बभूवुः ॥ ७ ॥ नृचक्रिणश्चक्रिवदस्य चैव, साम्राज्यलक्ष्मीः सकलेऽपि विश्वे । एका-
तपत्राऽभवदुत्तमस्त्रीयोगस्य माहात्म्यमहो ! महीयः ॥ ८ ॥ यद्वा कपालीह महेश्वरत्वं, जनार्दनो वा पुरुषोत्त-
मत्वम् । सुरालयेशस्त्रिदशेन्द्रतां च, लेभे पुराऽप्युत्तमदारलाभात् ॥ ९ ॥ ईदृग्विधप्रौढिमसङ्गमेऽपि सा, स्त्रीजा-
तिसुप्रापमपीषदप्यहो ! । नैवाभिमानं भजति स्म जातुचिन्नाकण्ठपूर्णं हि झलज्झलायते ॥ १० ॥ सा प्रत्युत
ध्यातवती प्रभावो, ममात्र कः ? प्राक् सुकृतस्य किन्तु । तदेव कुर्वे तदिहापि येनोत्तरोत्तराः स्युर्मम सम्पदो-
ऽपि ॥ ११ ॥ आर्यासु वर्येति विचार्य पूर्वमभ्यस्तमाराधयति स्म सम्यक् । भोगोपभोगव्रतमेव पूर्वां, दृढेव
निर्वाहयितुं प्रतिज्ञाम् ॥ १२ ॥ जिह्वेन्द्रियं यद्यपि दुर्जयं नृणां, विशिष्य च प्रौढिविशेषशालिनाम् । सैकाग्रचि-
त्तैव तथाऽपि तद्व्रते, फलेऽनुभूतेऽद्भुतमत्र वा किमु ? ॥ १३ ॥ तद्वाक्यतः क्ष्मापतिरन्यलोकोऽप्येतद्व्रतं स्वीकृत-
वान् यथेष्टम् । पुमांश्च धर्मश्च महद्भिरेवादृतौ हि साम्राज्यपदं प्रयातः ॥१४॥ यो येन नीतः परमां समृद्धिमारा-
धनीयो ह्यमुना स एव । तत्किं व्रतं ससममेव सोच्चैः, प्रावीवृतत् काऽपि कृतज्ञताऽहो ! ॥ १५ ॥ चिरं चरित्वेति
गृहस्थधर्मं, सा प्राज्यसाम्राज्यसुखाढ्ययेऽपि । निष्क्रमस्य जिह्वाविजयेन सारैः, सिद्धा तपोभिः क्षितिपेन सार्द्धम्

॥ १६ ॥ प्राग्भवानुगतमन्त्रिपुत्रिकाचित्रकारिचरितादितीरितात्। भो! विभाव्य विपुलं द्विधाफलं, ससमव्रत-विधौ प्रयत्यताम् ॥ १७ ॥

॥ इति भोगोपभोगव्रते मन्त्रिपुत्रिकासम्बन्धः ॥

उक्तं सप्तमं व्रतमथानर्थदण्डपरिहाराख्यमष्टमं, गुणव्रतं तु तृतीयं, तत्रार्थः–प्रयोजनं क्षेत्रवास्तुधनधान्यशरीरस्वजनपरिजनादिविषयं तस्याभावोऽनर्थस्ततोऽनर्थ–निष्प्रयोजनं प्राणी पुण्यधनापहारेण दण्ड्यते–पापकर्मणा विलुप्यते येन सोऽनर्थदण्डः, यदाह–"जं इंदिअसयणाई पडुच्च पावं करेज्ज सो होइ। अत्थे दंडो इत्तो अन्नो उ अणत्थदंडो अ ॥ १ ॥" स चापध्यान १ पापोपदेश २ हिंस्रप्रदान ३ प्रमादाचरित ४ भेदाच्चतुर्द्धा, तत्रापध्यानं–आर्त्तरौद्रभेदाद्द्विधा, तत्राप्यार्त्तं चतुर्द्धा–अनिष्टशब्दादीनां कालत्रयेऽप्यत्यन्तविप्रयोगचिन्ता १ एवं रोगादिवेदनाया विप्रयोगचिन्ता २, इष्टशब्दादीनां कालत्रयेऽप्यत्यर्थं संयोगाध्यवसायः ३, दिव्यभोगर्द्धिराज्यादिनिदानाध्यवसाय ४ श्चेति, रौद्रमपि चतुर्द्धा–हिंसानुबन्धि १ मृषानुबन्धि २ स्तेयानुबन्धि ३ विषयसंरक्षणानुबन्धि च ४, तत्राद्यमतिक्रोधादिना द्वेष्यं प्रति वधबन्धनाङ्कनहिंसनपुरदेशभङ्गादिचिन्ता १, द्वितीयं पिशुनासभ्यासद्भूतघातकादिवाक्प्रणिधानं २, तृतीयं परस्वहरणचिन्ता ३, तुर्यं शब्दादिविषयसाधनधनरक्षार्थं सर्वेषामविश्वसनेनोपघात एव श्रेयानिति दुर्ध्यानं ४–१ क्षेत्रं कृष वृषवृन्दं दमय हयान् षण्डय क्वथय शत्रून् यन्त्रं वाहय शस्त्रं सज्जय पापोपदेशोऽयम्, एवं प्रत्यासीदति वर्षाकालो दीयतां वल्लरेष्वग्निः सज्जीक्रियतां हलफा-

तस्याः प्रभावात्प्रभुरेष पृथ्व्याः, पृथ्वीभुजोऽन्यान्निखिलानपि द्राक् । वशीकरोति स्म वशी सुखेन, दुष्टेन्द्रियाणीव भवी विरत्याः ॥ ६ ॥ तदा समग्राङ्गसमृद्धिसौख्यैः, खपुष्पवद्धुव्यभिधेयशून्याः । दुर्भिक्षदारिद्र्यदुरीतिनीतिदुर्व्याधिबाधाद्यभिधा बभूवुः ॥ ७ ॥ नृचक्रिणश्चक्रिवदस्य चैव, साम्राज्यलक्ष्मीः सकलेऽपि विश्वे । एकातपत्राऽभवदुत्तमस्त्रीयोगस्य माहात्म्यमहो ! महीयः ॥ ८ ॥ यद्वा कपालीह महेश्वरत्वं, जनार्दनो वा पुरुषोत्तमत्वम् । सुरालयेशस्त्रिदशेन्द्रतां च, लेभे पुराऽप्युत्तमदारलाभात् ॥ ९ ॥ ईदृग्विधप्रौढिमसङ्गमेऽपि सा, स्त्रीजातिसुप्रापमपीषदप्यहो ! । नैवाभिमानं भजति स्म जातुचिन्नाकण्ठपूर्णं हि झलज्झलायते ॥ १० ॥ सा प्रत्युतध्यातवती प्रभावो, ममात्र कः ? प्राक् सुकृतस्य किन्तु । तदेव कुर्वे तदिहापि येनोत्तरोत्तराः स्युर्मम सम्पदोऽपि ॥ ११ ॥ आर्यासु वर्येति विचार्य पूर्वमभ्यस्तमाराधयति स्म सम्यक् । भोगोपभोगव्रतमेव पूर्वां, दृढेव निर्वाहयितुं प्रतिज्ञाम् ॥ १२ ॥ जिह्वेन्द्रियं यद्यपि दुर्जयं नृणां, विशिष्य च प्रौढिविशेषशालिनाम् । सैकाग्रचित्तैव तथाऽपि तद्व्रते, फलेऽनुभूतेऽद्भुतमत्र वा किमु ? ॥ १३ ॥ तद्वाक्यतः क्ष्मापतिरन्यलोकोऽप्येतद्व्रतं स्वीकृतवान् यथेष्टम् । पुमांश्च धर्मश्च महद्भिरेवादृतौ हि साम्राज्यपदं प्रयातः ॥१४॥ यो येन नीतः परमां समृद्धिमाराधनीयो ह्यमुना स एव । तत्किं व्रतं सप्तममेव सोच्चैः, प्रावीवृतत् काऽपि कृतज्ञताऽहो ! ॥ १५ ॥ चिरं चरित्वेति गृहस्थधर्मं, सा प्राज्यसाम्राज्यसुखाढ्ययेऽपि । निष्क्रम्य जिह्वाविजयेन सारैः, सिद्धा तपोभिः क्षितिपेन सार्द्धम्

णिन्ये ?, वादिन् ! वद यदि विदग्धंमन्योऽसि बहुतरविचारेणापि, तदवेदिनि वादिनि नरेशादेशान्मन्त्रिपुत्र्येव प्राह–राजन् ! तया राजपुत्र्या गूढाभिप्रायया चतुर्णां विवादापहत्यै स्वयमित्युक्तं–यो मया सहाग्नौ प्रवेक्ष्यति स एव मे वरः, ततस्त्रयो भीताः स्थिताः, नैमित्तिकस्तु निमित्तबलाद्गूढप्रपञ्चं जानन् कन्यया सह चितायां प्रविष्टः परैर्वार्यमाणोऽपि, यावच्च चितायामग्निरुद्दीपितस्तावत्तौ प्राक्कृतसुरङ्गया निर्गतौ सोत्सवं परिणीतौ च, एवं दुर्वादिनं तिरस्कृत्याऽतुच्छोत्सवैः सा सर्वैः श्लाघ्यमाना स्वगृहं प्राप्ता, अन्येद्युरन्यः कश्चिद्धूर्त्तः सकृत्श्रुतधरः समणिस्वर्णकन्दुककरः पुरान्तः प्राप्तः, स प्रोचे—यो ममापूर्वं श्रावयति तस्यैनं कन्दुकं ददामीति, निपुणयोक्तं–मत्पित्रा त्वत्पार्श्वे धनकोटी न्यासीकृतेति यदि प्राक् श्रुतं तदा ददतां नो चेदेनं कन्दुकं देहीतिबुद्ध्या स जिग्ये तादृक् कन्दुकश्चोपार्जितः, एवमनेकशः स्वबुद्धिकौशलं दर्शयन्ती सरस्वती सा कन्या कस्य न विस्मयरसाद्वैतमतानिष्ट ?, क्रमाच्च तारुण्यरसोद्गमेन, वल्लीव दिव्या कुसुमोद्गमेन । विभूषिता सा शुशुभे त्रिलोकीजैत्रं सुमन्त्रास्त्रमिव स्मरस्य ॥ १ ॥ विश्वत्रयेऽप्यद्भुतभाग्यलक्ष्मीं, लक्ष्मीमिवोद्वक्ष्यति यः किलैताम् । भाव्येव विश्वम्भरिवत् स विश्वविश्वेश्वरः आगिति चिन्तनोत्कः ॥ २ ॥ धात्रीश्वरस्तां स्वयमेव मन्त्रीश्वरं ययाचे वरचिन्तयाऽऽर्त्तम् । बहूपरोधेन विशिष्टवस्तुग्रहे महान्तोऽपि हि सानुबन्धाः ॥ ३ ॥ युग्मम् ॥ राजा स्वयं याचत इत्यमन्दानन्दाद्ददाति स ततः सुतां ताम् । तस्मै द्रुतं मन्त्रिपतिः सुपात्रे, प्राप्ते विलम्बोऽर्हति नैव दातुः ॥ ४ ॥ नाथः पृथिव्याः पृथुपर्वपूर्वमपूर्वमोदादुदुवाह चैताम् । शचीं शचीवल्लभवत्ततोऽस्याः, पट्टाभिषेकं निरसीमपच्च ॥ ५ ॥

परावर्त्ते विशेषखण्डने च न सङ्ख्या, एवं नवनवप्रकारप्रश्नोत्तरैः सर्वेषामपारं चमत्कारं कृत्वा वादिनस्तिरस्कारं कर्तुमना मनाग् विहस्य सा तं प्रत्याह–भो वादीन्द्र! यदि मदुक्तप्रश्नस्यैकस्याप्युत्तरं चिरेणापि दास्यसि तदाऽद्यापि त्वयैव जितमित्युक्तिपूर्वं सा लीलावती जातिसुलभलीलयाऽनतिविषममेव प्रश्नयामास–"चित्रमत्र पयः पेया, एव व्यञ्जनवर्जिताः। समीह्यन्ते जनैर्नित्यमपि वर्गत्रयार्थिभिः ॥ १ ॥" भो वादिन्! कथयास्य श्लोकस्य को भावार्थः?, अत्र षण्मास्यवधिः, सोऽपि पराजितमानी तदानीमतिमतिमौढ्याद्भृशं विमृशन्नप्यभव्य इव सम्यग्भावं यावन्न लभते तावत् परिज्ञानायात्युत्सुकैर्नृपादिकैरुक्तं–कन्ये! व्यक्तं त्वमेव कथयेति, ततस्तया प्रोक्तं—पयःपेयाशब्दस्य व्यञ्जनवर्जित्वे आया इति स्यात्, अत्र विसर्गाणामपि व्यञ्जनत्वं ज्ञेयं, 'कादिर्व्यञ्जन' (श्रीसिद्ध० १–१–१०)मित्यत्र कस्यादिः कादिरित्यपि व्याख्यानात्, ततोऽतिविषादिनं तं वादिनं सा पुनः प्रत्यवादीत्–वादिन्! अद्यापि यद्येकं बुद्धिविषयमपि प्रश्नं प्रत्युत्तरयसि तदाऽपि त्वया न पराजितं, प्रश्नश्चायम्–एकत्र पुरे राज्ञः पुत्री सर्वाङ्गीणाद्भुतगुणा केनापि विद्याभृताऽपहृता, यः कन्यामानयति तस्यैव सा मया दत्तेति राज्ञा पटहवादने नैमित्तिकेनोक्तम्–अहं तयोः स्थानं जाने परं खे गन्तुं न शक्नोमि, रथकारेण नभोगामी रथः कृतः, सहस्रयोधी युद्धाय शस्त्रघाते सद्यःसंरोहणाय वैद्यश्च सज्जीभूतौ, चतुर्भिः संभूय गत्वा कन्या प्रत्यानिन्ये, ततस्तामुद्वोढुं चत्वारो विवदन्ते, परिणीता त्वेकेनैव सा, उक्तश्च–"नेमित्ती १ रहगारो २ सहस्सजोही ३ तहेव विज्जो अ ४। दिन्ना चउण्ह कण्णा परिणीआ नवरमिक्केणं ॥ १ ॥" सा केन कथं वा परि-

वकादीनां व्रता(पदा)दीनां च यथायोगं समूहाद्यणि वाकं पादमित्यादि, एवं १४९, तथा 'पां पैं उवेंग् व्येंग् वेंग् वद् व्यक्तायां वाचि' कण्ठमते पद स्थैर्ये अव रक्षणादि १९ अर्थेषु, 'अक अग कुटिलगतौ' 'वज व्रज अयि वयि पयि पदिचु् गतौ' 'वांकृ गतिगन्धनयोः' 'वींक् प्रजनकान्त्यसनखादनेषु' अन्ये असनस्थानेऽशनमाहुः, 'पीङ् पाने व्रीङ् वरणे पतण् गतौ वा' एषां घञि पायः वाय इत्यादि ४४, 'ई इङ् गतौ वातण् गतिसुखासेवनयोः सुखासेवनयोरित्येके' एषां 'युवर्णे'त्यलि अयः वातः 'वचण् वदिण् भाषणे' संदेशने इत्येके 'आपॄण् लम्भने' एषां युजादित्वाण्णिजभावपक्षे घञि वाकादि 'व्ययण् वित्तसमुत्सर्गे' गतावित्येके, पदिण् गतौ, अनयोर्णिजनित्यत्वेऽनदन्तत्वेन घञि व्यायादि १४, 'ब्रूंगक् वचंक् (भाषणे)' वक्तीतिशीलः क्विपि वाक् २ 'ओवे वांकृ गतिगन्धने' तृनि वाता २ पात्याद्यादन्तससकात्तन्व्यधीति णे पायादि ७ 'अज गतौ' अद् अत् आप् अक् अग् णिचोऽनित्यत्वे वा णः, एषां क्विपि अवाज इत्यादि १०, वैंग् डे परवः १९ अर्थेष्ववधातोरचि अवः परश्चासाववश्च परावः, परं पिबतीति क्विपि परपाः, एवं पात्याद्यादन्तैरपि अग्रे आयादि योज्यम् २८, अद्वर्जाजादिभ्योऽयाऽवोऽश्वाऽविअजातादि (?)२९, आङ्पूर्वपात्यादिवदपचादिसकर्मधातुभ्यः कर्मणोऽणि(श्रीसिद्ध० ५-१-७२)त्यणि परवायाः परवादाः प्रपाचा इत्यादि ५६, पूर्वोक्तधातूनां यथाप्रासं णिचि शेषाणां तु सर्वेषां णिगि क्विपि पात् व्रात् इत्यादि, पायः वाय इत्यादि ७८ एवं ३६१, एषामाचष्टे इत्याद्यर्थे णिजि क्विपि पुनः ३६१ एवं ७२२ प्रश्नोत्तराण्यत्र, प्रकर्षेण राजत इति क्विड्डि प्ररः, अनेनापि सर्वरूपाणि रूपाष्टकवर्जं स्युः, तथा च १४३६, पूर्वोत्तरपदयोर्मिथो यथाऽर्हं

मूढो वाचम् ४६, मन्त्रिवराः परावापाः, आवापोऽरिचिन्तनं ४७, धूर्त्तमैत्री परापाता, आपातस्तत्कालः ४८, त्रयः प्रथमनरकाः परापाकाः, परेभ्यः—परमाधार्मिकेभ्य आप्यत इति परापमकं—दुःखं येषु ४९, नृपकन्याः—परत्रायाः 'त्रीङ् वरणे' प्रकृष्टो त्रायो यासां ५०, राजानः—परपायाः, परः पायो—रक्षा येषाम् ५१, याचकाः परन्याताः 'अत सातत्यगमने' अतनम् आतः परेषु विशेषेणातो येषां ५२, सुगृहाः परन्यायाः, परेभ्यो विशिष्टा आया—ध्वजधूमादयो येषु ५३, कुपिताः सुभटाः परावापाः, परे—शत्रावावापः—प्रासिर्येषां ५४, तृषिताः परं केवलं पिबन्तीति परमते तन्व्यधीति णे परपायाः ५५, वनोद्देशाः परन्यायाः प्रकृष्टो वीनामायः—आगमनं येषु ५६, वाजः पक्षमुनिनिस्वनेष्वपि वाजं सर्पिर्वारियज्ञान्नेषु, पांकः शिशुदैत्ययोरपि पततीति वा ज्वलादीति (श्रीसिद्ध० ५–१–६२) णे पातः पततीत्यचि पतः—पक्षी तत्समूहः पातं व्याजोऽपदेशेऽपि आगोऽघेऽपि "अजश्छागे हरे विष्णौ, रघुजे वेधसि स्मरे" उप्यतेऽस्मिन्निति वापः क्षेत्रेऽपि, पापः—पापिष्ठेऽपि, अगः—शैलसरीसृपार्केष्वपि पादोंऽशुतुर्यांशांह्रिपर्यन्ताद्रिपूजास्वपि, आवापः—पातभेदालवालप्रक्षेपभाण्डपचनवलयेष्वपि, आपातः—पाते-ऽपि बको रक्षोभेदश्रीदशिवमल्लीष्वपि, 'पदं स्थाने विभक्त्यन्ते, शब्दे वाक्यैकवस्तुनोः। त्राणे पादे पादचिह्ने, व्यवसायप्रदेशयोः ॥ १ ॥" मङ्खमते पदं चरणन्यासाक्षचिह्नयोरपि, वचा औषधिशारकयोः, वपा विवरमेदसोः, व्रजोऽध्वगोष्ठसङ्घेषु, व्यजा ऊषाकर्षणाय रज्जुवद्धघट्यादिनिक्षेपमार्गे प्रेरणदण्डे च 'वज व्रजण् मार्गण् संस्कारगत्योः' मार्गण् संस्कारेऽपीत्यन्ये, एतयोरचि वजः व्रजः, वदपचादिभ्योऽचि वदः पच इत्यादि २७,

दयतीति तृन् २०, महासुभटः परपायाः, पररक्षकशस्त्रः २१, असती परव्यागाः, प्रकृष्टविरुद्धापराधाः २२, सुतन्तुवायः परवाता 'वेग् तन्तुसन्ताने' प्रकृष्टं वयतीति तृन् २३, महावाता 'वांकृ गतौ' तृन् २४, प्रावृषि यवासः परपाता 'पै शोषणे' तृन् २५, मद्यव्यसनी–परपाता, प्रकृष्टं पिबतीति तृन् २६, अन्त्याब्धिस्थितिः परव्यापा, प्रकृष्टविस्तारा २७, मत्स्यसङ्कुलतडागाः परवाकाः, बकसमूहो वाकम् २८, अनुकूलपवनाः पोताः परव्यायाः 'व्ययी गतौ' प्रकृष्टगमनाः २९, अजापालगृहाः–प्रपाजाः प्रपन्तीत्यचि प्रपा अजा यत्र ३०, अब्धिमुखाः परावाया प्रकृष्टः अपामायो–लाभो यत्र ३१, परप्रार्थनापरमनसः परव्यजाः, परेषु विशेषेणाजो–गतिर्येषां ३२, नित्यदरिद्राः परापायाः, परं–दूरमपगतमयो–भाग्यं येभ्यः ३३, महाब्धयः परापायाः–परा–भृशार्थे परापां–भृशापां आयो येषु ३४, हालिकाः परवापाः, प्रकृष्टोसयः ३५, वधकाः–परपापाः ३६, कुम्भकाराः परापाका, आपाको–मृद्भाण्डपाकस्थानं ३७, गिरिनदी–प्रवापू 'रुकृ शब्दे' अचि प्रवा आपो यत्र ३८, मरुभूः परापाऽगा दूरमपगतवृक्षा ३९, काश्मीरमही परवाक्, वाक्–सरस्वती ४०, सिद्धाः परापाकाः प्रकृष्टमपगतमर्क–अघं येभ्यः ४१, महाद्रुमाः–परपादाः, पादा–मूलानि ४२, नृपस्थितिः परवाक्–परान् शत्रून् वाजति–अवक्षिपतीति क्विप् ४३, शतपदी–परपाद् बहुत्वात्प्रकृष्टांह्रिः ४४, भेर्यः परव्यावाः 'उङ् शब्दे' युवर्णे (श्रीसिद्ध० अ० ५ पा० ३ सू. २८ )त्यलि अवः–शब्दः परान्–शब्दान् व्ययति–आच्छादयतीत्यातो ड ( श्रीसिद्ध० अ० ५ पा० १ सू. ७६ ) इति डे परव्योऽवो यासां ४५, फलितशालयः–परवाचाः वचाः–शुकास्तत्स-

आ ५५ वणउद्देसा य केरिसया ५६ ॥ ७ ॥ पागयभासाइ इहं वण्णचउक्केण च्चेय पइपसिणं । पच्चुत्तरं 'पय-च्छसु जइ अइछेयत्तणं वहसि ॥ ८ ॥" ईषद्विमृश्य तयोक्तं–'परवाया' इति, तत्र सुजनाः परवाचः प्राणान्तेऽप्यन्यथाऽकरणात् प्रकृष्टगिर इत्यर्थः १, प्रवराश्वाः–परवाजाः प्रकृष्टवेगाः 'कगचजतदपयवां प्रायो लुग्' इति (श्रीसिद्ध० अ० ८ पा० १ सू. १७७) जलुक्, 'अवर्णो यश्रुति' (श्रीसिद्ध० अ० ८ पा० १ सू. १८०) रित्यवर्णस्य यः २, सारथयः प्रवाजाः–प्रकृष्टरवेण आजः–क्षेपः प्रेरणमर्थाद् घृषयोर्येषां ३, ज्ञानिनः परावायाः–अवायो–निश्चयः, 'दीर्घह्रस्वौ मिथो वृत्ता' (श्रीसिद्ध० अ० ८ पा० १ सू. ४) विति ह्रस्वः ४, वादिवराः परवादाः ५, सूपकाराः परपाकाः 'पो व' (श्रीसिद्ध० अ०८ पा० १ सू. २३१) इति पस्य वः ६, द्यूतकाराः परपाताः; पाशकपातनादि ७ गणिकाः परव्याजा व्याजः–कपटं ८, वरगायनाः–प्रारवायाः प्रकृष्ट आरवस्यायो–विस्तारो येषां ९, विप्राः परव्यादाः परं–श्रेष्ठं विशेषेणादन्तीति 'कर्मणोऽण्' (श्रीसिद्ध० अ० ५ पा० १ सू.७२) १०, धनिवरकुविन्दावासाः–परावायाः, आवायः–कुविन्दशाला ११, सुभिक्षे कणाः परव्राताः–प्रकृष्टसमूहाः १२, ग्रीष्मजलधितटाः परवाताः, वातो–वायुः १३, धूर्त्ताः परव्याचाः 'व्यचन् व्याजीकरणे' व्यचनं व्याचो–वचनं १४, दुर्नयसत्त्वाः परापायाः, अपायोऽनर्थः १५, धार्मिकचित्ता धर्मे परवादाः 'वद स्थैर्ये' प्रकृष्टस्थैर्याः १६, वेदविदः परवाका वाक्–ऋग्यजुःसमूहात्मकं वाक्यं १७, दयालुः परपाता, परान् पातीति शीलार्थे तृन् १८, अशुभवेला परपाता, पातः क्रान्तिसाम्यादिः १९, पटः परव्याता 'व्येग् संवरणे' परं व्ययति–आच्छा-

धकः ॥ १ ॥ समुद्रोऽपि जलाढीभाग, अक्रमोऽपि बहुभ्रमी । सर्वभाष्यपि मौनी च, साक्षरोऽपि जडश्च कः ? ॥ २ ॥ युग्मम् ॥ कन्ययोक्तं लेखः । पुनः स एव पप्रच्छ—नरस्त्रीपञ्चकोत्पन्ना, प्रदत्ता गाढशब्दकृत् । देहे लग्नाऽपि दुःखाकृत्, का नु दृष्टाऽपि वैरकृत् ? ॥ १ ॥ तयोक्तमियं तवैवार्हति मिथ्याभिमानित्वात्, ततः का नामास्यार्हति ज्ञातुमुत्सुके सभालोके तयोक्तं चपेटेति, ततः सर्वेऽपि हास्यं नाटयन्ति, अथ समर्थवादीन्द्ररीत्या तं प्रत्याह सर्वाङ्गनिपुणा निपुणा—हंहो ! मया प्रश्ने कृते तन्मूढात्मतया क तव वाङ्मात्रावकाशोऽपीति पृच्छ मां पुनर्यथेच्छा, ततः सोऽप्युच्चैर्विचार्यातिविषममप्रश्नयत्—"सुअणा १ पवरतुरंगा २ सारहिणो ३ नाणिणो अ ४ वाइवरा ५ । सूआरा ६ जूआरा ७ गणिआ ८ वरगायणा ९ विप्पा १० ॥ १ ॥ धणिवरकुविंद भवणा ११ कणा सुभिक्खंमि १२ गिम्हि जलहितडा १३ । धुत्ता १४ दुन्नयसत्ता १५ धम्मिअचित्ता य धम्मंमि १६ ॥ २ ॥ वेअविऊ अ १७ दयालू १८ वेला असुहा १९ पडो २० महासुहडो २१ । असई २२ सुतन्तुवाओ २३ महवाओ २४ पाउसि जवासो ॥ २५ ॥ ३ ॥ मज्जवसणी अ २६ अंतिमजलहिठिई २७ मच्छसंकुलतडागा २८ । अणुकूलपवणपोआ २९ अयथालगिहा य ३० जलहिमुहा ३१ ॥ ४ ॥ परपत्थणापरमणा ३२ निच्चदरिद्दा ३३ महासमुद्दा य ३४ । हलवाहगा य ३५ वहगा ३६ कुंभारा ३७ गिरिणई ३८ मरुभू ३९ ॥ ५ ॥ कम्हारमही ४० सिद्धा ४१ महद्दुमा ४२ निवठिई ४३ सयपई अ ४४ । भेरीओ ४५ फलिअसाली ४६ मंतिवरा ४७ धुत्तमित्ती अ ४८ ॥ ६ ॥ तिपढमनरगा ४९ निवकन्नगा य ५० राया य ५१ जायगा ५२ सुगिहा ५३ । सुहडा कुविआ ५४ तिसि-

णत् ॥ १ ॥ तं तादृशं वीक्ष्य विलक्ष्यमाख्यद्दक्षाशया सा तनयाऽद्य तात ! । यथार्थनाम्नोऽपि कुतस्तवास्यं,
श्वासाहतादर्शनिदर्शनीयम् ? ॥ २ ॥ तेनापि तस्याः सकले स्वरूपे, प्ररूपिते सा मुखमोटनेन । प्रारूपयत्तस्य
नृकीटकस्य, पराजये काऽस्तु परास्तचिन्ता ? ॥३॥ मङ्क्ष्वाह सर्वत्र जयी स धूर्त्तो, वैदग्ध्यतस्तेन सचिन्तता मे ।
सितानना साह च साऽपि वप्तः !, पर्याप्तमेतत्परिचिन्तनेन ॥ ४ ॥ तज्जैत्रपत्रं हि मयाऽऽसमेवेत्यस्यां महीयोम-
हिमाद्भुतायाम् । सुसम्भवं सर्वमपीत्यमात्योऽनुचिन्त्य निश्चिन्ततया निदद्रौ ॥५॥ प्रातः पुरस्कृत्य सुतां सवित्रा,
प्रभामिवोर्वीशसभामभाजि । उक्तं सुतोक्तं च ततः क्षितीशाहूतः समेयाय स वादिधूर्त्तः ॥ ६ ॥ दृष्ट्वा पदे तां
प्रतिवादिनश्चावज्ञां सृजन् विस्मयवानुवाच । वचोऽपि किञ्चिन्नहि विक्रमेत, किं केशरी बालमृगीं जिगीषुः ? ॥७॥
सर्वेष्वथो कौतुकिपूत्सुकेषु सा, साक्षेपमाक्षेपमकृप्त तं प्रति । वादीन्द्ररीत्या वचनैः सुसंस्कृतैर्द्विधाऽप्यथो धूर्त्त-
तयाऽभ्यधत्त सः ॥ ८ ॥ अमात्रशास्त्रैस्त्वयि बालिकाया, न सङ्गरः सङ्गतिमङ्गतीह । किञ्चित्पुनः प्रश्नतदुत्तरा-
दिकेली विधेया सह बालयाऽपि ॥९॥ इत्युक्तिपूर्वं स सगर्वमाख्यद्दक्षे ! समाख्याहि समीक्ष्य मङ्क्षु । न्यक्षाऽ-
प्यकस्मान्ननु मक्षिकांह्रिघातात्त्रिलोकी कथमाप कंपम् ? ॥ १० ॥ विहस्य सा प्राह सुभित्तिचित्रन्यस्ता पयोऽन्तः
प्रतिबिम्बिता सा । त्वच्चित्तवत्सम्प्रति मत्प्रकॢप्ताक्षेपादकम्पिष्ट ततोऽपि युक्तम् ॥ ११ ॥ चमत्कृतोऽप्यन्तरतीव
दुर्घटामथो समस्यां पुनरेष पृष्टवान् । कोणे तिलस्योष्ट्रमसूत कीटिका, सा प्राह सत्यं यदि मां विजेष्यसे ॥ १२ ॥
पुनः स प्रश्नान्तरमकरोत्—स्त्रीयुग्मनरयुग्मोत्थः, कृष्णोऽन्तर्बहिरुज्ज्वलः । देवनामापि नो देवः, सर्वनिर्वाहसा-

एवं वचः केवलिनो निशम्य, धात्रीपतिर्मन्त्रमिव प्रजाश्च। संभावितं स्वश्वशुभादिगर्वं, सर्वं त्यजन्ति स्म फणीव दर्पम् ॥ ९० ॥ वहन्नमानं बहुमानमन्तस्ततः क्षितीशः स विवेश वेश्म। गत्वा च दृष्ट्वा जनतान्वितस्तां, स्वगोत्रदेवीमिव मन्यते स्म ॥ ९१ ॥ निशम्य माहात्म्यमिदं तदीयं, देशान्तरस्था अपि भूमिपालाः। मूर्तिर्हि तस्या इव पद्मदेव्याः, प्रपूज्य निन्युः स्वभुवं समृद्धिम् ॥ ९२ ॥ सैवं जगत्यामपि जागरूकसौभाग्यभाग्यादिगुणैर्गरिष्ठा। अमोघवागेव बभूव बाल्यादपि स्वजिह्वाविनियन्त्रणात्प्राक् ॥ ९३ ॥ जाते मृते ग्रामगते स्थिते सा, धृते वृते गुप्तकृते हृते वा। सर्वत्र मौग्ध्यादपि यद्यथाऽऽख्यात्तथैव तज्ज्ञानिवचोवदासीत् ॥९४॥ कलाश्चतुःषष्टिमथो चतुर्द्दा, बुद्धीस्तथाऽबुध्यत लीलयैव। सा साक्ष्यमात्रेण गुरोर्गरीयःप्राक्पुण्ययोगात्किमु दुर्लभं वा? ॥ ९५ ॥ तत्रान्यदाऽऽगात् किल वादिवृन्दवृन्दारकः कश्चन काकधूर्त्तः। धौर्त्त्येन सर्वत्र जयी प्रसर्प्पद्दर्पोत्कटः प्रौढपरिच्छदाढ्यः ॥९६॥ राज्ञः सभामेत्य स चेत्यवादीद्वादी शरद्वारिदवन्निनादी। राज्येऽस्ति राजंस्तव कोऽपि वादी, कुर्यान्मया यः सह वादकेलिम्? ॥ ९७ ॥ यद्वादिकेतौ मयि वादवृन्ददुर्भिक्षहेतौ भुवनेऽभ्युदीते। संभाव्यतेऽनुद्भव एव तेषां, तीक्ष्णत्विषीव ग्रहमण्डलानाम् ॥ ९८ ॥ प्रातस्त्वया भोः! प्रतिवादिवर्यमाकार्य वादं किल कारयिष्ये। प्राज्ञेन राज्ञेति विसृज्य वादिधुर्यं रहः प्रोच्यत मन्त्रिधुर्यः ॥ ९९ ॥ कोऽप्यद्य विद्याविदुरः प्रवादी, वादाय सज्जीकरणीय एव। नो चेज्जगत्यामपि नोऽपकीर्त्तेर्डुर्डिण्डिमाडम्बर एष जातः ॥ १०० ॥ ततोऽतिचिन्तातुरतानितान्ततान्तः समन्ताद् बहुबुद्ध्यमात्यः। अन्वेषणेऽपि प्रतिवाद्यनाप्तेः, किंकृत्यमूढो निशि हर्म्यमा-

॥ ७७ ॥ निरभ्रनिषङ्कशरन्मृगाङ्क, इवोच्चकैः सा शुशुभे ततश्च । धर्मस्य माहात्म्यमहो ! महीयस्तत्कालमेवानु-
भवप्रतीतम् ॥ ७८ ॥ तद्धर्ममाहात्म्यमवेक्ष्य साक्षाद्दक्षा अदक्षा अपि पौरलोकाः । आराधयन्ति स्म जिनेन्द्र-
धर्ममुच्चैर्यतो दृष्टफलेऽलसः कः ? ॥ ७९ ॥ प्राणान्तिकात्यन्तिकसङ्कटेऽपि, नादत्त सच्चित्तमियं कदाचित् । तैस्तै-
र्गुणैः सा तदपि प्रतीता, सचित्तहर्त्री जगतोऽपि चित्रम् ॥ ८० ॥ सौभाग्यशोभाभवनं भवानी, महेभ्यपुत्रेण
महेश्वरेण । सा स्वीकृता युक्तमिदं च चित्रं, चण्डीत्वमाधत्त कदा च नापि ॥ ८१ ॥ तस्यास्तु साङ्गत्यवशेन
सोऽपि, शिश्राय सुश्रावकधर्ममुच्चैः । तथा यथैकात्मजजन्मनोऽनु प्रपेदतुर्ब्रह्म भवावधि द्वौ ॥ ८२ ॥ योगेऽपि
भोगाङ्गसमग्रसङ्गतेर्निःसङ्गभावो भुवनाद्भुतस्तयोः । दिने दिनेऽवर्द्धत गर्द्धमुक्तयोस्तत्स्पर्द्धया धाम्नि महर्द्धयोऽपि
च ॥ ८३ ॥ क्षेत्रेषु सप्तस्वथ दुःस्थदीनादिकोपकारेऽप्यनिशं स्ववित्तम् । साऽयोजयद्विश्वहितैकचित्ता, विशिष्य
दुर्भिक्षभयाऽऽमयादौ ॥८४॥ यतः–“सङ्कुचन्त्यवमे तुच्छाः, प्रसरन्ति महाशयाः । ग्रीष्मे सरांसि शुष्यन्ति,
कामं वारिधिरेधते ॥ ८५ ॥” निर्वाह्य सद्धर्ममबाह्यभावा, तस्मिन् भवे सैव मृताऽच्युताह्वे । कल्पे द्युसद्भूयम-
धानुभूय, भूमीन्द्र ! मन्त्रीन्द्रकुलेऽवतीर्णा ॥ ८६ ॥ तस्याः प्रियोऽपि प्रियधर्मकर्मा, सुश्राद्धधर्मा विगलत्कुकर्मा ।
शर्मानुभूयाद्भुतमच्युतस्वश्च्युतः क्षितीश ! त्वमभून्महर्द्धिः ॥ ८७ ॥ प्राक् सर्वसच्चित्तरसादिहानाद्दानादिपुण्यैश्च
समृद्धिरेषा । आसीज्जिनस्येव जनिक्षणेऽस्या, यत्त्यज्यते प्राक् सुलभं पुरस्तात् ॥ ८८ ॥ अस्याः प्रभावात् परमा
समृद्धिरेवं समग्राऽशिवनिर्गमश्च । आजीवितं संभविता प्रभूतैः, पुण्यैरसम्भाव्यमिहास्ति किं वा ? ॥ ८९ ॥

विच्छेदमिच्छुर्यदि मूलतोऽस्य ॥ ६५ ॥ पीयूषवृक्षस्य फलं तदानीमास्वादयाद् सकलामयघ्नम् । अदुश्च सुस्वादतमं सुमन्त्रपवित्रितं वारि सुधानुकारि ॥ ६६ ॥ आभ्यामुभाभ्यां च रसायनाभ्यामिवोद्भवेन्नैव भवेऽप्यमुष्मिन् । आमादिनामापि पुनर्भवेच्च, सर्वाङ्गभोगर्द्धिसुखाभिवृद्धिः ॥ ६७ ॥ इत्युक्तिमात्रात्पितृभ्रातृमात्रादिकेषु मात्राधिकसंमदेषु । जजल्प साऽकल्पत एव नैतत्, फलं जलं वाऽत्र भवेऽपि मे भोः ! ॥ ६८ ॥ आचष्ट वक्रोष्टिकयाऽथ वैद्यो, नन्वौपधार्थे किमकल्पनीयम् ? । महर्षयोऽप्यौषधमाद्रियन्तेऽन्यथा विभाव्य द्विभवार्थहानिम् ॥६९॥ विहस्य सा धर्मरहस्यवाचा, प्रोवाच वाचंयमवत्ततश्च । अधर्मजव्याधिविनाशनार्थमवन्ध्यहेतुः खलु धर्म एव ॥ ७० ॥ तं बीजभूतं किल कः फलार्थी, विध्वंसयेद्दुर्मतिरल्पहेतोः ? । तस्माद्युगान्तेऽपि निषिद्धवस्त्वादानं न कुर्वे दृढमित्यवेहि ॥ ७१ ॥ स्वैरिणीयं स्वहितेऽपि मुग्धा, मुधा विदग्धात्मकमानिनी च । कदाग्रहग्राहग्रहीतचित्तोत्सर्गापवादाद्यपि नैव वेत्ति ॥ ७२ ॥ यतः-"सव्वत्थ संजमं संजमाओ अप्पाणमेव रक्खिज्जा । मुच्चइ अइवायाओ पुणोवि सोही न याविरई ॥ ७३ ॥" एवंविधां व्याधिगणैर्घुणैरिव, ग्रस्तां प्रशस्ताङ्गकयष्टिमप्यमूम् । पाणौ करिष्यत्यपि कः कथं नु वा, स्वजन्म निर्वाह्यमसह्ययाऽनया ? ॥७४॥ इत्यादि वैद्यस्वजनान्यलोकानेकप्रकारोक्तिमहोर्मिमालाः । किञ्चिन्न दुर्भेदभिदोऽप्यभिन्दन्मनस्तटीं वज्रमयीमिवास्याः ॥ ७५ ॥ इत्थं दृढान्तःकरणत्वमस्या, जगच्चमत्कारकरं निरीक्ष्य । तुष्टः सुरः स्पष्टतया स्वरूपं, द्विधा प्रकाश्य प्रशशंस तां सः ॥७६॥ रोगान् समग्रानपहृत्य चास्याः, स्ववैद्यवद्दैवतशक्तितोऽसौ । रैरत्नवृष्टिप्रभृतीनि पञ्चाश्चर्याणि कृत्वा स्वपदं प्रपेदे

ध्वान्ततते र्व्यपायः ॥ ५३ ॥ धिग्गृद्धिवृद्ध्या नियमस्य भङ्गमप्याचरन्ति द्रुतमेव मूढाः । परत्र तद्दुष्कृतदुर्विपाकं,
दुरन्तमन्तर्नतु चिन्तयन्ति ॥ ५४ ॥ प्रक्षीयते तद्दुरितं न यावत्तावद्व्यथाऽपैति कथं तदुत्था ?। क्षयोऽस्य सद्ध-
र्मत एव चातस्तत्रैव यत्नोऽर्हति तत्त्ववेत्तुः ॥ ५५ ॥ प्राग् दुष्कृतं किन्नु कृतं मयैवं, यद्बाधिता व्याधिभिरस्म्य-
साध्यैः । तयेति पृष्टा अथ ता जगुः प्राग्भवांस्तदीयांस्त्रयसंविदाढ्याः ॥ ५६ ॥ प्राहुः पुनस्ता व्यवहारिजाते !,
जाताऽसि तद्दुष्कृतभोग्यशेषात् । इहापि हा दुःसहदुःखखानिर्धिगस्तु जिह्वामजितां भुजङ्गीम् ॥ ५७ ॥ प्रसज्यते
यौवन एव जन्तोरेकैकरूपे विषये दृगादिः । लोलातिलोला तु वयस्त्रयेऽपि, रसे च वाक्ये च कृतप्रसक्तिः॥५८॥
शूकलाश्व इव दुर्दममुच्चैरिन्द्रियेषु रसनेन्द्रियमेव । उन्मदं यदखिलान्यपि तानि, प्रापयत्यधिकमुन्मदभावम्
॥ ५९ ॥ घ्राणानि शेषाणि बुभुक्षितायां, घ्राणात्मिकायां तु बुभुक्षितानि । स्युर्यत्र चित्तं करणानि वोच्चैः, प्रय-
ततः सा रसनैव जेया ॥ ६० ॥ श्रुत्वेति जातिस्मृतितः प्रबुद्धा, शुद्धाशया सा गृहिधर्ममाप्य । भोगोपभोगेऽ-
खिलतद्भवेऽपि, तत्याज भोज्ये सकलं सचित्तम् ॥ ६१ ॥ अचित्तमप्यौज्झदभक्ष्यमेषा, भक्ष्यं च निःशेषमि-
ष्टानि मुक्त्वा । पेयाऽथ शालिः कलमश्च मुद्गा, दोड्याख्यशाकं च गवाज्यतक्रे ॥ ६२ ॥ फलं च दुग्धामलकं च
पूगं, जलं त्रिदण्डोत्कलितं च वाप्याः । आद्यं दिने द्रव्यचतुष्कमेवैष्वपीति निर्वाहयति स्वधर्मम् ॥ ६३ ॥
युग्मम् ॥ सम्यग्दृशैकेन सुरेण साऽथ, प्राशस्यत स्वीकृतधर्मदार्ढ्यम् । अश्रद्दधत् तत्तु परः सुरस्तां, परीक्षितुं धाम
जगाम तस्याः ॥ ६४ ॥ विदग्धवैदेशिकवैद्यरूपः, प्ररूपयामास च सानुकम्पः । सुखद्विषो व्याधिगणस्य वत्से !,

लैर्व्यपद्यत ॥ ४१ ॥ कुर्याच्छुभाभिग्रहनिग्रहं यः, प्रायः स तेनैव भवद्वयेऽपि । अनर्थभाक् स्यादिति किन्त्वभक्ष्यफलादनादेव मृता द्रुतं सा ॥ ४२ ॥ यो वा यतः स्याद्विवशः स तेन, विडम्ब्यतेऽत्रापि न संशयोऽत्र । इतीव सा गृध्नुतयैव तस्मिन्, भवे विपेदे नवयौवनाऽपि ॥ ४३ ॥ उत्पद्य चाद्ये नरके रसज्ञाऽस्योत्कर्त्तनोन्मर्दनदाहमुख्यैः । कदर्थितोद्धृत्य महार्तिमित्थेऽप्येवं मृताऽगान्नरके द्वितीये ॥ ४४ ॥ ततश्च विट्शूकररासभादिभवेषु भूयःस्वनुभूयते स्म । क्षुत्तृड्व्यथाऽत्यर्थकदर्थनाद्यैर्दुःखं तया दुर्विषहं चिराय ॥४५॥ ततः सुता सा धनिमुख्यलक्ष्मीधरस्य लक्ष्मीपुरवासिनोऽभूत् । लक्ष्मीवतीकुक्षिभवा भवानीनाम्नी भवानीव सुरूपताद्यैः ॥ ४६ ॥ सा जातमात्राऽप्यतिमात्रकासश्वासादिकैः षोडशदुष्टरोगैः । निपीडिताऽनेकविधोपचारैरुल्लाघतां शापहतेव नाप ॥ ४७ ॥ षोडशरोगाश्चैवमुक्ताः—"कासे १ सासे २ जरे ३ दाहे ४, कुच्छिसूले ५ भगंदरे ६ । अरसा ७ अजीरए ८ दिट्ठी ९, पुट्ठिसूले १० अरोअए ११ ॥ ४८ ॥ कंडू १२ जलोअरे १३ सीस १४, कन्नवेअण १५ कुट्ठए १६ । सोल एए महारोगा, आगमंमि विआहिआ ॥ ४९ ॥ शृङ्गारसाम्राज्यमयीमवस्थां, प्राप्ताऽपि नित्यामयतः प्रतप्ता । कदाचिदासन्नमुपाश्रयं सा, गत्वा च नत्वा यतिनीरपृच्छत् ॥ ५० ॥ अस्त्यौषधं वः किमपीह तादृग्, व्याधिः सहोत्थोऽप्यपयाति येन । अभाणि ताभिः सुतरां ततः साऽप्यत्यादृता प्राह तदाऽर्प्यतां तत् ॥ ५१ ॥ ततोऽभ्यधुस्ता इह दुस्सहानि, प्रागुत्तपापद्रुफलान्यमूनि । क्षयाय तेषां समिधामिवाग्निः, सदौषधं श्रीजिनधर्म एव ॥ ५२ ॥ आराधितात्रैधविशुद्धिभावादस्मादकस्मादपि बोभवीति । अत्राप्यमुत्राखिलदुःखराशेरंशोरिव

मनसोऽपि किङ्करैरिन्द्रियैरहह किङ्करीकृतः ॥ ३० ॥” गुसं न तिष्ठत्ययमित्यकृत्यं, तस्या विदुः स श्वशुरादयो द्राक्। आसंस्ततोऽस्यां शिथिलादरास्ते, गुणैर्विना कः खलु मन्यते ज्ञैः ? ॥ ३१ ॥ यतः–“गौरवाय गुणा एव, नतु ज्ञातेयडम्बरः। वानेयं गृह्यते पुष्पमङ्गजस्त्यज्यते मलः ॥ ३२ ॥” पित्राऽथ सा स्वावसथं कथञ्चिदानीय नीता सुगुरोः सकाशे। दाक्षिण्यलज्जादिवशादनन्तकायाद्यभक्ष्यस्य निषेधमाधात् ॥ ३३ ॥ अभिग्रहस्थैर्यकृते नितान्तं, कृता प्रशंसा गुरुभिर्द्वयैश्च। कष्टं प्रकृष्टं सुनियन्त्रितेव, सा मन्यमाना गृहमाप पत्युः ॥ ३४ ॥ सुसंस्कृतां क्वाप्यथ कोमलाम्लिकामालोक्य दन्तोदकसंप्लवोत्कटत्। दोषोऽत्र कः प्रासुकवस्तुनीतिगीराहारयत्तां निरभिग्रहेव सा ॥३५॥ अनन्तकायान्यपि खादति स्म सा, प्राक् प्रासुकान्येव शनैः २ पुनः। अप्रासुकान्यप्यहहो ? महीयसी, निःशूकता काऽप्यतिलौल्यसङ्गतेः ॥ ३६ ॥ यतः–“करोत्यादौ तावत्सघृणहृदयः किञ्चिदशुभं, द्वितीयं सापेक्षो विमृशति च कार्यं च कुरुते। तृतीयं निःशङ्को विगतघृणमन्यत्प्रकुरुते, ततः पापाभ्यासात्सततमशुभेषु प्ररमते ॥ ३७॥” एवं निजाभिग्रहकल्पभूरुहं, समूलमुन्मील्य वितुल्यलौल्यतः। प्राग्वत्प्रवृत्ताऽखिलवस्तुभक्षणेऽप्यहो ! दुरन्ता रसना दुरात्मनाम् ॥ ३८ ॥ सा सर्वभक्ष्या भुवि राक्षसीव, ज्वालेव दावस्य विसर्प्पिणी वा। ततर्प न क्वापि चटत्प्रकर्षसतर्षहृद्रीतिरहो ? भवस्य ॥ ३९ ॥ विशुद्धपक्षद्वितयाऽपि सा दधौ, निर्धर्मनिःशूकमना वकीयितम्। दीपोद्भवा भव्यशरावसङ्गिनी, तदप्यजस्रं मलिनैव वा मषी ॥ ४० ॥ यान्त्यन्यदा सद्म पितुः पथि क्वचिद्वनान्तरज्ञातफलादनोद्यता। आस्वादितैः सा सपदि द्विधा सुदुर्विपाककिम्पाकफ-

भ्युदयोऽत्र हेतुः ॥ १८ ॥ तपस्विभिस्तु स्वतपःप्रभावः, सद्धार्मिकैर्धर्मविनिर्मितिश्च । ध्यानस्य च ध्यानिवरैर्विधानं, योगस्य योगीन्द्रवरैः प्रयोगः ॥ १९ ॥ स्वमन्त्रशक्तेः किल मान्त्रिकैश्च, सदैवतैर्दैवतबलिगतं च । यज्ञैकविज्ञैर्निजयज्ञसृष्टिर्ग्रहप्रचारो ग्रहचारविद्भिः ॥ २० ॥ त्रिभिर्विशेषकम् ॥ मिथ्याभिमानेषु कदर्थितेषु, सर्वेष्वपीत्थं स्वमनोऽन्तरे च । ससंशयेष्वन्यदिने मुनीन्द्रस्तत्रायथौ केवलसंविदाढ्यः ॥२१॥ राजा प्रजायुग् विधिवन्दनादि, निर्माय निर्मायमपृच्छदेनम् । स्वामिन्नसंभाव्यतमे समृद्धिभावे भुवः सम्प्रति कोऽत्र हेतुः ? ॥ २२ ॥ गुरुर्जगौ या बहुबुद्धिमन्त्रीश्वरस्य पुत्री निपुणाऽस्ति जाता । तस्याः प्रभावो भुवनातिशायी, सर्वोऽप्ययं प्राग्भवपुण्यजन्मा ॥ २३ ॥ तस्याः प्राग्भवसम्बन्धश्चायम्–राजन्! पुरा भद्रपुरे महेभ्यभद्रस्य भद्रादयितस्य पुत्री । आसीत् सुभद्रेत्यभिधा प्रधाननिधानलक्ष्मीरिव माननीया ॥ २४ ॥ सा श्राद्धपुत्रीत्युपलब्धजैनधर्माऽपि कर्मानुगमप्रभावात् । आबाल्यतो लौल्यमतुल्यमाधात्, सहोत्थमेकं विधुमण्डलीव ॥ २५ ॥ स्वैरभ्रमा सर्वमभक्ष्यमेषा, पत्रादि कन्दाद्यपि पर्यखादत् । पित्रादिभिर्भूरि निवारिता तु, रहोऽप्यहो ! गृद्धिरसस्य वृद्धिः ॥२६॥ अपत्यमुन्मार्गगतं पितॄणां, दोषाय गोपस्य यथेह गावः । इत्येषकौतश्रृङ्खलतानिवृत्त्यै, न्यवारि पित्रा गृहनिर्गमादिः ॥ २७ ॥ तथाऽपि सा तद्व्यसनाभिभूता, प्रभूतमानाय्य परैः कथञ्चित् । अनन्तकायाद्यपि नव्यनव्यं, सचित्तमत्ति स विवेकशून्या ॥ २८ ॥ धर्मिष्ठगेहे श्वपधर्मणोऽपि, धर्मिष्ठता स्यादतिशायिनीति । सा नैष्ठिकप्रष्ठमहेभ्यसूनोर्दत्ताऽपि न स्वां प्रकृतिं व्यमुञ्चत् ॥२९॥ यतः–"आत्मभूपतिरयं चिरन्तनः, पीतमोहमदिराविमोहितः । किङ्करस्य

दृक्षु । फलानि शस्त्रेषु च नन्वभूवंस्तदा द्रुमादौ क्वचिदल्पतोऽपि ॥ ६ ॥ जलाशयानां जलमप्यपेयमशेषमासी-
द्विषमिश्रितं तु । तद्दृष्टितस्तेन जनः समग्रोऽप्यत्याकुलीभावमवापदुच्चैः ॥ ७ ॥ दुर्भिक्षकाले किल पत्रपुष्पफलै-
र्जलैश्चाखिलदेहभाजाम् । निर्वाहमात्रं हि भवेत्कथञ्चित्तदा तदप्याप सुदुर्घटत्वम् ॥ ८ ॥ महेभ्यगेहान्तरवर्त्ति-
कूपीजलेन बह्वर्थनयाऽल्पकेन । सुधावदासेन तदा कथञ्चित्, केचित् कियन्तं समयं नयन्ति ॥ ९ ॥ तद्दुर्लभं
ये त्वलभन्त नाम्भः, पपुश्च तद्दुष्टजलं तृषार्त्ताः । ते तत्क्षणोत्थज्वरकुष्ठकासश्वासभ्रमाद्यैर्मृतिमप्यवापुः ॥१०॥
निमित्तका दैवतसेवकाश्च, ज्योतिर्विदो मन्त्रविदोऽपि विज्ञाः । पृष्टा नृपाद्यैरवदत् सदन्दवृष्टिः पुरः प्रावृषि
नारतस्तु ॥ ११ ॥ किंकृत्यमूढा नृपमन्त्रिमुख्या, हाहामहारावसृजः प्रजाश्च । ततः परिक्षिप्तगलैकपाशा, इवा-
भवन्नुज्झितजीविताशाः ॥ १२ ॥ उपप्लवैरित्यतुलैरनल्पैः, कल्पान्तकल्पे किल याति काले । प्रगेऽन्यदाऽऽस्थान-
गतः क्षमाभृद्व्यज्ञप्यत प्राग् वनपालपुंभिः ॥ १३ ॥ सर्वर्त्तुकैः पुष्पफलैर्दलैश्च, वनं निशि प्रागदिशि सर्वतोऽद्य ।
अपम्फलीन्नाथ ! तथा यथान्तः, करप्रचारोऽपि रवेर्भवेन्न ॥ १४ ॥ एवं चतुर्दिग्वनखण्डपालैः, क्षेत्राधिपालैरखि-
लैश्च हृष्टैः । निपानपालैश्च जलप्रसत्त्याऽवर्द्धाप्यतोर्वीपतिरेककालम् ॥ १५ ॥ पुरान्तरग्रामसमागतैश्चाप्येवं
जनैर्विज्ञपितः क्षितीन्द्रः । सविस्मयानन्दरसातिशेषमशेषलोकैः सहितोऽन्वबोभोत् ॥ १६ ॥ तदा तदात्वापस-
रत्समग्ररोगा झटित्युद्धतजीविताशाः । प्रजाः प्रजापालयुताः प्रमोदान्महोत्सवाद्वैतविधिं वितेनुः ॥ १७ ॥
तादृक्समृद्धेरवितर्किंतायाः, सम्यग्निमित्तं न हि वेत्ति कश्चित् । ततः क्षितीशेन जनैश्च मेने, स्वस्यैव भाग्या-

दशवेश्यासमो नृपः ॥ १ ॥" इति ११, निर्लाञ्छनकर्मणि गवाश्वोष्ट्रादिपञ्चेन्द्रियकदर्थना १२, दवदानेऽनेकविधजीवकोटिवधः १३, सरोवरादिशोषे जलस्य तथा तद्गतानामनेकमत्स्यादीनां जलप्लावितानां च षण्णामपि जीवनिकायानां विनाशः १४, असतीपोषे दास्यादिक्रियमाणदुष्कृतैः पापवृद्धिः १५, एवंखुशब्दौ सूत्रगाथाप्रान्ते योज्यौ, ततश्चैवंप्रकाराणि अन्यान्यपि खरकर्माणि निस्त्रिंशजनोचितानि कोट्टपालनगुप्तिपालनसीमपालनादीनि 'खु' निश्चयेन वर्जयेत्, भूयोवर्जनक्रियाऽभिधानमत्यादरख्यापनार्थम्, एषु वर्जनीयेषु यदनाभोगातिक्रमादिनाऽतिचरितं तत्प्रतिक्रमामीत्यध्याहार्यम्, एतद्व्रतपालने सर्वाङ्गीणदिव्यभोगनीरोगताभीष्टसंयोगनरामरपरमपदादि फलम्, एतस्यानुपादाने विराधने वा घोररोगप्रियवियोगसमग्रभोगविघ्नाधोगमनानि चेति द्वाविंशत्रयोविंशगाथार्थः ॥ २२-२३ ॥ एतद्व्रताराधनविराधनयोर्मन्त्रिपुत्रीवृत्तं, तच्चेदम्—

सौवर्द्धिसंवर्द्धितनाककम्पा, चम्पाऽनुकम्पापरपौरलोका । अङ्गाह्वदेशेऽस्ति पुरी पुराणा, पुरः पुरः किङ्करयन्ति यस्याः ॥ १ ॥ प्राज्यत्प्रतापेन सहस्ररश्मिः, सहस्रशीर्षः क्षितिभारधृत्यै । तां पालयामास सहस्रवीर्यः, क्ष्मापः सहस्राक्षसदक्षवीर्यः ॥ २ ॥ तस्य क्षितीन्द्रोर्बहुमानपात्रममात्रबुद्धिर्बहुबुद्धिमन्त्री । बभूव येनेप्सितसिद्धमन्त्रैर्मन्त्रैरमन्त्रीकृत इन्द्रमन्त्री ॥ ३ ॥ कदाचिदुर्वीवलये प्रजानामभाग्ययोगेन युगान्तकृत्तु । ववर्ष सोत्कर्षममर्षणाशीविषेन्द्रवत्तीव्रविषं तडित्वान् ॥ ४ ॥ अनिष्टवृष्टेः किल सस्यसम्पत्काले करालेन जलेन तस्य । दवानलेनेव निदह्यते स्म, तृणयावनीधान्यलताद्यशेषम् ॥ ५ ॥ पत्राणि देहेषु विहङ्गमानां, पुष्पाणि केषांचन दुष्ट-

उभयत्र तद्गतत्रसादेश्च महाविराधना ५, आकरे दन्तचमरीकेशादित्रसाङ्गवाणिज्ये ग्राहकान् दृष्ट्वा लोभात्पुलिन्द्रादयस्तत्कालमेव हस्तिचमर्यादिवधे प्रवर्त्तन्ते ६, लाक्षावाणिज्ये लाक्षाया बहुत्रसाकुलत्वात्तद्रसस्य च रुधिरभ्रमकारित्वात् धातकीत्वक्पुष्पयोर्मद्याङ्गत्वात्तत्कल्कस्य च कृमिहेतुत्वात् गुलिकाया अनेकजन्तुघाताविनाभावित्वात् मनःशिलाहरितालवज्रलेपानां सम्पातिमबाह्यजन्तुघातकत्वात् तुबरिकायाः पृथ्वीत्वादिना पटवासस्य त्रसाकुलत्वात् टङ्कणक्षारसाबूक्षारादेर्बाह्यबहुजीवविनाशनिमित्तत्वाच्च महानेव दोषः, लाक्षादेर्दुष्टत्वं मनुस्मृतावप्युक्तम्–“ सद्यः पतति मांसेन, लाक्षया लवणेन च। त्र्यहेण शूद्रीभवति, ब्राह्मणः क्षीरविक्रयात् ॥ १ ॥”
७, रसवाणिज्ये मध्वादौ जन्तुघातोद्भवत्वादनेकजन्तुसंमूर्च्छनादिदोषः, दुग्धादौ सम्पातिमजन्तुविराधना, दिनद्वयातीते दध्नि जन्तुसंमूर्च्छनाऽपि प्रागुक्तयुक्त्या ८, केशवाणिज्ये द्विपदचतुष्पदानां नित्यं पारवश्यवधबन्धक्षुत्पिपासापीडादि ९, विषवाणिज्ये शृङ्गिकावत्सनागादेर्हरितालसोमिलक्षारादेश्च विषस्य शस्त्रादीनां च जीवितघ्नत्वं प्रतीतमेव, दृश्यन्ते हि जलार्द्रहरितालेन सहसैव विपद्यमाना मक्षिकादयः, सोमिलक्षारादिना तु भक्षितेन बालादयोऽपि, विषादिवाणिज्यं परेऽपि निषेधयन्ति–“कन्याविक्रयिणश्चैव, रसविक्रयिणस्तथा। विषविक्रयिणश्चैव, नरा नरकगामिनः ॥ १ ॥” इति १०, यन्त्रपीडाकर्मण्यनेकत्रसवधोऽपि, तत एवोक्तम्–“खण्डनी पेषणी चुल्ली,जलकुम्भः प्रमार्जनी। पञ्च शूना गृहस्थस्य, बध्यते यास्तु वाहयन् ॥१॥” तिलयन्त्रादेश्च महापातकहेतुत्वं लौकिका अपि वर्णयन्ति–“दशशूनासमश्चक्री, दशचक्रिसमो ध्वजः। दशध्वजसमा वेश्या,

लीमनःशिलाहरितालवज्रलेपतुबरिपटवासटङ्कणसाबूक्षारादिविक्रयो लाक्षावाणिज्यं ७, मधुमद्यमांसम्रक्षणदुग्धदधिघृततैलादिविक्रयो रसवाणिज्यं ८, दासादिनृणां गवाश्वादितिरश्चां च विक्रयः केशवाणिज्यं ९, विषशस्त्रकुशीकुद्दालादिलोहहलादिविक्रयो विषवाणिज्यम् १०, एतत्पञ्चविधवाणिज्यं पूर्वोक्तं पञ्चप्रकारं च कर्म सुश्रावको वर्जयेदिति सण्टङ्कः । 'जंतपीलण'त्ति शिलोदूखलमुशलघरट्टारहट्टटङ्कनादिविक्रयस्तिलेक्षुसर्षपैरण्डफलातस्यादिपीडनदलनतैलविधानजलयन्त्रवाहनादिना यन्त्रपीडनकर्म, योगशास्त्रे तु घरट्टादियन्त्रविक्रयो विषवाणिज्यतयोक्तः ११, गवादिकम्बलशृङ्गपुच्छच्छेदनासावेधाङ्कनषण्डनत्वग्दाहादिउष्ट्रपृष्ठगालनादि च निर्लाञ्छनकर्म १२, गहनदाहे सति भिल्लादयः सुखेन चरन्ति जीर्णतृणदाहे वा नवतृणाङ्कुरोद्भेदाद्गवादयश्चरन्ति यद्वा दग्धे क्षेत्रे सस्यसम्पत्तिवृद्धिः स्यादित्यादिपुण्यबुद्ध्या कौतुकाद्वाऽरण्येऽग्निप्रज्वालनं दवदानं, श्रूयते हि मरणकाले भिल्लादयो भणन्ति-यथेयन्तो मम श्रेयोऽर्थं धर्मदीपोत्सवाः करणीया इति १३, सरोवरह्रदतडागादिशोषः सारणीकर्षणेन तत्र धान्यादिवपनार्थं, तत्राखातं सरः खातं तु तडागमित्यनयोर्भेदः १४, वित्तार्थं दुःशीलदासीनपुंसकादेः शुकशारिकामयूरमार्जारमर्कटकुर्कुटकुर्कुरगर्त्ताशूकरादेश्च पोषोऽसतीपोषः, केचन हि दासीः पोषयन्ति तत्सम्बन्धिनीं च भाटीं गृह्णन्ति यथा गोल्लदेशे १५, एषां चानाचरणीयत्वं बहुदोषत्वात् । तत्राङ्गारकर्मण्यग्नेः सर्वतोमुखशस्त्रत्वात्षण्णां जीवनिकायानां १ वनकर्मणि वनस्पतेस्तदाश्रितत्रसादेश्च २ शकटभाटककर्मणोर्भारवाहकवृषभादेर्मार्गस्थषड्जीवानां च ३-४, स्फोटकर्मणि कणदलनादौ वनस्पतेर्भूखननादौ पृथ्व्या

'पडिक्कमे' इत्यादि प्राग्वदित्येकविंशगाथार्थः ॥ २१ ॥ अत्र व्रते भोगोपभोगोत्पादकानि बहुसावद्यानि कर्मतोऽङ्गारकर्मादीनि पञ्चदश कर्मादानानि तीव्रकर्मबन्धनिबन्धनानि श्राद्धेनातीचारभूतानि वर्ज्यानि अतस्तेष्वनाभोगादिना यदाचरितं तत्प्रतिक्रमणाय गाथाद्वयमाह—

इंगाली वणसाडी भाडी फोडी सुवज्जए कम्मं । वाणिज्जं चेव दंतलक्खरसकेसविसविसयं ॥२२॥
एवं खु जंतपीलणकम्मं निल्लंछणं च दवदाणं । सरदहतलायसोसं असईपोसं च वज्जिज्जा ॥२३॥

कर्मशब्दः पूर्वार्द्धे प्रत्येकं योज्यः 'इंगाली'ति, 'एव'मिति, अङ्गारकर्म काष्ठदाहेन नव्याङ्गारकरणं, एवं भ्राष्ट्रकरणेष्टकादिपाककुम्भकारायस्कारस्वर्णकारकृत्याद्यप्यङ्गारकर्म तेन यज्जीवनं तदङ्गारजीविका, एवमग्रेऽपि भाव्यम् १, छिन्नाच्छिन्नवनपत्रपुष्पफलकन्दमूलतृणकाष्ठकम्बावंशादिविक्रयो वनकच्छादिकरणं च वनकर्म २, शकटशकटाङ्गघटनखेटनविक्रयादि शाकटिककर्म ३, शकटवृषभकरभमहिषखरवेसराश्वादेर्भाटकग्रहणेन भारवाहनं भाटककर्म ४, यवचणकगोधूमकरडादेः सक्तुदालिपिष्टतन्दुलकरम्बादि खानिसरःकूपाद्यर्थं भूखननहलखेटनपाषाणघटनादि वा स्फोटककर्म, योगशास्त्रे तु कणदलनादिवनकर्मतया विवक्षितम् ५। अथोत्तरार्द्धेन पंच वाणिज्यान्याह—'वाणिज्ज—'मित्यादि, विषयशब्दः प्रत्येकं योज्यः, ततो दन्तविषयं वाणिज्यम्, एवं लाक्षादिष्वपि, तत्राकरे दन्तिदन्तघूकादिनखहंसादिरोमचर्मचमरश्रृङ्गशङ्खशुक्तिकपर्दकस्तूरीपोहीसकादित्रसाङ्गग्रहणं दन्तवाणिज्यं ६, लाक्षाधातकीनी-

षध्याहारः, अथ पिष्टं कियत्कालं मिश्रं कथं वाऽचित्तं स्यात् ?, उच्यते, चालितं पिष्टमन्तर्मुहूर्त्तात्परतोऽचित्तम्, अचालितं तु मिश्रं धान्यनखिकाद्यवयवानां परिणतत्वासम्भवात्, मिश्रत्वकालपरिमाणं चैवमाहुः–"पणदिण मीसो लुट्टो अचालिओ सावणे अ भद्दवए। चउ आसोए कत्तिअ मिगसिरपोसेसु तिण्णि दिणा ॥ १ ॥ पण पहर माह फग्गुणि पहरा चत्तारि चित्तवइसाहे। जिट्ठासाढे तिपहर अंतमुहुत्तं च चालिअओ ॥२॥" सचित्ततिलमिश्रयवधानादिरूपसचित्तमिश्राहारोऽप्यस्मिन्नतिचारेऽन्तर्भावनीयः ३, तथा दुष्पक्वस्य–अर्द्धस्विन्नस्य पृथुकचणकतन्दुलयवगोधूमस्थूलमण्डकफलादेः प्रासुकबुद्ध्या भक्षणं दुष्पक्वौषध्याहारः, इहलोकेऽप्यजीर्णादिप्रत्यपायकारी यावताऽंशेन च सचेतनस्तावता परलोकमप्युपहन्ति ४, तुच्छाः–तथाविधतृप्त्यजनकत्वादसारा औषध्यः–कोमलमुद्गचपलकादिशम्बिकास्ता भक्षयतस्तुच्छौषधिभक्षणता पञ्चमोऽतिचारः, आह ननु यद्येताः सचेतनास्तर्हि तद्भक्षणं प्रथमातिचारान्न विशिष्यते, अथाचित्तास्तर्हि को नामातिचारः ?, सत्यं, किन्तु योऽत्यन्तसावद्यभीरुतया सचित्तं प्रत्याख्याति तेनाचित्ता अप्येता न भक्षणीयाः, लौल्यमात्रनिमित्तत्वात्, न हि बहूनामपि तासां भक्षणे विशिष्य काऽपि तृप्तिरुपजायते, विराधना च महती, अत एव द्वाविंशत्यभक्ष्यमध्ये तुच्छफलशब्देनैता अपि प्रागव्याख्यातास्तस्मादेतासां भक्षणे वस्तुत एतद्व्रतविराधनारूपोऽतिचारः ५, एते पञ्चातिचाराः सचित्तपरिहारमाश्रित्यात्र प्रतिपादिताः, एवं रात्रिभोजनमद्यमांसादिपरिहारमचित्ताहारं वस्त्रादिपरिमाणनैयत्यं चाश्रित्याप्यनाभोगातिक्रमादिना स्वधिया स्वयमभ्यूह्याः, उपलक्षणमात्रत्वादमीषाम्, एतद्विषये

च त्रसाकुलानि तुच्छफलव्याख्यायां व्याख्यातानि, एषु मद्यमांसादिषु राजव्यापारादौ वर्त्तमानेन राजपारव-
श्यादिना यत्किञ्चित्क्रयणादि कृतं तस्मिन्, अत एव राजव्यापारस्तादृग्धर्मार्जनाभावेन नरकस्यैव हेतुः, पठितं
च-"नृपव्यापारपापेभ्यः, स्वीकृतं सुकृतं न यैः। तान् धूलिधावकेभ्योऽपि, मन्ये मूढतरान् नरान् ॥ १ ॥ अधि-
कारात्रिभिर्मासैः, माठापत्यात्रिभिर्दिनैः। शीघ्रं नरकवाच्छा चेद्दिनमेकं पुरोहितः ॥ २ ॥" एतैश्चानन्तरोदितै-
र्मद्यादिभिरन्तर्भोगः सूचितो, बहिर्भोगस्त्वयं 'गंधमल्ले अ'त्ति गन्धवासाः कस्तूरीकर्पूरागुरुधूपादयश्च माल्यानि-
पुष्पमालादयः, उपलक्षणत्वाद्वेषविभूषणाद्यशेषं भोग्यं च, एषु गन्धादिषु कृतप्रमाणेषु विषयभूतेषु प्राग्व्या-
ख्यातस्वरूपे उपभोगपरिभोगाख्ये द्वितीये गुणव्रतेऽनाभोगादिना यदतिक्रान्तं तन्निन्दामीति विंशतिगाथार्थः
॥ २० ॥ अमुष्मिन् व्रते विंशतिरतिचारास्तेषु पूर्वं भोगतः पञ्चातिचारान् प्रतिक्राम्यति—

सच्चित्ते १ पडिबद्धे २ अप्पोलि ३ दुप्पोलिए अ आहारे ४। तुच्छोसहिभक्खणया ५ पडिक्कमे देसिअं सव्वं २१

'सच्चित्ते' इति, कृतसचित्तपरिहारस्य कृतसचित्तपरिमाणस्य वा सचित्तमधिकसचित्तं वाऽनाभोगादिना
खादतः सचित्ताहारः प्रथमोऽतिचारः १, एवं वृक्षात्तत्कालगृहीतं गुन्दादि राजादनादि वा सचित्तान्तर्बीजं पक्व-
फलं कटाहमेव भक्षयिष्यामि पक्वत्वेन प्राशुकत्वाद्बीजं पुनरप्राशुकत्वात्त्यक्ष्यामीतिबुद्ध्या मुखे प्रक्षिपतः सचित्त-
प्रतिबद्धाहारः २, अपक्वम्-अग्निनाऽसंस्कृतम् अपरिणतकणिक्कादिकं पिष्टमचित्तमित्यादि धिया भक्षयतोऽपक्वौ-

वल्लीविशेषः २३ मूलकः प्रसिद्धः कन्दः, तस्य त्याज्यत्वं महाभारतादावप्यवादि-"रसोनं गृञ्जनं चैव, पलाण्डुः पिण्डमूलकम् । मत्स्यमांसं सुरा चैव, मूलकस्तु ततोऽधिकः ॥ १ ॥ पुत्रमांसं वरं भुक्तं, न तु मूलकभक्षणम् । भक्षणान्नरकं गच्छेद्वर्जनात्स्वर्गमाप्नुयात् ॥ २ ॥" २४, भूमिरुहाणि-छत्राकाराणि वर्षाकालभावीनि भूमिस्फोटकानीति प्रसिद्धानि २५, विरूढानि-अङ्कुरितानि द्विदलधान्यानि २६, टङ्कवास्तुलः-शाकविशेषः, स च प्रथमोद्गत एवान्तकायिको न तु छिन्नप्ररूढः २७, शूकरसञ्ज्ञितो वल्लः शूकरवल्लः स एवानन्तकायिको न तु धान्यवल्लः २८, पल्लयङ्कः शाकभेदः २९, कोमलाम्लिका-अबद्धास्थिका चिञ्चिणिका ३०, आलुक ३१ पिण्डालुकौ कन्दभेदौ ३२, न चैत एवानन्तकायाः किन्तु "गूढसिरसंधिपव्वं समभंगमहीरगं च छिन्नरुहं । साहारणं सरीरं तव्विवरीअं च पत्तेअं ॥ १ ॥" इत्यादिसिद्धान्तोक्ततल्लक्षणयुक्ता अन्येऽपि ज्ञेया हेयाश्च, यतः-"चत्वारो नरकद्वाराः, प्रथमं रात्रिभोजनम् । परस्त्रीगमनं चैव, सन्धानानन्तकायिके ॥ १ ॥" अनन्तकायाद्यभक्ष्यं चाऽचित्तभूतमपि परिहार्यम्, अथार्द्रकादेः स्वयं परेणाचित्तीकृतस्य ग्रहणे को दोषः?, उच्यते, निःशूकतालौल्यवृद्ध्यादिः परम्परया सचित्ततद्ग्रहणप्रसङ्गवृद्ध्यादिश्च, यथोक्तम्-"इक्केण कयमकज्जं करेइ तप्पच्चया पुणो अन्नो । सायाबहुलपरम्परवुच्छेओ संजमतवाणं ॥ १ ॥" इति द्वात्रिंशदनन्तकायस्वरूपम् ॥ एते चाभक्ष्यानन्तकायाः सूत्रगाथायां चशब्दसूचिता उपयोगित्वात्किञ्चिद्विवृताः, सम्प्रति सूत्रगाथाऽग्रतो व्याख्यायते-"पुप्फे अ फले अ"त्ति वर्जनीयपुष्पादीनि बहुविषयत्वात् सूत्रकारः साक्षादपि दर्शयति, तत्र पुष्पाणि चशब्दात्पत्रमूलादीनि फलानि

प्रजायते" शान्तातपोक्तशास्त्रेऽपि–"अभक्ष्यभक्षणादेव, जायन्ते कृमयो हृदि।" इति द्वाविंशत्यभक्ष्यस्वरूपम्॥

अनन्तकायिका आर्यदेशप्रसिद्धा द्वात्रिंशत्, तदाहुः–"सव्वा य कंदजाई सूरणकंदो अ १ वज्जकंदो अ २। अल्लहलिद्दा य ३ तहा अल्लं ४ तह अल्लकचूरो ५॥१॥ सत्तावरी ६ बिराली ७ कुंआरि ८ तह थोहरी ९ गलोई अ १०। लसुणं ११ वंसकरिल्ला १२ गज्जर १३ लूणो अ १४ तह लोढा १५॥२॥ गिरिकण्णि १६ किसलपत्ता १७ खरिंसुआ १८ थेग १९ अल्लमुत्था य २०। तह लोणरुक्खछल्ली २१ खिल्लहडो २२ अमयवल्ली अ २३॥३॥ मूला २४ तह भूमिरुहा २५ विरुहा २६ तह टक्कवत्थुलो पढमो २७। सूयरवल्लो अ २८ तहा पल्लंको २९ कोमलंबिलिआ ३०॥४॥ आलू ३१ तह पिंडालू ३२ हवंति एए अणंतनामेणं। अन्नमणंतं नेअं लक्खणजुत्तीइ समयाउ॥५॥" व्याख्या–सर्वैव कन्दजातिरनन्तकायिका, तत्र कांश्चित्कन्दान् व्याप्रियमाणत्वान्नामतो दर्शयति–सूरणकन्दः–अर्शोघ्नः कन्दविशेषः१ वज्रकन्दः २आर्द्रहरिद्रा ३ आर्द्रकं-शृङ्गबेरम् ४आर्द्रकच्चूरकः ५ शतावरी ६ बिरालिके वल्लीभेदौ ७ कुमारी–मांसलप्रणालाकारपत्रा ८ 'थोहरी' स्नुही तरुः ९ गडूची-वल्लीविशेषः १० लशुनं-कन्दविशेषः ११ वंशकरेल्लानि १२ गर्जरकाणि १३ लवणको–वनस्पतिविशेषो येन दग्धेन सर्जिका निष्पद्यते १४ लोढकः–पद्मिनीकन्दः १५ गिरिकर्णिका–वल्लीविशेषः १६ किशलयरूपाणि पत्राणि प्रौढपत्रादर्वाग्बीजस्योत्थानावस्थालक्षणानि सर्वाण्यपि १७ खरिंशुकाः १८ थेगश्च कन्दभेदः १९ आर्द्रमुस्ता २० लवणापरपर्यायस्य भ्रमरनाम्नो वृक्षस्य छविः–त्वग् न त्वन्येऽवयवाः २१ खिल्लुहडो–लोकप्रसिद्धः कन्दः २२ अमृतवल्ली-

जुत्तेसु निगोअपंचिंदी ॥ १ ॥" द्विदललक्षणं त्वेवमाहुः—"जंमि उ पीलिज्जंते नेहो नहु होइ बिंति तं विदलं। विदलेवि हु उप्पन्नं नेहजुअं होइ नो विदलं ॥ १ ॥" इति १८, वृन्ताकानि निद्राबाहुल्यमदनोद्दीपनादिदोषपोषकत्वात्, पठन्ति च परेऽपि—"यस्तु वृन्ताककालिङ्गमूलकानां च भक्षकः। अन्तकाले स मूढात्मा, न स्मरिष्यति मां प्रिये ! ॥ १ ॥" इति १९, अज्ञातनामानि पुष्पाणि फलानि च, अज्ञानतो निषिद्धपुष्पफलेषु प्रवृत्तौ व्रतभङ्गसम्भवाद्विषपुष्पफलेषु तु प्रवृत्तौ जीवितस्यापि नाशाद्, वंकचूलपल्लीपतिसार्थिकवत् २०, तुच्छफलं मधुकजम्बूबिल्वादेः, उपलक्षणत्वाच्च तुच्छं पुष्पं करीरारणिशिग्रुमधूकादेः, तुच्छं पत्रं प्रावृषि तन्दुलीयकादेश्च बहुजीवसंमिश्रत्वात्, यद्वा तुच्छफलमर्द्धनिष्पन्नकोमलचवलकमुद्गसिङ्गादिकं, तद्भक्षणे हि न तथाविधा तृप्तिर्विराधना च भूयसी २१, चलितरसं कुथितान्नं पर्युषितद्विदलपूपिकादि अनेकजन्तुसंसक्तत्वात्, उपलक्षणत्वात्पुष्पितौदनपक्वान्नादिदिनद्वयातीतदध्याद्यपि च, अथ पर्युषितद्विदलादौ कुथितत्वादिना जीवसंसक्तेर्गम्यत्वात् परिहार्यत्वमस्तु दिनद्वयातीते दध्नि जीवसंसक्तिः कथमवगम्यते ?, उच्यते, शास्त्रप्रामाण्यात्, तथा चोक्तम्—"जइ मुग्गमासमाई विदलं कच्चंमि गोरसे पडइ। ता तसजीवुप्पत्तिं भणंति दहिएवि दुदिणुवरि ॥ १ ॥" हारिभद्रदशवैकालिकबृहद्वृत्तावपि—"रसजास्तक्रारनालदधितीमनादिषु पायुकृम्याकृतयोऽतिसूक्ष्मा भवन्ती"ति, श्रूयते च धनपालपण्डितस्य प्रतिबोधनार्थमागतेन तद्बन्धुना शोभनेन मुनिना दिनद्वयातीते दध्न्यलक्तकपुम्भकेन जीवदर्शनं ततस्तत्प्रतिबोधभवनं च २२, निषिद्धं चाभक्ष्यं ब्रह्माण्डपुराणेऽपि—"अभक्ष्यभक्षणाद्दोषात्कण्ठरोगः

श्रीपुञ्जाय पञ्चशतीग्रामाधिपत्यं प्रादायि, तद्वचनाच्च नृपाद्यैस्तत्पित्राद्यैरन्यैरपि भूयोभिर्विभावरीभोजनादि न्ययम्यत, एवं जिनधर्मं प्रभावयंश्चिरं भुक्तपञ्चशतीग्रामसाम्राज्यः श्रीपुञ्जः श्रीधरेण सार्द्धं सौधर्मं प्राप्तास्त्रयोऽपि च क्रमात्सिद्धाः ॥

॥ इति रात्रिभोजने मित्रत्रयसम्बन्धः ॥

बहुबीजं पम्पोटकादिकमभ्यन्तरपुटादिरहितकेवलबीजमयं तच्च प्रतिबीजं जीवोपमर्दसम्भवाद्वर्जनीयं, ये त्वाभ्यन्तरपुटादिसहितबीजमयं दाडिमटिन्दुरकादि तन्नाभक्ष्यतया व्यवहरन्ति १५, अनन्तकायिकानि अनन्तजन्तुजातघातपातकहेतुत्वात्, यतः—"नृभ्यो नैरयिकाः सुराश्च निखिलाः पञ्चाक्षतिर्यग्गणा, द्व्यक्ष्याद्या ज्वलनो यथोत्तरममी सङ्ख्यातिगा भाषिताः। तेभ्यो भूजलवायवः समधिकाः प्रोक्ता यथानुक्रमं, सर्वेभ्यः शिवगा अनन्तगुणितास्तेभ्योऽप्यनन्तांशगाः ॥१॥" एतानि च व्यक्त्याऽग्रे दर्शयिष्यन्ते १६, सन्धानं निम्बुकबिल्विकादीनामनेकजीवसंसक्तिनिमित्तत्वात्, सन्धानस्य च व्यवहारवृत्त्या दिनत्रयात्परतोऽभक्ष्यत्वमाचक्षते १७, घोलवटकानि—आमघोलमिश्रवटकानि उपलक्षणत्वादामगोरससंपृक्तद्विदलानि च केवलिगम्यसूक्ष्मजीवसंसक्तिसम्भवात्, उक्तञ्च संसक्तनिर्युक्तौ—"सव्वेसुवि देसेसुं सव्वेसुवि चेव तह्य कालेसु। कुसिणेसु आमगोरस-

नरके उदपद्यत, रजनीभोजनप्रसक्तो मिथ्यात्व्यपि कदाचित्किंचिद्विषमिश्राहारभुक्त्या शाटं शाटं त्रुटदन्त्रनिबिडपीडया मृतो मित्रवत्तथैव मार्जारो नारकश्चाभूत्, भद्रकस्तु सम्यगनियमाराधनातः सौधर्मे महर्द्धिः सुरोऽभूत्, श्राद्धजीवश्च नरकोद्वृत्तो निःस्वद्विजस्य तनूजोऽजनि श्रीपुञ्जनामा, मिथ्यात्विजीवश्च तल्लघुभ्राता श्रीधराभिधः, इतश्चोपयुक्तेन भद्रकदेवेन रहसि स्वस्वरूपज्ञापनप्राग्भवकथनपूर्वं प्रतिबोध्य रात्रिभोजनाद्यभक्ष्यनियमं ग्राहितौ तौ तत्प्रतिपालने दृढीकृतौ च, यतः–"पापान्निवारयति योजयते हिताय, गुह्यं निगूहति गुणान् प्रकटीकरोति। आपद्गतं च न जहाति ददाति काले, सन्मित्रलक्षणमिदं प्रवदन्ति सन्तः ॥ १ ॥" पित्राद्यैस्तु कदाग्रहनिग्रहाय सर्वथा भोजनं निषिद्धं, तयोर्लङ्घनत्रयं जातं, तृतीयरात्रावव्हितभद्रकसुरेण तन्नियममहिमवृद्ध्यै तत्र धात्रीपतेरात्यन्तिकी जठरव्यथा विचक्रे, यथा यथा भिषग्ज्योतिषिकमान्त्रिकादयः किञ्चिदुपचेरुस्तथा तथा सा घृतसिक्तज्वालेवावर्द्धततमां, ततो मन्त्र्यादिषु किंकृत्यमूढेषु हाहारवपरेषु पौरेषु च दिवि दिव्या वागभूत्–भो! भो! निशाभोजनवर्जनादिदृढधर्मश्रीपुञ्जहस्तस्पर्शेनैवास्य राज्ञः पाटवं भावि नान्यथा कथमपीति, ततः कोऽत्र पुरे श्रीपुञ्ज इति विमृशत्सु सचिवादिषु केनाप्युक्तं निःस्वविप्रपुत्रः स्वनियमदार्ढ्याल्लङ्घनत्रयेऽप्यक्षुभितः श्रीपुञ्जः शिशुरेकोऽस्ति स एवायं सम्भवीति, ततः सम्भावनामात्रेणाप्यमात्रबहुमानेनाहूतः सचिवाद्यैः स श्रीपुञ्जः, सपद्यागतश्च सोत्साहमुच्चैराह–यदि मदाराध्यमानयामिनीभोजनादिनियममाहात्म्यमस्ति तदानीमिदानीमेवास्य राज्ञः सर्वाङ्गव्यथा सर्वथाऽप्युपशाम्यतु, इत्युक्तिपूर्वमूर्वीशं स स्वहस्तस्पर्शेनैव झटिति पटूचक्रे, ततस्तुष्टेन राज्ञा

रात्रिभोजननियमाराधनाविराधनयोर्मित्रत्रयदृष्टान्तो यथा—एकत्र ग्रामे श्रावकभद्रकमिथ्यादृष्टयस्त्रयः सुहृदो वणिजः, तेऽन्यदा जैनाचार्यान्तिके गताः, तैश्च रात्रिभोजनवर्जनादिदेशनां चक्रे, ततः श्राद्धेन रात्रिभोजन- कन्दमूलाद्यभक्ष्यनियमः श्राद्धकुलोद्भवतया सोत्साहयैव जगृहे, भद्रकेण च बहु बहु विमृश्य रात्रिभोजनमेव नियमयामाहे, मिथ्यादृष्टिस्तु न प्रतिबुद्धः कदाग्रहग्रस्तत्वात्, यतः—"आग्रही बत निनीषति युक्तिं, तत्र यत्र मतिरस्य निविष्टा। पक्षपातरहितस्य तु युक्तिर्यत्र तत्र मतिरेति निवेशम् ॥ १ ॥" तदनु श्रावकभद्रकयोः कुटु म्बेऽपि रात्रिभोजननियमपरे अभूतां, गृहेशानुसारिणी हि गृहव्यवस्था, आस्तिकश्च क्रमात् प्रमादबहुलतया स्वनियमे शिथिलादृतिस्तत्तत्कार्यव्याकुलतायां प्रातः सायं च त्याज्यघटीद्वयमध्येऽपि भुङ्क्ते क्रमात्सूर्येऽस्तं गतेऽपि, सम्यग्नियमाराधकभद्रकादिभिर्नोदितस्तु सम्प्रति दिवस एवास्ति क्व रात्रिरित्यादि प्रत्याह, तदनुसारेण सकलं तत्कुटुम्बमपि तथैव जातं, अहह! गृहस्वामिनः प्रमादबहुलतायां पापप्रसङ्गवृद्धिः, अन्यदा किञ्चिन्नृपादिष्टकार्यव्यग्रतया प्रातर्मध्याह्नेऽप्यभुक्तौ सायं सहैव द्वौ यावत् कथमपि भोक्तुं गृहमागतौ तावदुत्सूरोऽभवत्, ततः सुहृदादिभिरत्यर्थं कदर्थितोऽपि भद्रको नाभुङ्क्तैव, यतः—"अप्पहिअं कायव्वं जइ सक्का परहिअंपि कायव्वं। अप्पहिअपरहिआणं अप्पहिअं चेव कायव्वं ॥ १ ॥" श्रावकस्तु निःशूकतया किञ्चिदन्धकारप्रसरेऽपि यथेच्छं बुभुजे, तदा च तदात्तदुष्कृतादिव मूर्ध्नः पतिता यूका तेनाहारान्तराहारिता ततोऽसौ जलोदरमहाव्याधिनाऽत्यन्तं बाधितो मृत्वा निशाभोजननियमभङ्गात्क्रूरो मार्जारोऽजनि, ततश्च दुष्टेन शुना कदर्थ्यमानो विपद्याद्य-

गृहिणा च विवेकिना ॥ ३ ॥ ये रात्रौ सर्वदाऽऽहारं, वर्जयन्ति सुमेधसः। तेषां पक्षोपवासस्य, फलं मासेन जायते ॥ ४ ॥" स्कन्दपुराणे रुद्रप्रणीतकपालमोचनस्तोत्रे सूर्यस्तुतिरूपेऽपि-"एकभक्ताशनान्नित्यमग्निहोत्रफलं लभेत्। अनस्तभोजनो नित्यं, तीर्थयात्राफलं भजेत् ॥ १ ॥" रात्रौ भोजनकारिणां च कथं नामाचमनेऽपि शुद्धिः, यतः-"त्रयीतेजोमयो भानुरिति वेदविदो विदुः। तत्करैः पूतमखिलं, शुभं कर्म समाचरेत् ॥१॥ नैवाहुतिर्न च स्नानं, न श्राद्धं देवतार्चनम्। दानं वा विहितं रात्रौ, भोजनं तु विशेषतः ॥ २ ॥" आयुर्वेदेऽपि-"हृन्नाभिपद्मसङ्कोचश्चण्डरोचिरपायतः। अतो नक्तं न भोक्तव्यं, सूक्ष्मजीवादनादपि ॥ १ ॥" तस्माद्विवेकिना रात्रौ चतुर्विधोऽप्याहारः परिहार्यः, तदशक्तौ त्वशनं खादिमं च त्याज्यमेव, स्वादिमं पूगीफलाद्यपि दिवा सम्यक् शोधनादियतनयैव गृह्णाति, अन्यथा त्रसहिंसादयोऽपि दोषाः, मुख्यवृत्त्या च प्रातः सायं च रात्रिप्रत्यासन्नत्वाद्वे द्वे घटिके भोजनं त्यजेद्, यतः-"अह्नो मुखेऽवसाने च, यो द्वे द्वे घटिके त्यजन्। निशाभोजनदोषज्ञोऽश्नात्यसौ पुण्यभाजनम् ॥ १ ॥" अत एवागमे सर्वजघन्यं प्रत्याख्यानं मुहूर्त्तप्रमाणं नमस्कारसहितमुच्यते, जातु तत्तत्कार्यव्यग्रत्वादिना तथा न शक्नोति तदाऽपि सूर्योदयास्तनिर्णयमपेक्षत एवाऽऽतपदर्शनादिना, अन्यथा रात्रिभोजनदोषः, अन्धकारभवनेऽपि व्रीडया प्रदीपाकरणादिना त्रसादिहिंसानियमभङ्गमायामृषावादादयोऽधिकदोषा अपि, यतः-"न करेमित्ति भणित्ता तं चेव निसेवए पुणो पावं। पच्चक्खमुसावाई मायानिअडीपसंगो अ ॥ १ ॥ पावं काऊण सयं अप्पाणं सुद्धमेव वाहरई। दुगुणं करेइ पावं बीअं बालस्स मंदत्तं ॥२॥"

पृथिवीकायात्मकत्वात्त्याज्यं ?, सत्यं, किन्तु सर्वथा तत्त्यागे गृहस्थस्य न निर्वाहः, सचित्तं पुनस्तद्भोजने त्यजति, विवेकिनो हि भुञ्जाना यदि लवणं गृह्णन्ति तदा प्रासुकमेव नत्वितरत्, प्रासुकत्वं च तस्याग्न्यादिप्रबलशस्त्रयोगेनैव संभवति न त्वन्यथा, पृथिवीकायजीवानामसङ्ख्येयत्वेनात्यन्तसूक्ष्मत्वात्, तथा च पञ्चमाङ्गे एकोनविंशे शते तृतीयोद्देशके निर्दिष्टोऽयमर्थः—"वज्रमय्यां शिलायां स्वल्पपृथिवीकायस्य वज्रलोष्ठकेनैकविंशतिं वारान् पेषणे सन्त्येके केचन जीवा ये स्पृष्टा अपि नेति" १३, रजनीभोजनं बहुविधजीवसम्पातसम्भवेनैहिकपारलौकिकानेकदोषदुष्टत्वात्, यदभिहितं—"मेहं पिपीलिआओ हणांति वमणं च मच्छिआ कुणइ। जूआ जलोदरं तू कोलिअओ कोढरोगं च ॥ १ ॥ वालो सरस्स भंगं कंटो लग्गइ गलंमि दारुं च। तालुंमि विंधइ अली वंजणमज्झंमि भुज्जंतो ॥१॥" निशीथचूर्णावपि—"गिहकोकिलअवयवसंमिस्सेण भुत्तेण पोट्टे किल गिहकोइला संमुच्छन्ति।" एवमत्रान्तर्विषमिश्रसर्पादिलालामलसूत्रवीर्यपातादिना मृत्याद्यपि, तथा—"मालिंति महिअलं जामिणीसु रयणीअरा समंतोवि। छलंति य ते हु फुडं रयणीए भुञ्जमाणं तु ॥ १ ॥ जीवाण कुंथुमाईण घायणं भाणधोअणाईसु। एमाइ रयणिभोअणदोसे को साहिउं तरइ ? ॥ २ ॥ उलूककाकमार्जारगृध्रशम्बरशूकराः। अहिवृश्चिकगोधाश्च, जायन्ते रात्रिभोजनात् ॥३॥" इत्यादि, परेऽपि पठन्ति—"मृते स्वजनमात्रेऽपि, सूतकं जायते किल। अस्तंगते दिवानाथे, भोजनं क्रियते कथम् ? ॥१॥ रक्तीभवन्ति तोयानि, अन्नानि पिशितानि च। रात्रौ भोजनसक्तस्य, ग्रासे तन्मांसभक्षणम् ॥ २ ॥ नोदकमपि पातव्यं, रात्रावत्र युधिष्ठिर !। तपस्विना विशेषेण,

प्राणिक्रमेण क्षणात् । येनास्मिन्नपि पाटिते विघटिते विस्फोटिते त्रोटिते, निष्पिष्टे परिगालिते विदलिते निर्यात्यसौ वा न वा ॥ १ ॥" चतस्रो विकृतयो-मद्य १ मांस २ मधु ३ नवनीत ४ रूपास्तद्वर्णानेकजीवसंमूर्च्छनात्, तथा चाहुः-"मज्जे महुंमि मंसंमि, नवणीअंमि चउत्थए । उप्पज्जंति चयंति अ, तव्वण्णा तत्थ जंतुणो ॥ १ ॥" परेऽपि-"मद्ये मांसे मधुनि च, नवनीते तक्रतो बहिर्नीते । उत्पद्यन्ते विलीयन्ते, सुसूक्ष्मा जन्तुराशयः॥१॥ सप्तग्रामे च यत्पापमग्निना भस्मसात्कृते । तदेतज्जायते पापं, मधुबिन्दुप्रभक्षणात् ॥२॥" मद्यमांसे प्राग्व्याख्याते, मधु माक्षिकं १ कौन्तिकं २ भ्रामरं ३ चेति त्रिधा, नवनीतं चतुर्धा गो १ महिष्य २ जै ३ डका ४ सम्भवभेदात्, एवं ९, हिमं शुद्धासङ्ख्येयाप्कायरूपत्वात् १०, विषं मन्त्रोपहतवीर्यमप्युदरान्तर्वर्त्तिगण्डोलकादिजीवघातहेतुत्वान्मरणसमये महामोहोत्पादकत्वाच्च ११, करका असङ्ख्याप्कायिकत्वात्, नन्वेवमसङ्ख्याप्कायमयत्वात्पानीयस्याप्यभक्ष्यत्वं ?, सत्यं, परं पानीयेन विना निर्वाह एव न स्यात्, करकादीन् विना तु न कश्चिदनिर्वाहः तत एव निषिद्धा न पुनः पानीयं, तदपि सामग्र्यां श्रावकस्य प्रासुकमेवोचितं १२, सर्वाऽपि मृत्तिका उदरान्तर्दर्दुरादिपञ्चेन्द्रियप्राण्युत्पत्तिनिमित्तत्वादिना मरणाद्यनर्थकारित्वात्, सर्वग्रहणं खटिकादितद्भेदपरिहारार्थं, तद्भक्षणस्यामाश्रयादिदोषजनकत्वात्, मृत्तिकाग्रहणमुपलक्षणं तेन सुधाद्यपि वर्जनीयं, तद्भक्षणादन्त्रशाटाद्यनर्थसम्भवात्, दृश्यन्ते हि मृत्तिकादिभक्षणव्यसनिनामबलतापाण्डुरोगदेहदौर्बल्याजीर्णश्वासक्षयरोगादयो महानर्था मरणान्ताः, सचित्तमृत्तिकादिभक्षणे चासङ्ख्येयपृथिवीकायविराधनाद्यपि, एवं तर्हि लवणमप्यसङ्ख्य-

'मज्जंमी'ति ॥ मद्यं-मदिरा, तच्च द्वेधा-काष्ठोद्भवं पिष्टोद्भवं च, मद्यस्य च प्रथममुपन्यासो बहुदोषाश्रयत्वात् महाऽनर्थहेतुत्वाच्च, यदाह–"गुरुमोहकलहनिद्दापरिभवउवहासरोसमयहेऊ । मज्जं दुग्गइमूलं हिरिसिरिमइधम्मनासकरं ॥ १ ॥ श्रूयते किल शाम्बेन, मद्यादन्धंभविष्णुना । हतं नृपकुलं सर्वं, प्लोषिता च पुरी पितुः ॥ २ ॥" मांसं त्रेधा-जलचरस्थलचरखचरजन्तूद्भवभेदाच्चर्मरुधिरमांसभेदाद्वा, एतदप्यतिदुष्टं, यदाहुः–"पंचिंदिअवहभूअं मंसं दुग्गंधमसुइबीभत्थं । रक्खपरितुलिअभक्खगमामयजणयं कुगइमूलं ॥ १ ॥ आमासु अ पक्कासु अ विपच्चमाणासु मंसपेसीसु । सययं चिअ उववाओ भणिओ निगोअजीवाणं ॥ २ ॥" योगशास्त्रेऽपि–"सद्यःसंमूर्च्छितानन्तजन्तुसन्तानदूषितम् । नरकाध्वनि पाथेयं, कोऽश्नीयात् पिशितं सुधीः ? ॥ १ ॥" सद्यो-जन्तुविशसनकाल एव संमूर्च्छिता-उत्पन्ना अनन्ता निगोदरूपा ये जन्तवस्तेषां सन्तानः–पुनः पुनर्भवनं तेन दूषितमिति तद्वृत्तौ व्याख्या, सूत्रगाथायां चशब्दान्मध्वादिशेषाभक्ष्यद्रव्याणामनन्तकायानां च परिग्रहः, तत्राभक्ष्यद्रव्याणि द्वाविंशतिस्तथाहुः–"पंचुंबरि ५ चउ विगई ९ हिम १० विस ११ करगे अ १२ सव्वमट्टी अ १३। रयणीभोअणगं चिय १४ बहुबीअ १५ अणंत १६ संधाणं १७ ॥ १ ॥ घोलवडा १८ वायंगण १९ अमुणिअनामाणि फुल्लफलयाणि २०। तुच्छफलं २१ चलिअरसं २२ वज्जह दव्वाणि बावीसं ॥ २ ॥" व्याख्या–पञ्चोदुम्बरीवट १ पिप्पलो २ दुम्बर ३ प्लक्ष ४ काकोदुम्बरीफल ५ रूपाऽसौ मशकाकारसूक्ष्मबहुजीवनिचितत्वाद्वर्जनीया ५, लौकिका अपि पेठुः–"कोऽपि क्वापि कुतोऽपि कस्यचिदहो चेतस्यकस्माज्जनः, केनापि प्रविशत्युदुम्बरफल-

प्रत्येकमिश्रसचित्तादीनां प्रमाणं कार्यं, भणितं च–"निरवज्जाहारेणं १ निज्जीवेणं २ परित्तमीसेणं ३ । अत्ताणुसंधणपरा सुसावगा एरिसा हुंति ॥ १ ॥" एवमुत्सवादिविशेषं विना सफुम्भतकरणत्किङ्किणीकमणिसुवर्णखचितदुकूलरणन्नूपुरादिपरिधानमुकुटादिबन्धनशिरोवेष्टनाञ्चलोर्ध्वमुखन्यसनादिनाऽत्यन्तचेतोगृद्ध्युन्मादजनापवादादिजनकमत्युद्भटवेषवाहनालङ्कारादिकमपि श्रावको वर्जयेत्, यत उक्तम्–"अइरोसो अइतोसो अइहासो दुज्जणेहि संवासो । अइउब्भडो अ वेसो पंचवि गरुअंपि लहुअंति ॥ १ ॥" अतिमलिनातिस्थूलह्रस्वसच्छिद्रवस्त्रादिसामान्यवेषपरिधानेऽपि कुचेलत्वकार्पण्यादिना जनापवादोपहसनीयतादि स्यादतः स्ववित्तवयोऽवस्थानिवासस्थानकुलाद्यनुरूपं वेषं कुर्यात्, उचितवेषादावपि प्रमाणनैयत्यं कार्यम्, एवं दन्तकाष्ठाभ्यङ्गतैलोद्वर्त्तनमज्जनवस्त्रविलेपनाभरणपुष्पफलधूपासनशयनभवनादेस्तथौदनसूपस्नेहशाकपेयाखण्डखाद्याद्यशनपानखादिमस्वादिमादेस्त्यक्तुमशक्यस्य व्यक्त्या प्रमाणं कार्यं, शेषं च त्याज्यमानन्दादिसुश्रावकवत्, कर्मतोऽपि श्रावकेण मुख्यतो निरवद्यकर्मप्रवृत्तिमता भवितव्यं, तदशक्तावप्यत्यन्तसावद्यविवेकिजननिन्द्यमद्यविक्रयादिकर्म वर्जनीयं, शेषकर्मणामपि प्रमाणं करणीयं, यतः–"रंधणकंडणपीसणदलणं पयणं च एवमाईणं । निच्चपरिमाणकरणं अविरइबंधो जओ गुरुओ ॥ १ ॥" अत्र सूत्रकृद् गाथामाह—

मज्जंमि अ मंसंमि अ पुप्फे अ फले अ गंधमल्ले अ । उवभोगपरीभोगे बीअंमि गुणवए निंदे ॥ २० ॥

कोटीपूरणाद्यकृथाः–जघन्यतो दशगुणमृणं घातादि वा पुरः। द्वेषे तु शतसहस्रलक्षकोटिगुणाद्यपि ॥१॥ कुमुद्वत्याः
स्वगृहमहिषीप्रसूतपड्डुकयोः कोऽप्येतावपहृत्य याति तदा साध्विति प्राग् दुर्ध्यानाज्जातमात्रापत्यद्वयवियोगोऽजनि,
देयलभ्यनभोगीस्तु संनिहितसुरकृता, एवं मध्यमश्रेष्ठ्यात्मजयोः स्थानाद्यपि स्वामिनोक्तम्, इत्यर्हद्वाक्सुधास्वा-
दोद्भूतमहानन्देन स्वस्थानमागत्य श्रीजिनोदिते सम्यग्निवेदिते निर्विण्णाः पित्रादयः प्रपन्नाश्च प्रव्रज्यां, महा-
नन्दोऽपि तौ सोदरौ धर्मधनप्रदानादिना प्रमोदमेदुरौ विधाय समये च दीक्षामादाय माहेन्द्रे माहेन्द्रसमः
सुरोत्तमः समभूत्, ततश्च्युतश्च सेत्स्यति । इति दिग्विरतिव्रतं दिशां, बहुसङ्क्षेपविधेः प्रपद्य भोः । विधुरेऽपि
विधाय धीरतां, प्रतिपालय धनदत्तपुत्रवत् ॥ १ ॥

॥ इति षष्ठव्रते महानन्दनिदर्शनम् ॥

उक्तं षष्ठं व्रतमथ भोगोपभोगाभिधानं सप्तमं गुणव्रतं तु द्वितीयं, तच्चोपभोगपरिभोगव्रतमित्यप्युच्यते अर्थस्यै-
क्यात्, इदं द्विधा–भोगतः कर्मतश्च, तत्र भोगो द्विविधः–उपभोगपरिभोगभेदात्, यदेकवारमेवान्तर्वा भुज्यते
तस्याहारभक्षणार्हकुसुमादेर्भोगः, उपभोग उपशब्दस्य सकृदर्थत्वादन्तरर्थत्वाच्च, यच्च पौनःपुन्येन बहिर्वा भुज्यते
तस्य भवनाङ्गनादेर्भो(परिभो)गः परिशब्दस्यासकृदर्थत्वाद्बहिरर्थत्वाच्च, यदाह—"उवभोगे विगईओ तंबोलाहा-
रपुप्फफलमाई। परिभोगे वत्थसुवन्नमाइअं इत्थिगेहाइ ॥१॥" श्रावकेण तावदुत्सर्गतः प्रासुकैषणीयाहारभोजिना
भाव्यं, तस्मिन्नसति सचित्तपरिहारः कार्यः, तस्याप्यशक्तौ बहुसावद्यान्मद्यामिषानन्तकायादीन् वर्जयता

डिम्भार्यर्पणस्वगृहव्यापारणादिना सुधनः सुहृद्भस्त्वितस्ततो व्ययति, अविश्वासास्पदेन च तेन सुहृच्चित्तं भूयस्तरं दूयते मैत्रीभङ्गभिया तु न किञ्चित् प्रतिब्रूते, सुधनेन चैवमसद्व्ययेन विनाशितं तस्य द्रम्मशतं, एकेन च वणिक्प्रवेकेन सहव्यवहारादितस्ततो मिलितास्तस्य देया विंशतिर्द्रम्माः, सद्योऽनर्पणात्स्वल्पत्वादिना पुनरुत्तमर्णानामार्गणाच्च सुधनसन्निधौ स्थिताः, अन्येन च लभ्यधनप्रदानेऽधिकं द्रम्मदशकभ्रान्त्या दत्तं पश्चाज्ज्ञातं सुधनेन परं लोभान्न प्रत्यर्पितं—लोभः क्षोभकरः कस्य, न स्याद्धर्मवतोऽपि हि ? । यः सूक्ष्मसम्परायाख्यगुणस्थानेऽप्यवाप्यते ॥१॥ एतच्च शल्यत्रयं व्यवहारशुद्धिप्रसिद्धिमत्तया गुरोः पुरोऽपि सम्यग् नालोचितं—समर्थोऽप्यसमर्थोऽसौ, विविक्तोऽप्यविविक्तहृत् । स्वशक्त्या दुःस्थधर्मिष्ठोद्धारमारचयेन्न यः ॥ १ ॥ इति ध्यात्वा सुधनेनावमसमये सीदतः परमधार्मिकसाधर्मिकस्य दत्तं द्रम्मशतं तदुपजीवनेनासौ यावज्जीवमुवाह सुखनिर्वाहतां, समयदत्तं हि जलदजलवत्स्वल्पमप्यनल्पफलवत्, उक्तञ्च—"करचलुअपाणिएणवि अवसरदिन्नेण मुच्छिअं जिअइ । पच्छा मुआण सुंदरि ! घडसय दिन्नेण किं तेण ? ॥ १ ॥ " क्रमाक्ते समासायुष्काः सुधनो धनश्रीस्तत्सुहृत्तौ वणिजौ साधर्मिणश्च षडप्याराद्धश्राद्धधर्मेण सौधर्मे गताश्च्युताश्च धनदत्तकुसुद्रत्यौ तत्पुत्राश्च चत्वारो जज्ञिरे, प्राग् द्रम्मशतविनाशेनाद्यपुत्रात्पितुः सर्वस्वनाशाद्यासीत्, तेन च प्रागेकस्य श्राद्धस्य वाणिज्यविषयाद्यनुत्सार्यमात्सर्यतो व्यसनिकलङ्कप्रदानाद्व्यसनित्वं तं प्रत्येव विद्विष्टतया सद्यः किमयं न म्रियत इति दुर्ध्यानाच्चाल्पायुष्कं तस्याजनिष्ट, मध्यमात्मजयोः प्राग् देयमियदृणं जातं, प्राग्द्रम्मशतोपकृतेस्त्वं कोटा-

तदौषध्यनानयने यद्ययं शिशुर्विपत्स्यते तदा त्वां सकुटुम्बं सर्वस्वापहारदण्डपूर्वं जीवनिग्राहं निगृहीष्ये, सोऽप्यूचे-देव! सर्वस्वात्सर्वकुटुम्बात्प्राणेभ्योऽपि च प्रियतमोऽयं तनयः, तद्विपत्तावपि निरपेक्षतायां का नामान्यापेक्षा का नाम चैषा बिभीषिका तस्माद्यद्भवति तद्भवतु परं स्वीकृतव्रतं स्वल्पमपि कल्पान्ते नातिचरामि सर्वथा-द्रविणप्राणपुत्रादि, सुलभं हि भवे २। स्यादनन्तैरपि भवैर्जैनधर्मस्तु दुर्लभः ॥१॥ सर्वस्वप्राणपुत्रादेर्नाशे किमपि तद्भवे। दुःखं भवेष्वनन्तेषु, धर्मध्वंसे तु दुस्सहम् ॥२॥ एवं तात्त्विकसात्त्विकमुकुटायमाने तस्मिन् वदमाने धर्मैकाग्रतया आकृष्टिविद्ययेवाकृष्टायाः शासनदेव्या वाग् दिव्याऽऽविर्बभूव-भोः कुमार! सत्त्वैकसार! दर्शय सर्वेषां स्वधर्मदार्ढ्यमहिमानं निमानं सिञ्चस्व स्वकरामृतरसेनैनं बालं यथाऽसौ प्रोज्जीवति तत्कालं, ततो विस्मयाद्वयभाजने समग्रजने सिक्तोऽसौ कुमारेण स्वपाणिपावितनीरेण जातश्च तरसा सुधारसाभिषिक्त इव सुव्यक्तचेतनः प्रमुदितश्च प्रोचैः सर्वोऽपि जनः अजायन्त वर्द्धापनादिमहोत्सवाः प्रावर्त्तन्त सर्वतोऽपि कुमाराद्भुतप्रशंसारवाः-ऐकाग्र्यमाहात्म्यमहो!, महीयः किञ्चिदद्भुतम्। येनैवं धर्मनिर्वाहः, पुत्रप्रोज्जीवनाद्यपि ॥१॥ स्वल्पमात्रकृतेऽप्येके, त्यजन्ति तृणवद्व्रतम्। दृढव्रताः केचिदेवं, विकटे सङ्कटेऽप्यहो ॥ २ ॥ अपरेद्युः स्मृतप्राक्पुत्रादिवृत्तान्ततान्तस्वान्तकुमुद्वतीकान्तप्रेरितः स स्वगत्या गतवान् महाविदेहं प्रणतिपूर्वं पृष्टवांश्च जिनश्रेष्ठं श्रेष्ठ्यादिप्राग्भवसन्देहं, स्वाम्यप्यूचे-धन्यपुरे सुधनो नाम धनी धनश्रीर्गेहिनी धनावहश्च तस्य बालवयस्यः, तौ प्रीत्या सहोदराविव सहैव व्यवहरतः सुश्राद्धतया शुद्धव्यवहारतः, अन्तरा २ तु क्रयविक्रयादौ विदम्भद्द

योजन्यादिनियतिः ?, क्षितिगतिमेवाश्रित्य हिंसा क्रियते, किञ्च–वियति ऋजुतरगतिसम्भवेन शतयोजन्यपीयता न पूर्णा भवित्री, धरित्रीचलने हि मार्गाणां वक्रत्वादिना भूर्भूयस्येवाभिवर्द्धते, दृश्यते चैवमेव सर्वत्राविप्रतिपत्त्या, ईदृग्बालप्रोज्जीवनं च परमो धर्मः, धर्मकार्ये च तीर्थयात्रादिवत् सहस्रयोजनीगमनेऽपि गृहिणो न कश्चिद्दोषः प्रत्युतागण्यपुण्यपोषः, तद्वत्स ! बालवत्सलतामालम्बस्व मा विलम्ब स्वल्पमपि तदौषध्यानयनविधौ, विधौतकल्मषा महर्षयोऽपि जीवदयार्थमेव यतन्ते, तदत्र मुधा मौग्ध्यपरामर्शः को नाम विमर्शः ?, पुत्रेणाप्युक्तं–स्वाख्यातमदस्तातपादैः केवलं न केवलाऽत्र धर्मधीः किन्त्वतिमात्रस्वपुत्रमोहधीरेव मुख्यवृत्त्या, तेनैतत्कृत्ये स्वव्रतक्षितिः कथं न स्यात् ?, नियमश्च यथा गृहीतस्तथैव प्रमाणयितव्यः, तेन यावद्गमनेन भूमौ शतयोजनी स्यात्ततोऽधिकगमने नियमभङ्ग एव, नहि नभोगमनमपेक्ष्य प्राग्मया नियमः स्वीचक्रे, ततः कुपितेन पित्रोक्तम्—अहो केयमस्थाने सूक्ष्मेक्षिका ?, स्वपुत्रकृते हि जातु कश्चिदतिचारः स्यात्तदा पश्चात्प्रायश्चित्तेन सोऽपि शोध्यते, नहि सर्वथा निरतीचारता चारित्रिणामपि भवेत्, सर्वत्र हि लाभालाभादि विलोक्यं, पठन्त्यपि–"एगंतेण निसेहो जोगेसु न देसिओ विही वावि। दलिअं पप्प निसेहो हुज्ज विही वा जहा रोगे ॥ १ ॥" न हि कदाग्रहगुहान्तर्गतं धर्मरहस्यं, अहो कठोरहृदयता अहो बालहत्यायामपि निरपेक्षता अहो ! लोकापवादेऽप्यभीरुकता अहो निर्दयात्मकता, इत्यादि पित्रादिभिस्तत्स्वरूपमवगत्यागतैर्नृपमन्त्र्यादिभिश्च सर्वशक्त्योक्तोऽपि स यावन्न जहाति निजाग्रहं तावद्वादीदुद्यत्क्रोधकरालः क्ष्मापालः–भोः कदाग्रहैकद्रोष !

खला इव विद्याद्यतिशायिशक्तयः प्रायः। स्युर्दुर्नयप्रवृत्ताः प्रोच्चैः पेढालपुत्र इव ॥१॥ तस्य तु तादृग्विद्यालाभेऽपि सुसंवृतस्य संयतवत् अब्धेरिव नैवासीन्मर्यादातिक्रमः क्वापि, क्रमाज्जातस्तस्य पुरुषोत्तमस्य प्रद्युम्न इव पित्रनु-याथी पुत्रः सौभाग्याद्यतिशायी, अन्यस्मिन् दिने तस्मिन् नन्दने दुर्दैवादिष्टेन दुष्टेन फणिना दष्टे सर्वथा च तच्चैतन्ये नष्टे वैद्यादियत्नानां कृपणरत्नानामिव वैफल्ये च दृष्टे जाते च पित्रादीनां प्रकृष्टे हृदयार्त्तिकष्टे प्रत्युत्पन्नम-तिना धनदत्तश्रेष्ठिना चतुरशीतिचतुष्पथेषु पटहेनोद्घोषयामाहे-य एनं विषभृद्विषावेशान्निश्चेतनं स्तनन्धयं प्रोज्जीवयति तस्मै श्रेष्ठी स्वर्णकोटीमपि प्रदत्ते इति, तदाकर्ण्य वैदेशिकविप्र एकः सविवेकमभाषिष्ट श्रेष्ठिपुरः प्राप्तः-श्रेष्ठिन् ! इतो दशोत्तरयोजनशत्यां मम निवासस्थानं श्रीनिधानं नाम नगरं, तत्र मम गृहे गृहिणी-ज्ञाता देवतादेशप्राप्ता विषौषधी बहुशः स्पष्टदृष्टप्रत्ययाऽस्ति, मार्गे गमनभिया सा सह नानीता मया, यदि तां दिनोदयादर्वाक् कोऽपि कथमप्यानयति तदा तया नियतमयममृतेनेव जीवयत्येवेति, अथाचष्ट हृष्टःश्रेष्ठी-साधु रभो भूदेव ! यदेवमावेदितवान् भवान् अयं मे नन्दनः संक्रन्दन इवाचिन्त्यशक्तिः खगामिविद्ययाऽति-त्वरयाऽप्यानेष्यति तां, तदेहि स्वगृहिण्या हस्ताक्षराणि येन सा तामर्पयत्येतस्मै, ततो विस्मितमुदितो याव-द्विजः सज्जीस्यात्तल्लेखलेखनाय तावदुवाद महानन्दः सुकृतैककन्दः-तात ! शतयोजनमात्रादिग्व्रतोऽहं श्रितोऽपि पुत्रमोहं कथं नाम तामानयामि ततः स्थानात् ?, स्वीकृतनिर्वाहपूर्वमेव सर्व साधितं साधिष्ठतां दधाती-त्युपायान्तरं किञ्चिद्विचिन्तयत तातपादाः, ताताेऽप्यूचे-वत्स ! वियद्गमने जीवविराधनाद्यभावात् का हन्त ! शत-

रोपक्रियादिभिः सर्वेभ्योऽपि श्रेष्ठी श्रेष्ठीभावमावहत्, अहो सुपुत्रप्राप्तिफलं तद्भवेऽपि निस्तुलम्, अन्येद्यु-र्विद्यासाधकेन केनचित्सुप्रकृतिना कृतषण्मास्यवधिपूर्वसेवादिविधिना नभोगामिनीविद्यासिद्धिदिनेऽनुत्तरभाग्यवन्नरतयोत्तरसाधकत्वार्थमभ्यर्थितः प्रतिपन्नवान् बहुक्लेशमपि दाक्षिण्यपरोपकारसारस्तद्वचनं महानन्दकुमारः, यतः—"क्षेत्रं रक्षति चञ्चा सौधं लोलत्पटी कणान् रक्षा। दन्तात्ततृणं प्राणान्नरेण किं निरुपकारेण? ॥ १ ॥" ततः कृष्णचतुर्दशीनिशीथिन्यां स्थितोऽसावुत्तरसाधकतया, सोऽपि भाग्यनिधितत्संनिधिबलाद्यथाविधि सर्वथाऽप्यनाबाधया साधयामास कैलास इव निष्प्रकम्पस्तां विद्यां, सिद्धिसमये साक्षाद्भूयाख्यद्विद्याधिदेवी—अहो महोत्साहतया साधिताऽहं त्वया सिद्धाऽस्मि परं परकार्यसाधकायास्मै उत्तरसाधकाय तद्देहि देहिनामाधाराय मां कुमारीमिवास्मै कुमाराय, इयतैव च स्वं कृतार्थं मन्येथाः, नहि कर्मणोऽधिकं विधात्राऽपि विधातुं शक्यं, यतः—"नमस्यामो देवान्ननु हतविधेस्तेऽपि वशगाः, विधिर्वन्द्यः सोऽपि प्रतिनियतकर्मैकफलदः। फलं कर्मायत्तं यदि किममरैः किञ्च विधिना, नमस्तत्कर्मभ्यो विधिरपि न येभ्यः प्रभवति॥१॥" इत्युक्त्वा सद्यः सा विद्युद्वत्तिरोऽभवत्, सोऽपि निपुणात्मा कुमाराय तां विद्यां तदैव देवतोक्तिपूर्वं दत्त्वा तत्त्वार्थवित्तन्निमित्तमेव विरक्तचित्तस्तपस्यामादत्त, कुमारश्च जातस्तया विद्यया विद्याधर इव वियद्गामी, अहो? भाग्याभ्यधिकत्वं, यतः—"व्यवसायं करोत्यन्यः, फलमन्येन भुज्यते। पर्याप्तं व्यवसायेन, प्रमाणं विधिरेव नः ॥ १ ॥" स च जग्राह विहरत्तीर्थङ्करशाश्वततीर्थनमस्क्रियापरोपक्रियादि तद्विद्याफलं सर्वकालम्—उच्छृङ्खलाः

स्पष्टदृष्टभद्रजातिश्वेतदन्तिस्ववेश्मप्रवेशस्वप्नेन तु किञ्चित्कृतानन्दसन्दर्भः पुनर्बभूव गर्भः
प्रकृष्टमनिष्टं, स्पष्टदृष्टभद्रजातिश्वेतदन्तिस्ववेश्मप्रवेशस्वप्नेन तु किञ्चित्कृतानन्दसन्दर्भः सातिशयस्तनयः सुखप्रादिना, भृशं भार्यया वार्य-
प्रसूतश्च प्रभूतग्रहोच्चतादिगुणमये निशीथसमये समग्रगुणैः सातिशयस्तनयः लभ्यमलात्वा किमेनं त्यजसि? इति शुश्राव च
माणोऽप्यविश्रब्धः श्रेष्ठी मुक्तवांस्तमपि तृतीयोद्याने, भो! लभ्यमलात्वा किमेनं त्यजसि? इति शुश्राव च
श्रवःसुधाकिरं नभोगिरं, हृष्टः पृष्टवांश्च कियन्मयाऽस्माल्लभ्यं?, तयोक्तं–दीनारकोटाकोटीः, ततः प्रोच्चैः प्रीतः
सन् पश्चादानीय चिन्तारत्नमिवार्पयामास जन्मापूर्वमुद्धृत्यै कुमुद्वत्यै, स्थापयामास च महाजन्ममहादिपूर्वं महा-
नन्दकृत्त्वेन तस्य महानन्द इति नाम, यस्तदानीमदन्तोऽपि, सर्वतो गुणवृद्धिभाक् । सदन्तोऽपि क्रमात्
ख्यातोऽनन्त एव श्रियाद्भुतम् ॥ १ ॥ स एवं वर्द्धमानः क्रमात्कुरुते स कलावानिव कलाग्रहणं स्वीकुरुते स
च सद्गुरुसकाशे शैशवेऽपि सम्यक्त्वमूलस्थितिं देशविरतिं, तस्यां च षष्ठव्रते नियम्यते स तेन वासस्थाना-
त्सर्वतस्तिर्यग्योजनशतं, स्वीकार्यते स च यौवने जनकेन यज्ञदत्तेभ्यनन्दनीं सान्वयनाम्नीं कलावतीं नाम
कनीं, तस्य चोत्पत्तेरारभ्य धनदत्तमहेभ्यगृहे सर्वतः प्रवर्द्धते स धनं प्रावृड्धुनीप्रवाह इव, प्रतिदिनं स्वयं
वाणिज्यार्थं प्रथितप्रोत्साहे तु तनूरुहेण कल्परुहेणेव वितीर्णा स्वल्पदिनैरेव दीनारकोटीकोट्यप्यजनिष्ट श्रेष्ठिगृहे,
स्वनिर्वाहेप्यनुत्साहा जन्मनाऽपि धनार्जनात् । केचित् केचित् पुनर्द्रव्यमेवमप्यर्जयन्त्यहो? ॥ १ ॥ दातव्यलभ्य-
सम्बन्धो, वज्रबन्धोपमो ध्रुवम् । धनश्रेष्ठीह दृष्टान्तस्त्रिकुपुत्रसुपुत्रयुग् ॥ २ ॥ ततस्तत्पुत्रवचनान्निश्चिन्तश्चतु-
र्मुखादिचैत्यहिरण्मयाद्यर्चाविधापनादिना सप्तक्षेत्रीसप्तस्वर्णकोटीव्ययात्रिसन्ध्यजिनार्चादिसम्यक्श्राद्धक्रियाप-

ष्टदत्तं कांस्यकच्चोलमुक्तपक्वबदरीफलं सकांस्यकच्चोलं केनाप्यात्तमिति स्वप्नः, ज्ञापितश्च पत्युः, पत्याऽपि स्वमत्या बाह्यसारसुतोत्पत्तिकियद्द्रव्यान्विततत्परगृहस्थित्याद्यनुमीयते स्म, धीयते स्म चित्ते–अहं तथा विधास्ये यथा स मदीयं किञ्चिन्नादास्यत इति, क्रमाज्जातः सुरूपः सुतो, गृहीतश्च जातमात्र एव श्रेष्ठिना प्राग्वचनबलात्, मुक्तश्च गत्वा जीर्णोद्याने निर्जीव इव श्मशानस्थाने, अहो निर्मोहता कुपुत्रकदर्थनोद्वेगिनः श्रेष्ठिनः, यावच्च मुक्त्वा मुदितः पश्चाद्वलते तावदकालिकाब्दगर्जिरिवाविर्बभूव दिव्यवाग् वियन्मण्डले–हे श्रेष्ठिन्! दातव्यं दत्त्वा व्रजेति, श्रेष्ठ्यप्याभाषिष्ट भयविस्मयाविष्टः–कियन्मयाऽस्मै देयं?, सा प्राह–द्रम्मसहस्रमेकं, ततस्तेन भूरिभयोद्भ्रान्तेन स्वभवनादानीय मुक्तं तत्कालमेव बालकान्तिके द्रम्मसहस्रपदे दीनारसहस्रम्, इयताऽप्येतद्दक्षकर्णग्रहादिव छुट्यते तदा साध्विति विमृश्य, गृहं गतश्च श्रेष्ठी, जातमात्रपुत्रविरहबहार्दिताऽपि दयिता श्रेष्ठिप्रतापादपत्यप्रसववार्त्तामपि पुंश्चलीवन्न प्रकाशयामास, सद्रव्यं तं च बालकं मालाकारः प्रातर्दृष्ट्वा हृष्टात्मा निष्पुत्रः पुत्रतया स्वप्रियायै समर्पयामास, साऽपि तं स्वपुत्रपालं पालयामास, 'यन्नेष्यते मनुष्यैस्तत्प्रायः प्राप्यते प्रचुरमचिरात्। यत्त्विष्यते तदीषन्न क्वचिदपि वैपरीत्यमहो? ॥ १ ॥" इत्यचिरात्कुमुद्वत्याः प्राग्वदिष्टदत्तं काञ्चनकच्चोलन्यस्तं सरङ्गनारङ्गफलं तद्युतं केनाप्यात्तमिति स्वप्नसूचितो रूपाद्यैरद्वितीयो द्वितीयोऽपि तनयोऽजनि, सोऽपि श्रेष्ठिना तथैव मुक्तः स्थानपरावर्त्तधिया द्वितीयारामे, तत्र गगनगिरा द्रम्मदशसहस्री मुक्ता, सोऽपि महेभ्यश्रेष्ठापतिना तथैवात्तः पाल्यते स्म, अथ तथैव पुनः पुनः पुत्रप्रसवादिक्लेशोद्वेगवत्याः कुमुद्वत्या अपि

महत्त्वनृपप्रसत्तिः स्वं पुनर्नवजीवितं स मन्यते स्म, तत्पत्न्याः पुन पुत्रो नाजनिष्ट तस्यानिष्टतरत्वादिव, ततः
सपत्नीपुत्रोऽप्येतद्धनधनिकतया ममाप्याधारः स्यादिति भृशं पुत्रार्त्याक्रान्तया कान्तया हितजननैः स्वजनै-
श्चान्यकन्यापरिणयार्थं सोऽत्यर्थं प्रेरितोऽपि कुपुत्रोत्पत्त्यारेकया न चकार निर्विकार इव सर्वथा. तत्र मनोऽपि,
यतः–“दुर्जनदूषितमनसां पुंसां स्वजनेऽपि नास्ति विश्वासः । बालः पयसा दग्धो दध्यपि फूत्कृत्य खलु
पिबति ॥ १ ॥” सोऽन्यदाऽनुरूपापरवरस्याप्राप्त्या स्वप्रौढकन्यास्वीकारायेश्वरदत्तश्रेष्ठिना प्रज्ञाशालिना प्रज्ञा-
प्यते स्मेत्थं–श्रेष्ठिन् ! किमेवं विश्वस्पृहणीयप्राच्यपुण्यप्रापणीयपुत्ररत्नोत्पत्तेरुत्पातोत्पत्तेरिव वृथा बिभेषि,
नहि जाताः सर्वे कुजाता एव न विटपिनः सर्वे कण्टकिन एव नहि जलाश्रयाः सर्वे पङ्किलताश्रया एव, न च
सकृदजीर्णमात्रेण भोजनं सकृन्मार्गे धाटीपातेन गमनं वा सर्वथा कश्चिज्जह्यात्, तस्माद्दुर्निग्रहमेनमाग्रहमप-
हाय स्वीकुरुष्व सल्लक्षणवतीं कुमुद्वतीं नाम मे कनीं, कुमुद्वत्याश्च पतित्वे तवेन्दोरिव महान् कश्चिदभ्युदयः
सम्भवीति तल्लक्षणैर्निर्णिन्ये मयेति मा विमर्शादि कार्षीरेतद्विषये, अथामूढगूढचित्तो धनदत्तोऽप्याख्यत्–आयु-
ष्मन्! युष्मद्दाक्षिण्यादेरदोऽपि क्रियते यदि त्वपत्यवार्त्तामपि सा न विदध्यात्, दैवाज्जातेऽप्यपत्ये निन्दुरिव
सर्वथा निर्मोहतामेव च दध्यादिति, तद्गुणावर्जितेन तेन तु तथाऽपि सा प्रतिपाद्य प्रत्यपाद्यत तस्मै गिरीन्द्रेण गिरी-
शायेव गौरी,–मार्ग्यमाणाऽपि सोत्कण्ठं, कन्याऽन्यैः प्राप्यतेऽपि न। तस्यैवमपि दीयेत, नाल्पपुण्यफलं ह्यदः॥१॥
तेनाप्युदूढा प्रौढोत्सवेन सा, क्रमाज्जातं च स्त्रीणां प्रीतिनिधानं तस्या आधानं श्रेष्ठिनोऽनिष्टमपि, दृष्टश्च तयाऽभी-

द्विविधदौर्गत्यदूतं द्यूतं व्यसनार्णवं विन्द्याः ॥ १६ ॥" इत्यादिपित्रादिभिर्बहूपदिष्टोऽपि प्राग्दुर्दैवादिष्टो न कथञ्चिन्मुमोच दुर्मोचतया स तद्व्यसनं तद्धन इव स्वधनं, क्रमाद्विटादिकुसङ्गतेर्जायते स वेश्याव्यसन्यपि, अहह प्रपतयालुता समन्तोर्जन्तोः-वित्तघृताहुतिपूर्त्त्या व्यसनकृशानुः प्रवर्द्धते ह्यधिकम् । दारिद्र्यवारियोगादुपशाम्यति तत्क्षणेन पुनः ॥१॥ इति जानन्नपि जनको मा भूत्तनयस्य वैमनस्यमिति । प्रादात्त वित्तमीप्सितमहर्निशं मोहमौढ्यमहो ? ॥ २ ॥ एवं व्यसनासक्तेन सुतेन ग्रीष्मादित्येन सरोनीरवत्कोटिधनं निःशेषमपि शोष्यते स्म स्वल्पैरेव दिवसैः, यतः-"सेवा सुखानां व्यसनं धनानां, याञ्चा गुणानां कुनृपः प्रजानाम् । प्रनष्टशीलश्च सुतः कुलानां, मूलावपाती कठिनः कुठारः ॥ १ ॥" ततोऽसौ स्वगृहे धनाप्राप्त्या दुर्दैवाविष्टः प्रविष्टश्चौर्याय कस्यचिन्महेभ्यस्य गृहे दष्टश्च दुष्टफणीन्द्रेण तथा यथा तदकृत्यप्रहीणैरिव प्राणैस्तदैव त्यज्यते स्म,-द्यूतादिव्यसनवशाच्चौर्यं चौर्याच्च जीवनाशोऽपि । स्यादत्र परत्र पुनर्दुर्गतिदुःखाद्यनन्तमपि ॥ १ ॥ प्रातर्ज्ञातश्च सर्वैः श्रेष्ठिपुत्रोऽयमिति तज्ज्ञात्वा राज्ञा महाऽपराधीव ध्रियते स्म धनदत्तश्रेष्ठी निगडितश्च सर्वाङ्गनिगडैरतिनिविडैः, अहह मनोरथसहस्रैः संभावितस्य सुतस्य दुर्विलसितं स्वपरयोरप्यहितं, यद्वा-"पुत्रमित्रवणिक्पुत्रभ्रातृजामातृसेवकाः । पत्नीसपत्नीयानारिस्नुषाशिष्याश्च प्रागृणात् ॥१॥ अथ कथमपि नृपतेः सम्यक्पुत्रादिस्वरूपं विज्ञप्य मोच्यते स्म महाजनेन धनदत्तश्रेष्ठी, ततःप्रभृति प्रोद्भूतदौःस्थ्यापमानाद्यापत्तिस्तादृक्पुत्रदुश्चरित्रवित्रस्तचित्तत्वेनानिष्टतरापत्योत्पत्तिः प्राक्तनपुण्यवाणिज्यनैपुण्यादिना प्राग्वत्पुनरुपार्जितसम्पत्तिः सञ्जाततत्सहचरजन-

लिंगभासुरअयगोलयसन्निहो इमो निच्चं । अविरयपावो जीवो दहइ समंता समत्थ जिए ॥ १ ॥ जइवि अ न जाइ सव्वत्थ कोइ देहेण माणवो एत्थ । अविरइअन्नयबंधो तहावि निच्चो भवे तस्स ॥ २ ॥" इत्येकोनविंशतिगाथार्थः ॥ १९ ॥ अत्रेदं महानन्दकुमारोदाहरणम्-

समस्ति समस्तवस्तुविस्तारैरमरावतीमपि पराभवन्ती श्रीमदवन्ती नाम नगरी-सद्वर्ण्यवर्णसुषमा हृद्या पद्मालिशालिता चान्तः । विविधार्थसार्थपूर्णा या पूश्चम्पूरिव विरेजे ॥ १ ॥ तत्र त्रिजगज्जैत्रविक्रमो विक्रमो नाम नृपः,-यस्य सत्त्वमुदारत्वमुपकारित्वमुच्चकैः । भूर्भुवः स्वस्त्रयीसारमिवोद्धृत्य विधिर्व्यधात् ॥ १ ॥ तस्यां च कोटिवित्तो धनदत्तो नाम जैनः श्रेष्ठी, तस्यौदार्यपद्मपद्मायमानपाणिपद्मा पद्मावती नाम्न प्रिया, तयोर्निष्पुत्रतया भृशार्त्तयोः कृतकुलदेवताद्युपयाचितशतयोर्दैवादेकः पुत्रोऽजायत जयकुमाराह्वयः सौभाग्यश्रिया सातिशयः, तस्य गर्भाधानजन्मरक्षाविधानचन्द्रार्कप्रेक्षणषष्ठीजागरणनामस्थापनदेवगुरुवन्दनान्नास्वादनमुण्डनदन्तोद्गमनकटीसूत्रन्यसनरिङ्खणभाषणचङ्क्रमणचूडाकरणवस्त्राभरणपरिधानवर्षग्रन्थिबन्धनकलाग्रहणधर्मविधिशिक्षणमहेभ्यसुकन्याविवाहनवाणिज्यविधापनप्रभृत्यशेषकृत्यमहोत्सवेषु महोत्साहेन पित्रा महीयानेव धनव्ययो व्यधायि-रागपदे प्रेमपदे लोभपदेऽहङ्कृतेः पदे स्वपदे । प्रीतिपदे कीर्त्तिपदे नहि कैर्द्रव्यव्ययः क्रियते ? ॥ १ ॥ पुत्रस्तु सुप्रातिवेश्मसुसाङ्गत्यसुशिक्षादियोगाद्बालः सन् बालेन्दुरिव निष्कलङ्कोऽपि यौवनकलावृद्धिमान् कलावानिव कलङ्क्यते स्म द्यूतव्यसनकलङ्केन "निन्द्यं मद्यादेरप्यन्त्यजवर्ज्यं गुणापहृतिहेतुम् ।

उक्तानि पञ्चाणुव्रतानि, तानि च श्राद्धधर्मद्रुमस्य मूलकल्पत्वान्मूलगुणा उच्यन्ते, तदुपचयकारीणि दिग्व्रतादीनि तु सप्तापि शाखाप्रशाखाकल्पत्वादुत्तरगुणाः, तत्र त्रयाणां गुणव्रतानामाद्यस्य मूलतस्तु षष्ठस्य दिग्विरतिव्रतस्यातीचारनिन्दनार्थमाह—

**गमणस्स य परिमाणे दिसासु उड्ढं अहे अ तिरिए य । वुड्ढी सइअन्तरद्धा पढमंमि गुणव्वए निंदे ॥१९॥**

'गमणे'ति ॥ 'गमनस्य परिमाणे' गतेरियत्ताकरणे चशब्दाद्यदतिक्रान्तं, क्व विषये ?–दिक्षु, एतदेव विशेषतः प्राह–'उड्ढं'ति ऊर्ध्वं गिरिशृङ्गादेर्योजनद्वयादिना गृहीतप्रमाणस्यानाभोगादिनाऽधिकगमनमूर्ध्वदिक्प्रमाणातिक्रमणरूपः प्रथमोऽतिचारः १, एवमधस्तिर्यग्दिशोरप्यतिचारद्वयं वाच्यम्, अत्रावश्यकचूर्ण्युक्तो विधिरयम्–'ऊर्ध्वं' स्वीकृतप्रमाणादुपरि वृक्षे गिरिशिखरे वा वानरविहङ्गमादिर्वस्त्राभरणादि गृहीत्वा याति तत्र न कल्पते गन्तुं, यदि तत्तस्मात्पतितमन्येनानीतं वा तदा कल्पते ग्रहीतुम्, एतच्चाष्टापदसंमेतार्बुदोज्जयन्तचित्रकूटाञ्जनमन्दरादौ संभवति, एवमधोदिशि भूमिगृहरसकूपविवरादौ तिर्यग्दिशि च पूर्वादिचतुर्दिग्रूपायां वाच्य"मिति, यो विवक्षितक्षेत्रादधिकगमनं न करोमि न च कारयामीति नियमवान् स विवक्षितक्षेत्रात्परतः स्वयं गमनतः परेण नयनानयनाभ्यां च दिक्प्रमाणातिक्रमं परिहरति, तदन्यस्य तु तथाविधप्रत्याख्यानाभावात्परेण नयनानयनयोर्न दोष इत्युक्तं योगशास्त्रवृत्तौ ३, 'वुड्ढि'त्ति क्षेत्रवृद्धिः, अत्राग्रे च

नाप्यलं स्वव्रतलोपिना ॥ ५५ ॥ सुभोज्येनापि किं तेन, सुभोग्येनापि तेन किम्?। भोक्तुर्भुक्तेन येन स्यादस-
माधानसम्भवः? ॥५६॥ तदेव! देवनिर्माल्यमिव नैवाहमाद्रिये। कोशाध्यक्षत्वमध्यक्षं, कोशमांहससंहतेः॥५७॥
राज्ञामाज्ञाप्रधानत्वादथान्तः कोपभृन्नृपः। अवादीदनवद्येऽस्मिन्, दोषः सत्कर्मणीव कः? ॥ ५८ ॥ विश्वाधारस्य
मद्भाण्डागारस्य परिरक्षणे। पुण्यं प्रत्युत तत्तास्मिन्, को नाम नियमः सताम्? ॥ ५९ ॥ गृहाण श्रीगृहिकतां,
तद्विहाय कदाग्रहम्। प्रसह्यापि प्रदाताऽस्मि, तद्विमर्शो वृथाऽत्र कः? ॥ ६० ॥ श्रुत्वेति तात्त्विकोत्तंसः, सोऽ-
न्तश्चित्तमचिन्तयत्। धिक् पराधीनतादग्धान्, मुग्धान् संसारवासिनः ॥ ६१ ॥ प्रव्रजामि पुरा चेत्तत्कु-
तस्त्येयं विडम्बना। मुनीन्द्रा ह्यवनीन्द्रादेर्न बिभ्यत्याश्रियोगतः ॥ ६२ ॥ किं करोम्यथ सद्योऽप्याप्युचितं चिन्त-
येऽथवा। इत्यालोच्य च लोचं च, स चक्रे पाञ्चमौष्टिकम् ॥ ६३ ॥ देवतादत्तवेषश्च, दीक्षामादत्त सत्तमः।
राज्ञोऽग्र एव नियमस्याहो निर्वाहसाहसम् ॥ ६४ ॥ प्रणम्याथ क्षमेशेन, -क्षमीशः क्षमितः क्रमात्। चिरमा-
राध्यमाराध्य, सिद्धः प्राक् सिद्धकेवलः ॥ ६५ ॥ पञ्चमव्रतविधौ धनाह्वयश्रेष्ठिनश्चरितमित्यवेत्य भोः!। क्षोभ-
कृत् त्रिजगतोऽपि विस्फुरन्, लोभवारिनिधिरार्य! वार्यताम् ॥ ६६ ॥

॥ इति पञ्चमाणुव्रते धनश्रेष्ठिकथा ॥

॥ इति श्रीतपागच्छनायकपरमगुरुश्रीसोमसुन्दरसूरिशिष्यश्रीभुवनसुन्दरसूरिविनेयोपाध्यायश्रीरत्नशेखरगणि-
विरचितायां श्राद्धप्रतिक्रमणसूत्रवृत्तावणुव्रतपञ्चकाधिकारो द्वितीयः ॥ ग्रन्थाग्रम् ॥ ३५६१ ॥

ज्ञानिवद्विज्ञदैवज्ञशकुनज्ञसदैवतैः । अन्यदाऽवादि संवादिवादिभिर्नृपपर्षदि ॥ ४० ॥ देव ! भाव्यत्र दुर्भिक्षं, ध्रुवं द्वादशवार्षिकम् । येन कल्पान्तकल्पेनाल्पे जीविष्यन्ति जन्तवः ॥ ४१ ॥ ततः समग्रा अव्यग्राः, समग्रहीषुरन्वहम् । अगण्यधान्यस्नेहादि, वारिवारिधिवज्जनाः ॥ ४२ ॥ स्वपरैः प्रेरितोऽप्युच्चैर्धनो धान्यादि नाधिकम् । समग्रहीददीनात्मा, स्वाभिग्रहदृढाग्रही ॥ ४३ ॥ क्रमेण जातेऽप्यवमेऽन्यान्यधान्यक्रयेण सः । स्वाभिग्रहं कुटुम्बं च, सत्त्ववान्निरवाहयत् ॥ ४४ ॥ स्तोकादपि स्तोकतरं, दद्यादिति तदाऽप्यदात् । दीनादिभ्यः सदाऽन्नादि, स दानादिस्फुरद्रतिः ॥ ४५ ॥ दिने २ धान्यमूल्ये, चटत्यम्बुधिपूरवत् । दृढाशयस्यानुशयस्तस्य नासीन्निजव्रते ॥ ४६ ॥ रैलक्षमूल्या सामान्यधान्यस्थाल्यप्यभूत्क्रमात् । महार्घता हि दुष्प्रापतया वस्तुतया न तु ॥ ४७ ॥ ततो महार्घमप्यत्र, यदि सस्यं न लप्स्यते । तदा किं कृत्यमित्याधात्, स सचेताः सचिन्तताम् ॥४८॥ तदैव तद्दैववशात्पक्षिणः कस्यचिन्मुखात् । देवदत्तेव तस्याग्रे, कृष्णचित्रलताऽपतत् ॥ ४९ ॥ उपलक्ष्य लब्धलक्षस्तामादाय मुदाऽक्षिपत् । खण्डानि तस्याः सस्यादौ, बीजानीवाक्षयश्रियः ॥ ५० ॥ अभवत्तत्प्रभावेण, सस्यादेरक्षयात्मता । व्यापारणेऽप्यहोरात्रमुच्चैश्चक्रिनिधिस्ववत् ॥ ५१ ॥ सत्यङ्कारैः पुण्यकीर्त्योः, सत्रागारैस्ततस्त्वसौ । भूम्ना भीष्मेऽपि दुर्भिक्षे, कलौ कल्पद्रुवद् व्यभात् ॥५२॥ सन्तोषव्रतपोषस्य, महाफलमिहाप्यहो!। स्वनिर्वाहेऽपि सन्देही, सर्वान्निर्वाहयत्ययम् ॥ ५३ ॥ निःस्पृहत्वादिनाऽन्येद्युस्तुष्टस्तं शिष्टवान्नृपः । विश्वास्योऽसीत्युच्यसे भो, भव श्रीगृहिको मम ॥ ५४ ॥ स व्याजहार व्यापारस्वीकारनियमोऽस्ति मे । तदनेन प्रसादे-

वित्तस्य ते स्थिराः । कपर्दमात्राद्द्रव्यानर्पणान्नाधिकं धनम् ॥२४॥ यत्तस्याप्यर्पणे ते धीरासीत्तद्बहु जायते । न तु
तिष्ठति तस्तोव्यामिवाम्भोऽभ्यधिकं धनम् ॥२५॥ तत्सन्तोषं कुरुष्वेति, श्रुत्वाऽऽलोच्य तदैव तत् । दत्ते स्म देयं
देवस्य, स सहस्रगुणाधिकम् ॥ २६ ॥ न्ययंसीन्नवनवतिलक्षटङ्कांश्च दक्षधीः । गृहादीन्यष्ट पण्यानि, आरान-
ष्ट हयादिकम् ॥ २७ ॥ नाश्चिरष्टौ किंकरानप्यष्टौ स्नेहचतुर्घटीम् । विशेषदोपाधिक्यात्तु, धान्यं द्वावेव मूढकौ
॥ २८ ॥ युग्मम् ॥ शेषं तत्याज निश्शेषं, नियोगनृपतायपि । इत्युपात्तपञ्चमाणुव्रतं सम्प्रत्यपालयत् ॥ २९ ॥
ततः श्रीलीलयाऽप्यस्यावर्द्धतोच्चैः स्थिराऽप्यभूत् । श्रीप्राप्तिवृद्धिस्थैर्यादि, धर्मादेव हि देहिनाम् ॥ ३० ॥
न्यधत्त स च तां धर्मेऽभिगृहीताधिकाधिकाम् । मुख्यं फलमिदं लक्ष्म्याः, शेषं खल्वानुषङ्गिकम् ॥ ३१ ॥ नेदि-
ष्ठनद्या अन्येद्युस्तीरे स्वर्णमणीनिधीः । परीक्षितं तु तं साक्षाद्भूतं साक्षाचकार सः ॥ ३२ ॥ तन्नैककोटीर्नादातु-
मप्यैच्छत्स दृढव्रतः । गृहिणोऽपि स्पृहारोधे, धनं लेष्टुमिवेरिव ॥३३॥ स्वल्पज्ञसये पत्न्याः, पुरस्तेनोदितं निशि ।
निधिस्थानादि शुश्राव, चौरश्चौर्यार्थमागतः ॥ ३४ ॥ हृष्टश्च लातुं तत्रैष, प्राप्तः प्रैक्षत तं भृतम् । प्रोच्छलद्वृ-
श्चिकाङ्गारैर्दुर्दैवानां स्थितिर्हसौ ॥ ३५ ॥ वञ्चितोऽस्म्यमुनेत्युच्चै, रुष्टोऽसौ लेष्टुकैस्ततः । आक्रम्य वृश्चिकान्मूर्धो-
द्धृत्य तं तद्गृहेऽभ्यगात् ॥ ३६ ॥ वृश्चिकैः सकुटुम्बोऽसौ, भक्ष्यतामितिधीः क्रुधा । खडक्किकोपरिष्टात्तमन्त-
स्तद्वेश्म सोऽक्षिपत् ॥ ३७ ॥ श्रेष्ठिभाग्यात्तु ते सर्वे, सौवर्णमणयोऽङ्गणे । खटत्खटत्कृतः पेतुर्दिव्यवृष्टाविव
स्फुटम् ॥ ३८ ॥ सन्तोषलुकृताकृष्टं, स तद्धनमतद्धनः । न्ययुङ्क्त युक्तं चैत्यादावत्युच्चैः पदसस्पृहः ॥ ३९ ॥

भेन विक्रीतः, सेहे दुःसहवेदनाः ॥ ८ ॥ यतः-"पोसित्तु माणुसाइं सव्वंगं तच्छिऊण गालंति । तद्देहाओ रुहिरं कुंडा उ भरंति तो रुद्दा ॥९॥ तं च रुहिरं जवंती जायंमि पडंति तत्थ अह किमिणो । परिकम्मिएसु तेसुं किमिरागो जायए रंगो ॥ १० ॥ तंमि अ रयंति वत्थे दढरागो होइ जेण सो अहिअं । दड्ढंमिवि वत्थंमी जायइ छारोवि से रत्तो ॥ ११ ॥ पोसंति माणुसाइं पुणोवि गालंति ताण पुण रुहिरं । एवं निद्दयचित्ता कुणंति किमिरायलोभेणं ॥१२॥" एवं नारकवद्दुःखं, सेहे द्वादशवत्सरीम् । स चान्यदाऽग्राहि भक्ष्यभ्रमाद्भारण्डपक्षिणा ॥१३॥ व्योम्नि च व्रजतस्तस्य, भारण्डोऽभ्याययौ परः । भक्ष्यार्थमुभयोर्युद्धे, पपातोर्वीतले वणिक् ॥१४॥ दुर्मरत्वान्मृतो नैव, दैवतस्तु भ्रमन् भ्रमन् । नृभवो भव्यवल्लेभे, कथञ्चिन्नगरं निजम् ॥१५॥ दुःखाकृद्वृत्तमुक्त्वाऽतिदुःखलीनः स दीनगीः । पृच्छन् श्रेयः श्रियां प्रोचे, सूनुना न्यायसानुना ॥१६॥ तात ! वित्तं दैवदत्तं, व्ययेऽपि स्वेच्छया मया । न्यूनं नाजनि वाप्यस्वुवत्तात्किं खिद्यते मुधा ? ॥१७॥ अलं कृत्वाऽधिकं लोभं, कृतक्षोभं सतामपि । एतद्धनं तद्धनतां, हित्वा व्ययय सर्वतः ॥ १८ ॥ इत्यादियुक्त्या स भृशं, दुःखभुक्त्या च चेतितः । सर्वत्राव्यययद्द्रव्यं, न तु न्यूनमभून्मनाग् ॥ १९ ॥ पृष्टोऽन्यदाऽमुना ज्ञानी, प्राग्भवं प्राह तद्यथा । अभूच्चन्द्रपुरे चन्द्रवणिग् निःस्वशिरोमणिः ॥२०॥ सोऽर्हद्गृहं गतोऽन्याह्नि, कपर्दशतवेतनैः । उद्धारकेऽर्चकानीतैरानर्च कुसुमैर्जिनम् ॥२१॥ तेनार्प्यन्त कपर्दाश्च, नवतिः सनवा जवात् । द्यो दाताऽस्मीति सैकस्तु, वैयग्र्याद्विस्मृतः स्थितः ॥२२॥ अचिरादचिरावच्च, शूलेन स विपन्नवान् । त्वमभून्मध्यभावेन, जिनपूजाप्रभावतः ॥ २३ ॥ स्युर्दत्तकपर्दसङ्ख्या, लक्षा

पुच्छं च स ततः, प्रतस्थे श्रेष्ठिना समम् ॥ ९३ ॥ नीत्वा च दीर्घरज्जू द्वे, तुम्बके द्वे च मञ्चिकाम् । नल्याद्य-तुल्यसामग्र्या, प्राप्तौ तौ विवरं गिरेः ॥ ९४ ॥ द्वारस्थं यक्षमर्चित्वा, पुस्तिकोक्तानुसारतः । विवरान्तः प्रविष्टौ तौ, नरकान्तरिवोत्सुकौ ॥ ९५ ॥ उत्तिष्ठत्प्रेतभूतादेर्बलिक्षेपेण तर्पणात् । अतुच्छपुच्छदीपस्योद्योतेन द्रुतयायिनौ ॥ ९६ ॥ द्वियोजनीमतिक्रान्तौ, प्रीतौ ददृशतुश्च तौ । चतुरस्रं चतुर्हस्तविस्तारं रसकूपकम् ॥ ९७ ॥ युग्मम् ॥ सार्धं तुम्बवरत्राभ्यां, तत्रादृश्यतलेऽथ तम् । रसं ग्राहयितुं योगी, मुमुचे मञ्चिकास्थितम् ॥ ९८ ॥ सोऽपि प्राप्य रसं दिव्यं, रसं नव्यं वहन् हृदि । तेन तुम्बयुगं भृत्वा, सज्जो रज्जू अचीचलत् ॥ ९९ ॥ आकृष्य योगिना रज्जुयुग्मं कूपोपकण्ठगः । मुग्धधीर्मार्गितः सोऽदात्तस्मै तत्तुम्बकद्वयम् ॥ १०० ॥ योगी भोगीव दुष्टात्मा, नयधर्माविवाथ ते । चिच्छेद रज्जू युगपत्, सोऽपतत् परितस्तहृत् ॥ १ ॥ कुड्यलग्नः पतन् दैवादस्थात् कण्ठे रसस्य सः । दध्यौ च धिग् अहो लोभात्, दाम्भिकस्य विजृम्भितम् ॥ २ ॥ हा दैव! किं करिष्यामि, मरिष्यामि इहैव हा । धिग् धिग् लोभान्धदृक् पूर्वं, नैव किञ्चिद्व्यचारयम् ॥ ३ ॥ इत्यार्त्तिक्षुत्तृडाद्युग्रदुःखी तस्थौ कियद्दिनीम् । नित्यान्धकारे कारायामिव लोभस्य तत्र सः ॥ ४ ॥ तत्राप्यागान्महागोधा, तद्बोधायेव शब्दकृत् । रसं पीत्वा स निर्यान्त्यास्तस्याः पुच्छमदूधरीत् ॥ ५ ॥ भवितव्यतयेवातस्तयाऽऽकृष्टः स कष्टयुक् । निगोदादिव निर्गम्य, भ्राम्यन् सार्थेऽमिलत् क्वचित् ॥ ६ ॥ लुण्टाकैर्लुण्टिते सार्थे, श्रेष्ठी नश्यन्नितस्ततः । बन्दीग्राहं गृहीतस्तैर्विक्रीतश्च क्वचित्पुरे ॥ ७ ॥ क्रीतः स सार्थपतिना, कूले बर्बरनाम्नि च । धनलो-

सौधं, निधिद्रव्याद्यधापयत् ॥ ७८ ॥ शेषं निधिधनं लक्षा, नवतिं तु नवाधिकाम् । वीक्ष्यैषं विस्मयानन्दखेदो-
द्वेगैर्व्यचिन्तयत् ॥ ७९ ॥ कायक्लेशं मुधिकया, सेहेऽहं दुस्सहं बहुम् । निर्भाग्यस्य कथं सिद्ध्येत्, कोटीश्वरम-
नोरथः ? ॥ ८० ॥ यतः-"वनकुसुमं कृपणश्रीः कूपच्छाया सुरङ्गधूली च । तत्रैव यान्ति विलयं मनोरथा भा-
ग्यहीनानाम् ॥ ८१ ॥" इत्यादिचिन्ताचान्तः स, तस्थौ श्रान्त इवाधिकम् । कियत्कालमथो कोटीश्वरान् लक्षे-
श्वरैः क्वचित् ॥ ८२ ॥ अभ्युत्थानासनाद्याभिः, सन्मान्यान् प्रतिपत्तिभिः । दृष्ट्वा कोट्यर्त्तिभृत्प्रोचैः, कश्चिद्यो-
गीन्द्रमैक्षत ॥ ८३ ॥ युग्मम् ॥ सम्पोष्य बहु सन्तोष्य, तमप्राक्षीच्च दक्ष ! हे । समाख्याहि समीक्ष्याहं, भावी
कोटीश्वरो न वा ? ॥ ८४ ॥ सोऽपि ध्यानं नाटयित्वा, स्पष्टमाचष्ट शिष्ट ! ते । भूयस्यो धनदस्येव, भाविन्यो
धनकोटयः ॥८५॥ कथं कथमिति प्रोक्ते, श्रेष्ठिना लोलुपात्मना । योगी जगौ जगत्यामप्युपायोऽत्रैक एव हि ॥८६॥
अन्वेष्वनर्थं ते पश्याम्ययं तु विषमोऽप्यहो ? । तव प्राचीनदुष्कर्मक्षयतः सिद्धिमेष्यति ॥ ८७ ॥ प्रसह्य सद्यः
स्वामिन् ! मे, तमेवोपायमादिश । इत्युच्चैः सादरे तस्मिन्, सोपरोधं जजल्प सः ॥ ८८ ॥ मध्येऽद्रि रसकू-
पीस्थरसस्यैकेन बिन्दुना । लोहभारसहस्राणि, सुवर्णीस्युः क्षणादपि ॥ ८९ ॥ स च सिद्धरसः प्रायो, देवाना-
मपि दुर्लभः । कष्टप्राप्यः परं क्वापि, श्रेष्ठ्यथाचष्ट हृष्टहृत् ॥ ९० ॥ निष्फलान्यपि कष्टानि, सह्यन्ते स्म मया
भृशम् । सुसहं सफलं कष्टं, कायः कष्टसहश्च मे ॥ ९१ ॥ सुमहन्महिषीपुच्छं, श्रेष्ठिनाऽऽनाय्य योगिराट् ।
षण्मासावधि तैलान्तः, प्रक्षिप्यास्थापयत्ततः ॥ ९२ ॥ रसेन्द्रकूपिकाकल्पपुस्तिकां साम्प्रदायिकीम् । लात्वा

॥ ६२ ॥ मौलाद्धं बहुलक्षोनां, वीक्ष्य दुःखं महद्वहन् । दैवान्नदीतटे प्रौढनिधिं प्राप्य च पिप्रिये ॥ ६३ ॥ गृहे रहस्तमानीय, तद्वित्तगृहवित्तयोः । मीलनान्नवनवतिलक्षीमक्षीणमाप सः ॥६४॥ गृध्नुस्ततोऽयमध्यायन्निधिमेकं लभेय चेत् । कृतकृत्यीभवेयं तत्तदुपायश्च को न्विह ? ॥६५॥ ततोऽसौ निधिकल्पज्ञान्, पप्रच्छातुच्छभक्तिभाक् । तेऽभ्यधुर्भाग्ययोगेन, निधानानि पदे पदे ॥ ६६ ॥ यतः—"असन्त्रमक्षरं नास्ति, नास्ति मूलमनौषधम् । निर्द्धना पृथिवी नास्ति, आम्नायाः खलु दुर्लभाः ॥ ६७ ॥" विशिष्य शिष्यते किञ्चित्, तदभिज्ञानमप्यहो ? । प्रस्रावेऽश्वखरादीनां, चतुर्भिश्चरणैः समैः ॥६८॥ बहुपक्षिपदे वाऽर्कपारे खञ्जनविट्पदे । छगणान्तर्गतैरण्डबीजाङ्कुरपदेऽपि च ॥६९॥ खञ्जरीटादिकानां च, मैथुनस्थानके निधिः । प्ररोहे प्रपुनाटादेश्चापि बिल्वपलाशयोः ॥७०॥ त्रिभिर्विशेषकम् ॥ प्ररोहस्य च कार्श्येऽल्पः, स्थौल्येऽनल्पः पुनर्निधिः । तद्गतक्षीरवर्णानुसारि सारं निधौ तथा ॥७१॥ श्रुत्वैवं शोधयन्नुर्व्यां, पलाशं तादृशं क्वचित् । स निरीक्ष्य परीक्ष्य द्राग्, बलिक्षेपविधिं व्यधात् ॥ ७२ ॥ ओंनमो धरणेन्द्राय, ओंनमो धनदाय च । इत्यादिमन्त्रमन्त्रेण, पूर्वमुर्वी चखान च ॥७३॥ साक्षादिव महाभाग्यं, साक्षादासीन्महानिधिः । तत्र स्वर्णकोटिपूर्ण, तूर्णमुच्चैः प्रमोदकृत् ॥ ७४ ॥ रथमारोप्य सङ्गोप्य, तं निधिं सद्मसन्निधिम् । सोऽगाद् यावद्गृहे तावत्प्रदीपनमुदैक्षत ॥ ७५ ॥ तस्य पश्यत एवाशु, भस्मीभूतेऽखिले गृहे । मूर्च्छां गच्छन् क्षणं मूर्च्छाछेदे चक्रन्द मन्दधीः ॥ ७६ ॥ हा दैव ! नैव ते किञ्चिदपराद्धं मया क्वचित् । दुःसपत्नीवदीर्ष्यालु, मह्यं द्रुह्यसि किं मुधा ? ॥ ७७ ॥ सैवं विलापी पापीवोद्विग्नः कृच्छ्रनिमग्नहृत् । क्रमात् कथञ्चित्स्वं

॥ ३१ ॥ व्यचारयन्निर्विचारः, सोऽन्यदा सिन्धुयात्रया । मम चिन्तितपूर्त्तिः स्याच्चिन्ताचूर्त्तिश्च कर्हिचित् ॥३२॥
स्थानान्तरविशेषेण, यद्भाग्यानि फलन्त्यपि । बीजस्यापि हि निष्पत्तौ, दृष्टं भूरि भुवोऽन्तरम् ॥ ३३ ॥ किञ्च रत्नाकरः
सेव्यमानो रत्नान्यनेकशः । यत्नाद्विनाऽपि दत्ते द्राक्, सुखरक्ष्याणि तानि च ॥ ३४ ॥ एवं विभाव्य सर्वस्वमादा-
योदधियात्रया । सांयात्रिक इवामात्रैर्यानपात्रैश्चचाल सः ॥३५॥ रत्नद्वीपं समासाद्य, स क्रमादक्रमादिव । प्राज्ये
यथाऽर्हवाणिज्ये, नैककोटीः स्वमा[र्जिजत् ]र्जयत् ॥३६॥ मर्मावित्स्वकदुष्कर्मचकितश्च व्यचिन्तयत् । पोतानां
जातुचिद्भङ्गे, मूलस्यापि संशयः ॥ ३७ ॥ रत्नमेकं कोटिमूल्यं, ऊरुमध्ये क्षिपामि तत् । यथा प्राप्तेऽपि विधुरे,
दधे कोटिध्वजं गृहे ॥ ३८ ॥ एवं विचार्य स्वामूरुं, स्वयं धैर्याद्विदार्य सः । रत्नं सयत्नं सङ्गोप्य, ववले स्वावले
पवान् ॥ ३९ ॥ मा भूत् प्रक्रमभङ्गोऽत्रेतीव दुर्वातघाततः । भग्नाः सर्वेऽपि पोतास्ते, पर्पटा इव स्फुटितः ॥ ४० ॥
तृष्णाविडम्बनानीव, द्रष्टुं फलकमाप्य सः । दशादिन्याऽऽस्वांस्तीरं, सहमानो महाव्यथाम् ॥ ४१ ॥ मूर्च्छितः
पतितस्तत्र, तीरे नीरेशितुः स्वयम् । उज्जिजीव क्रमेणैष, दृढायुषि मृतिः कुतः ? ॥४२॥ मानसीमथ शारीरीं, म-
हार्त्तिं दुःसहां वहन् । सोऽवभ्रमीदरण्यानीं, पुलिन्द्र इव मन्दधीः ॥ ४३ ॥ तद्रत्नलग्नजीवश्च, जीवन् भैक्ष्येण
रङ्कवत् । भूयसा रंहसाऽप्यागात्, भूयसाऽनेहसा गृहम् ॥ ४४ ॥ द्रव्यनाशादिदुःखानां, सङ्करेऽपि सुबुद्धितः ।
ऊर्वन्तर्गोपिताद्रत्नात्कोटीशो भविताऽस्म्यहम् ॥४५॥ विचिन्त्येति स तद्रत्नं, सकष्टः कृष्टाऽतिकष्टतः । हृष्टहृ-
द्दर्शयामास, मूल्यायातुल्यधीजुषाम् ॥ ४६ ॥ युग्मम् ॥ सर्वैरपि तदा तज्ज्ञैस्तत्कर्मप्रेरितैरिव । लक्षाणां

यदुक्तम्–"अतिलोभो न कर्त्तव्यो, लोभं नैव परित्यजेत्। अतिलोभाभिभूतस्य, चक्रं भ्रमति मस्तके ॥ १६ ॥" ततोऽध्यासी-त्यदुक्ते च कृते वित्तं, खातपूरितनीतितः। तावदेवाभवद्भाग्यायत्तं वित्तं यतः स्मृतम् ॥ १७ ॥ धनं भूयोऽर्जिताऽस्म्यथो ॥१८॥ यथा न किञ्चिच्चौरादिगो-चरे संचरेत् क्वचित्। विचिन्त्येत्यन्यदा श्रेष्ठी, क्षणदार्द्धे पुराद्बहिः॥१९॥ पुत्रादेरप्यविज्ञातं, धरान्तर्न्यस्य यत्नतः। सारं सारं निजं सारं, प्राग्वत् प्रस्थितवान् श्रिये ॥२०॥ युग्मम् ॥ तच्च धूर्त्तेन केनापि, ज्ञातं खातं च भूतलम्। आत्तं च जात्यरत्नादि, कर्करक्षेपपूर्वकम् ॥ २१ ॥ प्रभूततरलाभेन, प्रभूततरवस्त्रयुग्। प्रभूतहर्षः सोऽप्यागात्, प्रभूतसमयाद्गृहम् ॥२२॥ यावद्रात्रौ तत्र गत्वा, खनित्वा च तदैक्षत। तावत्कर्करकास्तत्र, वीक्ष्य वैलक्ष्यमीयिवान् ॥ २३ ॥ वस्तूनां विक्रये लक्षा, नवतिस्तु नवाधिकाः। आसन् पलाशे पत्राणि, त्रीण्येवेति स्थितिर्यतः ॥ २४ ॥ कस्याप्यविश्वसन् सर्वं, स्वं नीत्वा सह सोऽन्यदा। प्राप्तो विदेशे क्रमशः, श्रियमार्जयदीप्सिताम् ॥२५॥ कृतार्थ-मानी स महासार्थे सार्थेशलीलया। प्रत्यागच्छंस्तु लुण्टाकैरलुण्टि चरटैर्भटैः ॥ २६ ॥ सार्थाद्विलुण्ट्यमानाच्च, नंष्ट्वा दैववशादयम्। कथञ्चिन्निरगाद्व्याधकरादिव कुरङ्गकः ॥ २७ ॥ शून्येऽरण्येऽप्यविश्रामं, ग्रामं ग्रामं क्रमाच्च सः। कृतपार्श्वस्थसद्रत्नयत्नः स्वगृहमागमत् ॥ २८ ॥ तेषां त्वप्रतरत्नानां, विक्रयान्यक्रयादिना। तावदेवाभव-द्द्रव्यं, तस्य हर्षविषादकृत् ॥ २९ ॥ एवं लोभाभिभूतोऽसौ स्वकोटीपूरणेच्छया। क्रियासमभिहारेण, व्यवहारेऽ-भवत् परः ॥ ३० ॥ कथञ्चिदपि नाशात्तु, नैवावर्द्धत तद्धनम्। न चोद्वेगमगादेषोऽप्यहो ? तृष्णाग्रहो महान्

अत्र व्रते धनश्रेष्ठिदृष्टान्तोऽयम्—

श्रीकाञ्चनपुरे प्राश्वत्काञ्चनर्द्ध्याऽद्भुतेऽभवत् । प्रकृत्या सुन्दरः श्रेष्ठी, सुन्दरः सुन्दरीपतिः ॥ १ ॥ सज्जनानन्दनः श्रीमान्, धनः श्रेष्ठ्यस्य नन्दनः । धनश्रीश्च वधूस्तस्य, धनसारादयः सुताः ॥ २ ॥ पितर्युपरते चिन्ता, धनस्याभूद्धनार्जने । गुरौ सत्येव निश्चिन्ताः, शिष्या भृत्याः सुताः स्नुषाः ॥ ३ ॥ सोऽन्येद्युर्निजवित्तस्याशेषस्यैक्षिष्ट लेख्यकम् । यावता नवनवतिष्टंकलक्षाणि जज्ञिरे ॥ ४ ॥ तत्रापि पञ्चपञ्चाशत्प्रमिताः पूर्वजार्जिताः । चत्वारिंशच्चतुर्युक्ता, लक्षाः पित्राऽर्जिताः पुनः ॥ ५ ॥ स ततस्तर्कयामास, लक्षमेकं भवेद्यदि । स्वसौधे निदधे कोटीध्वजं कोटीशवत्तदा ॥ ६ ॥ ततोऽत्यर्थं तदर्थं स, व्यवसायाननेकशः । चकार वत्सरप्रान्ते, पुनर्लेख्यकमैक्षत ॥ ७ ॥ यावत्तावद्वेक्ष्य, दध्यावध्यामलुब्धधीः । व्ययो भूयान् ध्रुवमेतन्न किञ्चिद्ववृधे धनम् ॥८॥ व्ययं ततोऽयं सङ्क्षिप्य, निर्दयं निजधाम्न्यपि । महाकृपणवत्तस्थौ, जीर्णवासाः कदन्नभुग् ॥ ९ ॥ चिरं दरिद्रवद्दुःखं, सकुटुम्बोऽपि सोढवान् । धनं न त्वधिकीभूतं, कीलितं तु कुकर्मणा ॥ १० ॥ भूयोऽध्यायदयं भूरि, भक्षयन्ति ध्रुवं धनम् । वणिक्पुत्रादयश्चौरास्तत्कुर्वे स्वयमुद्यमम् ॥ ११ ॥ ततोऽवमत्य सोऽत्यन्तप्रवासक्लेशवैशसम् । स्वयं ययौ वणिज्यार्थमप्रमाणक्रयाणयुक् ॥ १२ ॥ धनलक्षार्जनं काङ्क्षन्, लब्धलक्षः क्रमेण सः । तर्षोत्कर्षाद् व्यवहार्षीद्दूरदूरतरं व्रजन् ॥ १३ ॥ प्रभूतार्जितवित्तश्च, तुष्टचित्तः स्ववेश्मनि । प्राप्तः शुश्राव दुश्चौरोपद्रवं दुःश्रवं जवात् ॥ १४ ॥ ततः कलत्रपुत्राद्यैः, सकलैः कलहायितः । सर्वेषामप्यनिष्टोऽभूद्भूरिलोभान्न किं भवेत्? ॥१५॥

"गोशतादपि गोः क्षीरं, मानं मूढशतादपि। मन्दिरे मञ्चकस्थानं, शेषः परपरिग्रहः ॥ १ ॥ द्वे वाससी प्रवरयोषिदपायशुद्धा, शय्यासनं करिवरस्तुरगो रथो वा। काले भिषग्नियमिताशनपानमात्रा, राज्ञः पराक्यमिव सर्वमवेहि शेषम् ॥ २ ॥" परिग्रहस्य स्वल्पत्वे च स्वल्पचिन्तानिर्भयत्वादयो गुणाः, यतः–"जह २ अप्पो लोहो जह २ अप्पो परिग्गहारंभो। तह २ सुहं पवड्ढइ धम्मस्स य होइ संसिद्धी ॥ १ ॥" तस्मादिच्छाप्रसरं निरुध्य सन्तोषपोषायैव यतितव्यं, सुखस्य सन्तोषमूलत्वात्, भणितं च–"आरोग्गसारिअं माणुसत्तणं सच्चसारिओ धम्मो। विज्जा निच्छयसारा सुहाइं संतोससाराइं ॥ १ ॥ यदि यत्रैव तत्रैव, यथैव च तथैव च। रतिं त्वं चित्त! बध्नासि, नासि दुःखस्य भाजनम् ॥ २ ॥" ततः सन्तोषसेतुबन्धेन लोभमहाम्भोधिमुद्वेलतया प्रसरन्तं विनिवार्य स्वीकार्यमेतद्व्रतं यथाशक्ति सम्यक् प्रतिपाल्यं च, प्रत्यहं पुनः पुनः स्वनियमस्मरणं यथाऽवसरसम्भवं तत्संक्षेपणादिना, अथ स्वीकृतपरिमाणादधिकधनधान्यादिसमृद्धिसम्भवे किं विधेयं श्राद्धेन?, उच्यते, स्वीकृतपरिमाणादधिकं धनादि यद्यदुत्पद्यते तत्तत्सर्वं धर्मव्यये एव नियोज्यं, न तु व्यवसायभोगादौ, एवं च न कश्चिदेतद्व्रतस्यातिचारः, दानादिसुकृताराधनेन चञ्चलायाः कमलाया नियन्त्रणं कृतं स्यात्, यदुक्तं नैषधेऽपि–"पूर्वपुण्यविभवव्ययबद्धाः, सम्पदो विपद एव विमृष्टाः। पात्रपाणिकमलार्पणमासां, तासु शान्तिकविधिर्विधिदृष्टः ॥ १ ॥" तदेवमेतद्व्रतस्यात्रापि सन्तोषसौख्यलक्ष्मीस्थैर्यजनप्रशंसादि फलं परत्र तु नरामरसमृद्धिसिद्ध्यादि, अतिलोभाभिभूततया चैतद्व्रतस्यास्वीकृतौ विराधनायां वा दारिद्र्यदास्यदौर्भाग्यदुर्गत्यादीत्यष्टादशगाथार्थः ॥१८॥

इच्छा हु आगाससमा अणंतिआ ॥ १ ॥" इयांस्तु विशेषः–अन्येषामिच्छावृद्धिरप्रतिहतप्रसरा इच्छापरिमाणकर्तुस्तु स्वीकृतपरिमाणं यावदेव, अधिकेच्छायास्तेन निषिद्धत्वात्, यथा २ चेच्छाया आधिक्यं तथा २ दुःखस्यापि, दुःखस्येच्छामूलत्वात्, उक्तञ्च–"भव्य! दुःखमयः सोऽयं, किमाभाति भवस्तव?। यत्रेच्छातुलितं दुःखं, न पुनर्लभ्यते मुधा ॥ १ ॥" दृश्यन्ते हि गृहे सुखेन निर्वाहेऽप्यधिकाधिकधनार्जनाशयाऽनेकक्लेशान्निरन्तरमनुभवन्तः, यतः–"ये दुर्गामटवीमटन्ति विकटं क्रामन्ति देशान्तरं, गाहन्ते गहनं समुद्रमतनुक्लेशां कृषिं कुर्वते। सेवन्ते कृपणं पतिं गजघटासंघट्टदुःसंचरं, सर्पन्ति प्रधनं धनांधितधियस्तल्लोभविस्फूर्जितम् ॥ १ ॥ नीचस्यापि चिरं चटूनि रचयन्त्यायान्ति नीचैर्नतिं, शत्रोरप्यगुणात्मनोऽपि विदधत्युच्चैर्गुणोत्कीर्त्तनम्। निर्वेदं न विदन्ति किञ्चिदकृतज्ञस्यापि सेवाकृते, कष्टं किं न मनस्विनोऽपि मनुजाः कुर्वन्ति वित्तार्थिनः ? ॥२॥" एवमभिलषितधनत्वेऽपि तद्रक्षास्वप्रतिष्ठाप्राप्त्यभीष्टस्त्रीसंयोगकामितकामभोगाद्याशया तत्प्राप्तावपि सिद्धराजजयसिंहनृपादिवत् पुत्राद्यपत्याशया तदुत्पत्तावपि तज्जीवनसद्गुणाध्यारोपणप्रतिष्ठाप्रापणसुकन्यापाणिग्रहणतत्पुत्रसन्तत्याद्याशया तद्भावेऽप्यधिकाधिकाधिपत्याद्याशया प्राक्कृतसुकृतैरभिमतसर्वाङ्गीणसंयोगसुखेऽपि लब्धे तद्वियोगरोगजरामरणाद्यभावाशयार्त्ताः सर्वदापि दुःखिन एव, अत्र संग्रहश्लोकः–"ईप्सितधनाप्तिरक्षाप्रतिष्ठितिस्त्रीसुताधिपत्याद्यम्। स्वस्य सुतादेश्चेच्छुः सुखनिर्वाहेऽपि नैव सुखी॥ १॥" परिग्रहस्य च भूयस्तरत्वेऽपि स्वल्पतरमेव धनिकस्योपकारि, शेषं तु परोपभोग्यमेव, केवलं तस्य चिन्ताद्याकुलत्वातुच्छमूर्च्छादिनाऽत्रामुत्रापि दुःखैकहेतुः, यतः–

सुवर्ण-कनकं तयोः कृतप्रमाणादाधिक्ये पत्नीपुत्रादिभ्यः प्रदानेन रूप्यसुवर्णप्रमाणातिक्रमरूपस्तृतीयः ३, कुपितं कुप्यं-रूप्यसुवर्णव्यतिरिक्तं कांस्यलोहताम्रत्रपुपित्तलसीसकमृद्भाण्डवंशकाष्ठहलशकटशस्त्रमञ्चकमञ्चिकामसूरकादिगृहोपस्कररूपं तस्य सङ्ख्यादिप्रमाणाधिक्ये स्थालकचोलकादीनां नियमितसङ्ख्याकरणार्थं स्थूलत्वादिविधापनेन कुप्यप्रमाणातिक्रमरूपश्चतुर्थः ४, द्विपदं पत्नीकर्मकरकर्मकरीप्रभृति हंसमयूरकुर्कुटशुकसारिकाचकोरपारापतप्रभृति च चतुष्पदं गोमहिष्यादि दशविधमनन्तरोक्तं द्विपदचतुष्पदयोश्च गर्भस्य बहिरदृश्यत्वादगणने द्विपदचतुष्पदप्रमाणातिक्रमरूपः पञ्चमः, यद्वा धनधान्यवत् क्षेत्रवास्त्वादीनामपि चातुर्मासिकादिनियमसमाप्त्याद्यवसरेऽहमेतल्लास्याम्यतो नान्यस्य देयमित्युक्त्या परनिश्रया स्थापनादिनाऽतिचारता भाव्या ५ शेषं प्राग्वत्, विवेकिना हि मुख्यवृत्त्या धनधान्यादिनवविधपरिग्रहस्यापि प्राक् सतः कियत्सङ्क्षेपरूपं परिमाणं प्रतिपत्तव्यं, तदशक्ताविच्छापरिमाणमवश्यं विधेयं, तस्य यथास्वाभिप्रायं प्रतिपत्तिसम्भवेन सर्वेषां सुकरत्वात्, यतः-"ब्रह्मज्ञानविवेकनिर्मलधियः कुर्वन्त्यहो! दुष्करं, यन्मुञ्चन्त्युपभोगभाञ्ज्यपि धनान्येकान्ततो निःस्पृहाः। न प्राप्तानि पुरा न सम्प्रति न च प्राप्तौ दृढप्रत्ययो, वाञ्छामात्रपरिग्रहाण्यपि वयं त्यक्तुं न तानि क्षमाः ॥ १ ॥" ननु गृहे द्रव्यशतस्यापि सन्देहः, परिग्रहपरिमाणे तु द्रव्यसहस्रलक्षादिप्रमाणं प्रतिपद्यते एवं चेच्छावृद्धिसम्भवात्को गुणस्तस्य?, उच्यते, इच्छावृद्धिः सर्वदा सर्वेषां सांसारिकजीवानां प्रागप्यस्त्येव, तथा च नमिराजर्षिः-"सुवण्णरुप्पस्स य पव्वया भवे, सिआ हु केलाससमा असंखया। नरस्स लुद्धस्स न तेहिं किंचि,

॥ १ ॥" चतुःषष्टिभेदोऽप्येष नवविधपरिग्रहेऽन्तर्भवति तेनातिचारानुलोम्यादिना नवविध एवात्र दर्शितो, यथा-'धणधन्न'त्ति, तत्र धनं गणिम १ धरिम २ मेय ३ पारिच्छेद्य ४ भेदाच्चतुर्धा, यदाह-"गणिमं जाईफलफोप्फलाइ धरिमं तु कुंकुमगुडाई। मेज्जं चोप्पडलोणाइ रयणवत्थाइ परिछेज्जं ॥ १ ॥" धान्यं चतुर्विंशतिधाऽनन्तरमुक्तं सप्तदशधाऽपि स्याद् यतः-"सालि १ जव २ वीहि ३ कुद्दव ४ रालय ५ तिल ६ मुग्ग ७ मास ८ चवल ९ चिणा १० तुवरि ११ मसूर १२ कुलत्था १३ गोहुम १४ निप्फाव १५ अयसि १६ सणा १७ ॥ १ ॥" अथवा धान्यान्यनेकविधानि तत्तद्देशप्रसिद्धानि, उक्तञ्च संसक्तनिर्युक्तौ-"कुसिणाणि अ चउसट्ठी कूरे जाणाहि एगतीसं च। नव चेव पाणयाइं तीसं पुण खज्जया हुंति ॥ १ ॥" एवंलक्षणयोर्धनधान्ययोरतिक्रमोऽतिचारः, अयमर्थः-धनधान्यस्य स्वीकृतप्रमाणात्कालान्तरादिनाऽधिकीभूतस्याधमर्णादिभिर्देयस्याग्रेतनधनधान्यविक्रयं यावत्तद्गृहे एव स्थापनेन समर्घलभ्यस्य च सत्यङ्कारादिना स्वीकारेण स्थूलमूढकादिबन्धनेन वा धनधान्यप्रमाणातिक्रमरूपः प्रथमोऽतिचारः१, क्षेत्रं-सस्योत्पत्तिभूमिस्तच्च सेतुकेतुतदुभयात्मकं त्रिधा, तत्रारघट्टादिजलनिष्पाद्यसस्यं सेतुक्षेत्रं १ जलदनिष्पाद्यसस्यं केतुक्षेत्रम् २ उभयजलनिष्पाद्यसस्यमुभयक्षेत्रम् ३, वास्तु-गृहग्रामादि, तत्र गृहं त्रिविधं-खात १ मुच्छ्रितं २ खातोच्छ्रितं च ३, खातं-भूमिगृहादि १, उच्छ्रितं प्रासादादि २, खातोच्छ्रितं भूमिगृहस्योपरि गृहादि ३, तयोः क्षेत्रवास्तुनोरेकादिपरिमाणे कृतेऽधिकाभिलाषादासन्नक्षेत्रं गृहं वा गृहीत्वा व्रतभङ्गभयात्पूर्वेण सहैकत्वकरणार्थं वृत्तिभित्त्याद्यपनयनेन क्षेत्रवास्तुप्रमाणातिक्रमरूपो द्वितीयः २, रूप्यं-रजतं

यद्वाऽणुका युगन्धरी इत्यपि क्वापि दृश्यते ७, अतसी-प्रतीता १३ हरिमन्थाः-कृष्णचणकाः १४ त्रिपुटको-मालवके प्रसिद्धो धान्यविशेषः १६ निष्पावाः-वल्लाः १६ सिलिन्दा-मकुष्ठाः १७ राजमाषाः-चपलकाः १८ इक्खूः-बरट्टिका संभाव्यते १९ मसूरतुवरीधान्यद्वयं मालवकादौ प्रसिद्धं २३ कलायका-वृत्तचनकाः २४। रत्नानि चतुर्विंशतिर्यथा-"रयणाइं चउवीसं सुवन्न १ तउ २ तंब ३ रयय ४ लोहाई ५। सीसग ६ हिरण्ण ७ पासाण ८ वइर ९ मणि १० मोत्तिअ ११ पवालं १२ ॥ १॥ संखो १३ तिणिसा १४ गुरु १५ चंदणाणि १६ वत्था १७-मिलाणि १८ कट्ठाइं १९। तह चम्म २० दंत २१ वाला २२ गंधा २३ दव्वोसहाइं च २४ ॥ २ ॥" प्रसिद्धान्यमूनि, नवरं रजतं-रूप्यं हिरण्यं-रूपकादि पाषाणा विजातिरत्नानि मणयो-जात्यानि तिनिसो-वृक्षविशेषः अमिलानि-ऊर्णावस्त्राणि काष्ठानि-श्रीपर्ण्यादिफलकादीनि चर्माणि-सिंहादीनां दन्ता-गजादीनां वालाः-चमर्यादीनां द्रव्यौषधानि-पिप्पल्यादीनि, स्थावरं त्रिधा, द्विपदं च द्विधा, यथा-"भूमी घरा य तरुगण तिविहं पुण थावरं मुणेअव्वं। चक्कारबद्ध माणुस दुविहं पुण होइ दुपयं तु ॥ १ ॥" भूमिः-क्षेत्रं गृहाणि-प्रासादाः तरुगणा-नालिकेर्याद्यारामा इति त्रिधा स्थावरं, चक्कारबद्धं-गव्यादि मानुषं-दासादीति द्विधा द्विपदं, चतुष्पदं दशधा, यथा-"गावी महिसी उट्टी अय एलग आस आसतरगा य। घोडग गद्दह हत्थी चउप्पयं होइ दसहा उ ॥ १ ॥" एते प्रतीता, नवरम् अश्वाः-वाल्हीकादिदेशोत्पन्ना जात्याः अजात्या घोटकाः अश्वतरा-वेसराः नानाविधमपि कुप्यमेकमेव यथा-"नाणाविहोवगरणमेगविहं कुप्पलक्खणं होइ। एसो अत्थो भणिओ छव्विह चउसट्ठिभेओ उ

उक्तं तुर्यमणुव्रतं, सम्प्रति पञ्चममाह—

इत्तो अणुव्वए पंचमंमि आयरिअमप्पसत्थंमि । परिमाणपरिच्छेए इत्थप्पमायप्पसंगेणं ॥ १७ ॥

'इत्तो' इति, परिग्रहो द्विधा—बाह्योऽभ्यन्तरश्च, बाह्यो—धनधान्यादिरभ्यन्तरो रागद्वेषादिः, अत्र बाह्येनाधिकारस्तथैव च व्याख्या—'इतः' तुर्याणुव्रतानन्तरं वक्ष्यमाणधनधान्यादिनवविधपरिग्रहपरिमाणलक्षणे पञ्चमेऽणुव्रते यदाचरितं लोभादिनाऽप्रशस्तभावे सति, कस्मिन् विषये ?—परिमाणपरिच्छेदे—गुर्वादिपार्श्वे स्वीकृतधनधान्यादिप्रमाणोल्लङ्घने अत्रेत्यादि पूर्ववदिति सप्तदशगाथार्थः ॥ १७ ॥ अस्यातिचारपञ्चकं प्रतिक्रामति—

धणधन्नखित्तवत्थु रुप्पसुवन्ने अ कुविअपरिमाणे । दुपए चउप्पयंमी पडिक्कमे० ॥ १८ ॥

'धणधन्ने'ति, श्रीभद्रबाहुकृतदशवैकालिकनिर्युक्तौ गृहिणामर्थपरिग्रहो धान्य १ रत्न २ स्थावर ३ द्विपद ४—चतुष्पद ५ कुप्य ६ भेदात्सामान्येन षड्विधो विशेषेण तु तद्गतभेदैश्चतुःषष्टिविधः प्रोक्तः, तत्र धान्यानि चतुर्विंशतिर्यथा—"धन्नाइं चउव्वीसं जव १ गोहुम २ सालि ३ वीहि ४ सट्ठीअ ५। कुद्दव ६ अणुआ ७ कंगू ८ रालग ९ तिल १० मुग्ग ११ मासा १२ य ॥ १ ॥ अयसि १३ य हरिमंथ १४ तिउडय १५ निप्फाव १६ सिलिंद १७ रायमासा य १८। इक्खू १९ मसूर २० तुवरी २१ कुलत्थ २२ तह धन्नय २३ कलाया २४ ॥ २ ॥" एतानि प्रायः प्रसिद्धानि नवरं षष्टिकाः—शालिभेदाः ५ अणवो मणिचण्याख्या धान्यभेदा इति हैमद्व्याश्रयवृत्तौ

पर्वसु सर्वेषु निजं पतिमपि नियमान्न कामयिष्येऽहम् । इअ पडिवज्जिअ अज्जिअसम्मत्ता सा गया सपयं ॥ ७६॥
सोऽपि प्रासमपूर्वं सर्वं प्रेमपदे किल निवेद्यमेकपदे । इअ निअपइणो तीए पडिवन्नं वन्निअं निअयं ॥ ७७ ॥
तन्नियमाराधनतः प्रशंसनपरस्तद्वचनादन्यसर्ववनितानाम् । जावज्जीवं वज्जइ पव्वसु संगं पिआएवि ॥ ७८ ॥
दुर्गा च निसर्गाधिक-क्रमतः सम्यक्त्वमापिवान् सोऽपि । दीवाओ इव दीवो धम्माओ जायए धम्मो ॥ ७९ ॥
इत्याराध्य सुधर्म्मं सौधर्मं प्राप्य धर्मरुचिर्ज्ञानपञ्चमी तपसा । तद्दिणवित्तीइ सुअं पूअंती पालए सम्मं ॥ ८० ॥
प्रागज्ञानाराधनयाऽनया मति-ज्ञानकौशलं लेभे । पुव्वभवब्भासेण य सीलंमि इमा सुदढभावा ॥ ८१॥
यत्प्रागस्या वचनाद्धर्मं कृतवान् तौ च्युतौ च ततः । दुग्गजिओ तुमभजिओ जाओ दुग्गाइ तुज्झ पिआ ॥ ८२ ॥
श्रुत्वेति जातजातिस्मृती उभौ दम्पती भवांस्ततोऽत्र भवे । बहुइड्ढिपइट्ठाइं एईइ सुहेण तुह जाया ॥ ८३ ॥
फलं देशशी-प्रतीत्य तथा । साहंति नाह! तुह साहिअं फुडं दिट्ठमम्हेहिं ॥ ८४ ॥
आख्यत् मुमुक्षुमुख्योऽप्यहो! फलं देशशी-लतोऽप्येवम् । नाऊण सव्वसीलं सीलह पव्वज्जगहणेणं ॥ ८५ ॥
आत्तव्रतौ ततस्तौ ब्रह्मगुणाद्ब्रह्मलोकमितवन्तौ । इति शीलवतीनिदर्शनादसतीदुःश्रववृत्तगर्भितात् । तत्तो चइत्तु निम्मलसीलं सीलित्तु मुत्तिमवि ॥ ८६ ॥
उभयोः किल मार्गयोः सतामुचितो योऽत्र स एव सेव्यताम् ॥ ८७ ॥

॥ इति तुर्याणुव्रते शीलवतीवृत्तम् ॥

उवलक्खिवआ रन्ना ॥ ६१ ॥ विस्मयविषादलज्जाप्रीतिभृता भूभृताऽथ ते पृष्टाः । लज्जंतावि हु सव्वं साहंति जहट्ठिअं वुत्तं ॥ ६२ ॥ यादृग्महासतीं प्रति चिन्तितमचिरेण तादृशमवापि । गहिलो धूलिं हेलिं पक्खिवइ भरेइ पुण अप्पं ॥ ६३ ॥ तत्प्रभृति शीलवत्याः प्रशशंसुः कौशलं च शीलकलाम् । निवसचिवा अवि अहवा सलाहणिज्जा न सा कस्स? ॥ ६४ ॥ वपुषाऽपि सुदुष्पालं विशुद्धशीलं ततोऽपि वचसा च। मणसावि हु तप्पालणमिमं तु लोउत्तरं चरिअं ॥ ६५ ॥ महिमा तया महीयान् परीक्षया दीक्षयेव कोऽप्यस्याः । जाओ खलु जलणाओ कणयं धणिअं हवइ दित्तं ॥ ६६ ॥ नृपसचिवैः सा क्षमिता धनं तदीयं प्रदाय परिबोध्य । तेवि परदारनिअमं कारेइ अहो! सईइ पहो ॥६७॥ अथ च शुभपोषिघोषं दमघोषं सुगुरुमागतं तत्र। सपिओ अजिओ वंदिअ पिआइ पुच्छेइ पुव्वभवं ॥ ६८॥ ऊचे च चतुर्ज्ञानी धनी मनीषी पुराऽस्ति पुष्पपुरे । सुलसो अलसो पावे सुजसा सुजसा य तस्स पिया ॥ ६९ ॥ कर्मकरौ तद्गेहे दुर्गो दुर्गा च दम्पती भद्रौ । सिअपंचमीइ साहुणि पासि सदुग्गा गया सुजसा ॥ ७० ॥ ज्ञानार्चादि च तत्कृतमैक्ष्याप्राक्षीत्प्रवर्त्तिनीं दुर्गा । किं तु सिअपंचमीए फलं इमा भणइ अइविउलं ॥ ७१ ॥ यतः—"इह पुत्थयाइ जे वत्थगंधकुसुमच्चएहिं अच्चंति । ढोअंति ताण पुरओ नेवज्जं दीवयं दिंति ॥७२॥ सत्तीइ कुणंति तवं ते हुंति विसुद्धबुद्धिसंपन्ना । सोहग्गाइगुणड्ढा सव्वन्नुपयं च पाविंति ॥७३॥" दुर्गाऽथ जगौ भगवति! भाग्यवतां भवति धर्मसंयोगः। अम्हारिसाण काहिं पुण तहावि जहसत्ति तं काहं॥७४॥ त्यागस्तपश्च शक्त्या शीलं तु सुशीलमात्मचित्तवशम् । इअ सीलिस्सं सीलंपि निम्मलं परपुरिसच्चाया ॥ ७५ ॥

पितां रसवतीं सा। बहुभक्खभुज्जसज्जं बहुमाणावेइ तप्पासे ॥ ४७ ॥ अजितः प्रमुदितचित्तस्ततः क्षितेः कान्तमगमदाह्वातुम्। तत्तो सो बहुजुत्तो संपत्तो झत्ति तब्भवणे ॥ ४८ ॥ अथ मज्जनोदकासनभाजनबहुभक्ष्यभोज्यशाकादि। जं जं तहिं जोइज्जइ तं तं अप्पंति ते जक्खा ॥ ४९ ॥ भूमान् संमुखसद्मन्यपवरके किञ्चिदन्धकारेऽसौ। ते जक्खे संपिक्खइ पच्चक्खे कप्परुक्खे व्व ॥ ५० ॥ यद्येतेऽर्थितवितरणदक्षा यक्षा भवन्ति मद्भवने। तोऽहं होमि कयत्थो पत्थिअसव्वत्थसिद्धीए ॥ ५१ ॥ इत्यादि तदेकान्तस्वान्तः कान्तः क्षितेः सचिवशुद्धेः। नामंपि विम्हरंतो भोअणमवि कुणइ सुन्नमणो ॥ ५२ ॥ भुक्तोत्थितश्च वस्त्राभरणाद्यैः सत्कृतस्त्रपां त्यक्त्वा। सो मग्गइ ते जक्खे बहुउवरोहेण दीणुव्व ॥ ५३ ॥ मन्त्र्यप्यजल्पदजितः प्राग् दयिताशिक्षितः क्षितीन्द्रमिह। कह पत्थिअं न दिज्जइ? विसेसओ निययसामिस्स ॥५४॥ यद्वा सर्वं स्वामिन्! स्वामिन एवेदमत्र किं वाच्यम्?। पाधारह निअगेहे ते संपइ चेव पेसिस्सं ॥ ५५॥ किन्तु चतुर्मञ्जूषान्तः प्रक्षिप्योपदीकरिष्ये तान्। ता पुण महामहेणं सहाइ उग्घाडिअव्वाओ ॥ ५६ ॥ इत्युक्तितः प्रकामं प्रीतः क्षितिभृज्जगाम निजधाम। तेणवि तहेव तुरिअं पिट्ठे ते पेसिआ चउरो ॥ ५७ ॥ यावत्पर्षदि हर्षादुद्घाटितवान्नृपस्तु मञ्जूषाः। ता पिच्छइ विकराले ते किल कंकालवेआले ॥ ५८ ॥ किञ्चिद्भयतः किञ्चिद्विस्मयतः प्रीतितश्च किञ्चिदयम्। खणिमणिमिसिव्व अणिमेसनयणो ते पिच्छए चउरो ॥ ५९ ॥ स निमेषोन्मेषपजुषश्चलवपुषस्तानवेक्ष्य मानुषवत्। उल्लसिअकोउहल्लो वुल्लावइ भो तुम्मे इह के? ॥ ६० ॥ ते शीलवतीभणितेर्भिया सभाया ह्रिया च न वदतः। कहमवि सम्मं अवलोअणेण

विसयाण तण्हाए ॥ ३२ ॥ यतः—"विषस्य विषयाणां च, दृश्यन्ते महदन्तरम्। उपभुक्तं विषं हन्ति, विषयाः सरणादपि ॥ ३३ ॥ चक्रे विषेण नीलत्वमात्रं कण्ठे महेशितुः। विषयैस्तु तदङ्गार्द्धं, कृतमेषामहो! महः ॥३४॥" पृथिवीनाथः पाथःपतिवत्प्रत्यर्थिनं प्रमथ्याथ। सारं घित्तुं पत्तो सपुरं सह अजिअसचिवोवि ॥ ३५ ॥ निजमजितेन च चरितं तया च तत्सचिवविश्रवाद्यखिलम्। लहु जहवत्तं वुत्तं सम्मं पिम्मं इमं हि धुवं ॥ ३६ ॥ तेषां शुद्धिं कामपि विलोक्यमानोऽप्यनाप्नुवंस्तु नृपः। हसिउं जंपइ अजिअं तुमं निमंतेसिवि न भोत्तुं ॥३७॥ दयितावचनेन ततस्तेनापि निमन्त्रितः क्षितेर्दयितः। कामवि सुद्धिं तेसिं इह हि लहिस्संति हरिसेइ ॥ ३८ ॥ वणिजोऽस्य गृहे कियती सामग्री परिजनेन कियता च। मह गमणमुचिअमेअं नाउं पेसइ चरं राया ॥३९॥ गत्वाऽऽगतश्चरोऽपि प्रोच्चैः प्रोवाच वाचमिति नेतः!। का सामग्गी धूमोवि तस्स गेहंमि नहु अत्थि ॥४०॥ तद्विस्मितः स नृपतिश्चिन्तयति किमेतदद्भुतं? यद्वा। बहुपरिवारो भुत्तुं गच्छिस्सं किं हवइ पिच्छे ॥ ४१ ॥ अथ सा महातपस्विन इवास्थिचर्मावशेषवपुषस्तान्। पभणइ भो भो! तुज्झं कड्ढेमि करेह जइ भणिअं ॥ ४२ ॥ यदि तु मदुक्तादितरत्करिष्यथेषदपि तत्पुनरिहैव। पक्खेविस्सं तो ते भीआ सव्वं पवज्जंति ॥ ४३ ॥ सा तांस्ततोऽन्धकूपादिव गुप्तिगृहाद्बहिः समाकृष्य। ण्हावित्तु रत्तघणचंदणेहिं चचेइ सव्वंगं ॥ ४४ ॥ तान् यक्षानिव साक्षाद्दक्षा न्यक्षार्चितान् विकचकुसुमैः। ठाविअ निअगिहमज्झे भणेइ अप्पेह जं मग्गे ॥ ४५ ॥ अन्यस्य पश्यतः पुनरीषच्चक्षुर्निमेषमात्रमपि। वज्जिहिह जहा तुम्हं पच्छा सित्थाइ मुंचेमि ॥ ४६ ॥ उक्त्वेति भिन्नभवनच्छन्नविनिर्मा-

यतः–“किविणाण धणं नागाण फणमणी के सराओ˘ सीहाणं । कुलबालिआण सीलं कत्तो घिप्पात अमुआणं
॥ १८ ॥” वीक्ष्य पतिपक्ष्ममश्रद्दधतोऽभूद्भूपतेर्ध्ययमनर्थः । कहमन्नह निस्संकिअहिअया व इमे अकज्जेवि ॥ १९ ॥
तद्दर्शयामि तेषां चमत्कृतिं काञ्चिदिति विचिन्त्यैषा । पढमं दूइं पभणइ को नेहइ हंत तं सुहयं ? ॥ २० ॥ किन्तु
परपुरुषसङ्गः सङ्गतिमङ्गति कुलाङ्गनानां नो । साहूण दव्वसंगोव्व दिआण य मज्जसंगोव्व ॥ २१ ॥ नवरं क्रियते
सोऽपि हि ननु चेत्प्राप्येत याचितं वित्तम् । उच्छिट्ठंपिहु बहुनेहलोहओ भुज्जए भत्तं ॥ २२ ॥ तद्वित्तलक्षसहितः
स्वहितेच्छुर्यद्युपैति तदुपैतु । सो सुहओ इह पंचमिजामिणिजामंमि पढमंमि ॥ २३ ॥ दूतीभिश्चतुरैवं चतुरोऽप्या-
कारयच्चतुर्याम्याम् । कारेइ अ अपवरए उंडयखड्डाइसामग्गिं ॥ २४ ॥ प्रथमः प्रथमे प्रहरे कृतार्थमानीव निशि
च पञ्चम्याम् । तर्हि घित्तु वित्तलक्खं पत्तो बहुमाणिओ तीए ॥ २५ ॥ गर्त्तोपरि पल्यङ्के तन्तुव्यूतेऽंशुकेन पिहिते
च । जाव निविट्ठो हिट्ठो हिट्ठा पडिओ इमो ताव ॥ २६ ॥ एवमपरेऽपि यामत्रयेण तत्र त्रयोऽपि विनिपेतुः ।
असमंजससज्जाणं असमंजसमेव किल जुत्तं ॥ २७ ॥ ते सिकतिले निपतिताः सुकोमलेऽचिन्तयन्नियतमनया ।
विहिओ दयाइ दुट्ठाण अट्ठिभंगो न अम्हाणं ॥ २८ ॥ ते तत्र कूपरूपे स्वकर्मणा निपतितास्तु नरक इव । ही
नीहरिउमसक्का विविहं हिअयंमि झूरंति ॥ २९ ॥ तेषामेषा दवरकबद्धशरावेण कोद्रवान्नादि । निच्चं च नीरकरगं
देइ दयाए दयालुहिआ ॥ ३० ॥ सुधिया तया बहुदिनैः शनैः शनैर्युक्तिलङ्घनैस्तेषाम् । विज्जेण व निग्गमिओ
मयरोगो अंतरंगोवि ॥ ३१ ॥ षण्मासीमासीना दीनास्ते हन्त! तत्र विचत्रस्ताः । जीवंतावि मया इव धिद्धी

णेण लहु चिंतह उवायं ॥ ३ ॥ इत्यादि वदन्नेवागमत् क्षमाकामुकः समुद्रतटे। पभणइ सज्जह सज्जह रेरे वह-
णाणि लहु चेव ॥ ४ ॥ प्रवहणसज्जीकरणप्रवणाः प्रोचुर्न वैद्यगुटिकेयम्। नो वा गंधिअपुडिआ इमाणि बहुका-
लसज्जाणि ॥ ५ ॥ विममर्शाथ नरेशो निराशहृदयो हहा महाधौर्त्यात्। पावेहि दोहि अहमवि पच्चक्खं वंचि-
ओम्हि कहं? ॥ ६ ॥ आजन्मं भूमिगृहस्थिताऽतिमुग्धा मया मयि स्निग्धा। इअ तीए कह किज्जइ धिरत्थु इत्थीण
चरिआणं ॥ ७ ॥ एवं संशयविस्मयविषादनिर्वेदवेदनाविधुरे। निवपवरे सुरमहिओ तहिँ चारणकेवली पत्तो
॥ ८ ॥ दृष्ट्वा हृष्टोऽभ्रवियुगवृष्टिनिभं तं प्रभुं प्रभुः स भुवः। पणमित्तु तीइ चरिअं पुच्छइ सव्वं भणइ सोऽवि
॥ ९ ॥ आकर्ण्य तत्सकर्णस्तूर्णं वैराग्यपूर्णहृत् नृपतिः। पव्वज्जिअ सत्तमदिणे अज्जिअनाणो कमा सिद्धो ॥१०॥
तस्माद्यदि सा पातालसुन्दरी तादृशी कुशीलाऽभूत्। ता एसा वणिअपिआ अरक्खिआ कह इह सुसीला?
॥ ११ ॥ इति मन्त्रीवचः श्रुत्वा तत्त्वार्थपराङ्मुखः क्षितिप आख्यत्। सच्चमिणं किंतु इमा पडुकवडं पयडए
एवं ॥ १२ ॥ तादिदं कपटं प्रकटीक्रियतां कथमपि कुशीलमुद्भाव्य। तं पडिवन्नं चउहिवि सचिवेहिं पवंचच-
उरेहिं ॥१३॥ ते तु पुराऽपि परस्त्रीलम्पटचित्ताः स्फुटं नृपतिदेशात्। दिट्ठा हूआ दुद्धं भलाविअं खलु बिडालीए
॥ १४ ॥ चत्वारोऽपि ततस्ते किञ्चिन्मिषतः समागताः पश्चात्। सीलजलसोसणत्थं चउरो वडवानलुव्व फुडा
॥ १५ ॥ ते दिव्यरूपवेषा निजनिजदूतीमुखेन कामुकताम्। तीसे अपुव्ववत्थुप्पेसणपुव्विं पयासंति ॥१६॥ ध्यात-
वती तु सती सा धिगिमान् मूढान् ममापि ये शीलम्। सीहिणिदुद्धं व अहो! घित्तुं इच्छंति तुच्छमई ॥ १७॥

॥ ८८ ॥ यतः–"वंचिज्जइ निअसामी दिज्जइ जीअंपि किज्जए जस्सा। कज्जे गरूअमकज्जं हा इत्थी सावि विहडेइ ॥ ८९ ॥" अस्यामप्यासक्तं धिग्मां कामान्ध्यमूढतममनसम्। कह छुट्टिस्समिमाओ दुरंतपावाओ पावोऽहं ॥९०॥ एवं निर्वेदभवद्भववैराग्येण सद्गुरोः पार्श्वे। पडिवज्जिअ पव्वज्जं निरवज्जं पालए धीरो ॥ ९१ ॥ तान्यपि वहनानि तदा दैववशादागतानि तत्रैव। संकाए संफिट्टो वणंमि घाओ अ पाएण ॥९२॥ तौ क्रीडन्तौ तत्रोद्याने तं मुनिमपश्यतां सहसा। विम्हयविसायलज्जाकुंठो जाओ सुकंठो तो ॥९३॥ स्वस्य प्रकाश्य चरितं तस्य च पृष्ट्वा विविक्तचित्तोऽसौ। सम्मं खामेइ इमं उत्तमचित्ताण चरिअमिणं ॥ ९४॥ तन्मिलितं सा तमपि त्यक्त्वा शङ्कितमनाः प्रवहणानि। तुरिअं पेराविता पावा दीवंतरं पत्ता ॥ ९५ ॥ यावज्जीवं तत्राप्यपत्रपा वैरिणी पणस्त्रीत्वम्। काउं निरयं पत्ता बहुपावा बहुभवं भमिही ॥९६॥ प्रव्रजति स्म सुकण्ठोऽप्यकुण्ठवैराग्यसङ्गमोत्कण्ठः। ते दोवि देवलोअं संपत्ता झत्ति मुत्तिमवि ॥ ९७ ॥ नृपतिर्जयन्तसेनः सार्थपतौ प्रस्थितेऽथ शङ्कितहृत्। जा भूमिगिहं गच्छइ पिच्छइ ता तं न तरलच्छिं ॥ ९८ ॥ स ततोऽत्यन्तविहस्तः प्राह समाहूय मन्त्रिसामन्तान्। धुत्तेण तेण हरिआ दइआ मह अहह पच्चक्खं ॥९९॥ कोऽप्यस्ति धीरवीरस्तरसा यस्तौ नितान्तदुश्चारितौ। आणेइ जेण तेसिं दुण्हवि सिक्खं पयच्छेमि ॥ ३०० ॥ अश्रद्दधानकैस्तैः सूक्ष्मेक्षिकया निरीक्ष्यमाणैस्तु। भूमिहरंतो कहमवि उवलद्धा तारिस सुरंगा ॥ १ ॥ ते ब्रुवते स्म सुविस्मयविषाददोलायमानमनसोऽथ। सामिअ! सा वचंती देवेणुवलक्खिआ न किमु? ॥ २ ॥ प्राह नृपो मा प्रकुरुत पतिते घातं क्षते लवणपातम्। किं संपइ खलिउग्घाड-

जेण फुडं तेण विलसेमि ॥ ७४ ॥ स तु तद्दृशी निशीथेऽन्यदोत्थितः खतनुचिन्तयाऽऽशु तया । खित्तो अंतो जलहिं पल्हत्थिअ पत्थरुव्व हहा ॥ ७५ ॥ यतः-"जं चित्ते चिंतेउं जं नवि सुविणेवि पिच्छिउं सक्का । लीलावईण लीलावावारो तंमि कज्जंमि ॥ ७६ ॥" असती प्रतीक्ष्य च चिरात्प्रोच्चैः पूचक्रुषी विषीदन्ती । रे धाह धाह पडिओ मह नाहो इत्थ जलहिंमि ॥७७॥ तद्दुःश्रवश्रवणतः खिन्नाः सर्वेऽपि सर्वतस्तमिह । सोहिंति नहु लहंति अ भट्ठं रयणं व गयपुन्नो ॥ ७८ ॥ असती सतीव तीव्रं विलपन्ती नवनवैः किल विलापैः । अह उट्ठइ मरणट्ठा कयडस्स अहो! परा कट्ठा ॥ ७९ ॥ सर्वेऽपि सुकण्ठाद्यास्तावद्धावन्निवारणायास्याः । जंपंति अ अम्हाणवि कह मरणं काहिसि अकम्हा ? ॥ ८० ॥ दुर्दैवदुर्ललिततः प्रतिकारमनर्हंतस्तु सार्थपतिः । अम्हाण गओ सामी ता तट्ठाणे तुमं चेव ॥ ८१ ॥ सपदि ततोऽकृतमौनं मौनं दधतीव बहिरनीहत्वम् । अंतो हिट्ठा सा पुण कुणइ सुकंठेण गिहवासं ॥ ८२ ॥ दध्यौ ततः सुकण्ठोऽप्यकुण्ठधीः शाठ्यतोऽनया नूनम् । खिविओ जलहिंमि पई कह अन्नह विलसए एवं ?॥ ८३ ॥ धिग् या धृष्टा दौष्ट्यादेवं भूपं च सार्थपं च जहौ । कह सा मह वसि होही को जाणइ महवि किं काही? ॥ ८४ ॥ एवं विरक्तचित्तोऽप्ययं भयेनानुवर्त्तमानस्ताम् । साइणिगहपडिओ इव खिवेइ कालं किअंतंपि ॥ ८५॥ अथ सार्थपः पयोऽन्तः पतितः प्रवहन् कुतोऽप्यसौ फलकम् । पावइ दिव्ववसेणं भव्वुव अपुव्वजिणधम्मं ॥ ८६ ॥ शुभकर्मणेव वेल्लत्कल्लोलैः प्रेरितः सफलकोऽसौ । सिंहलदीवं पत्तो सुत्थो होउं विचिंतेइ ॥ ८७ ॥ यस्याः कृतेऽस्मि निकृतेः स्वामिद्रोहाद्यकृत्यमपि कृतवान् । तीसे इमं सरूवं अणुरूवं वा इमं तीए

यानपात्राणि। पूराविअ पइ जलहिं चलिओ सुक्खासणारूढो ॥ ६१ ॥ पर्यङ्किकाङ्कपालीमालीनोऽनुगमनाय नृपतिरपि। चलिओ तो सा चलिआ असईवि सुहासणासीणा ॥ ६२ ॥ निजबुद्धिसिद्धिहृष्टा धृष्टा निकषा नृपं प्रयान्ती सा । तं पइ जंपइ संपइ महापसाओ कओ पहुणा ॥ ६३ ॥ स्वामिंस्तव प्रसत्तेरुपार्जिता मत्प्रियेण परमर्द्धिः । सवावि कज्जसिद्धी अम्हं जाया तुह पसाया ॥ ६४ ॥ प्रभुबहुमानादथवाऽप्यज्ञानाद्यदपराद्धमिह किञ्चित्। तं खमसु सामि! सुमरिज्जसु निअभिच्चेवि कइआवि ॥ ६५ ॥ राज्ञा कथमिव वणिजः स्मरणीयास्तदपि नाथ! नाथस्त्वम्। कह विम्हारिसि अम्हं हीही असईइ धिट्ठत्तं ॥६६॥ धरणिधवोऽप्यध्यायद्धिग् धिक् पातालवल्लभैवेयम्। पुव्विं व मह भमो वा कह सा एसा कह छइल्ला ॥६७॥ समशीर्षिकया स्पर्द्धाविधेरिवैवं सुखासनत्रितयी। लहु चेव जलहितीरे पत्ता परिवारसंजुत्ता ॥ ६८ ॥ नत्वा पृथिवीनाथं स सार्थनाथः स्वसार्थिकसनाथः। सह तीए आरुहिओ पेरावइ पवहणाणि लहुं ॥ ६९ ॥ नीतानि तानि तेन च पृष्ठागमशङ्कयोदितान्यपथे। नयणमणपवणवेगा चलंति हल्लोहलेणव ॥ ७० ॥ सा षण्मासीमासीद्रक्ता सक्ता च सार्थपे तस्मिन्। तो तस्स अत्थि बंधू जहत्थ नामो सुकंठुत्ति ॥ ७१ ॥ देवरसम्बन्धेनोपहासिनी सुस्वरेण रक्ता सा । सह तेण रमइ गुत्तं अहह! महिलाण चवलत्तं ॥ ७२ ॥ यतः—"कल्लोलादपि बुद्बुदादपि चलद्विद्युद्विलासादपि, जीमूतादपि मारुतादपि तरत्तार्क्ष्यार्द्धपक्षादपि। चित्रं चित्रमियं चला त्रिभुवने किं श्रीर्न ते शेमुषी, नैवं किं खलसङ्गतिर्ननु ननु स्त्रीजातिरस्यै नमः ॥ ७३ ॥" निघ्नाऽथ विघ्नभूतं सार्थपतिं तं विभावयन्तीयम् । चिंतइ मारेमि इमं

गच्छासो परं देसं ॥ ४७॥ प्रत्युक्तिकातरोऽप्ययमवग् नृपः किं न वेदिता विदुरे ! । सा भणई जाइभीरू जुत्तं वणिआ भणिज्जंति ॥४८॥ तदहं विदुरा यदि मे नृपोऽपि सम्प्रेषणाय समुपेयात् । वहणाणि जलहिलंघणपहूणि सुबहूणि सज्जेसु ॥ ४९ ॥ स्वव्यवहारं सर्वं संवृणु सर्वं गृहाण यद्ग्राह्यम् । होहसु निप्पडिबंधो जह बुद्धिं वज्जरेमि तओ ॥५०॥ अतिकातरोऽपि स तथा बन्दिग्राहं गृहीत इव भीतः । जाओ सज्जो धिद्धी कामीणं कामिणिमुहाणं ॥ ५१ ॥ यतः-"स्याच्छैशवे मातृमुखस्तारुण्ये तरुणीमुखः । वार्द्धके तु पुत्रमुखो, मूढो नात्ममुखः क्वचित् ॥५२॥" अथ साऽऽह सौवपित्रा कारणमुद्भाव्य कारणं नृपतिम् । आपुच्छेसु पसन्नं पुण अणुगमणं खु मग्गेसु ॥५३॥ सोऽपि विनीत इव प्राक् प्रतीततद्बुद्धिकौशलस्तदिदम् । पडिवज्जिअ गच्छित्ता विन्नत्तिं विन्नवइ रन्नो॥५४॥देवस्थविरौ पितरौ मम बहुविरहातुरौ सुदूरतरौ । तेसिं लेहो इह आगओत्ति गमणाय पुच्छेमि ॥ ५५ ॥ राजा प्रजाहिततया बहावर्जिततया च तमथोचे । तुम्हारिसाण गमणे कहं अणुन्ना निसेहो वा ? ॥५६॥यतः-"मा गा इत्यपमङ्गलं व्रज इति स्नेहेन हीनं वचः, तिष्ठेति प्रभुता यथारुचि कुरुष्वेत्यप्युदासीनता । किं ते साम्प्रतमाचराम उचितं तत्सोपचारं वचः, प्रस्थानोन्मनसीत्यभीष्टमनुजे वक्तुं न शक्ता वयम् ॥ ५७ ॥ यदि चैकान्तेन भवान् गन्तुमना तत्कथय किमपि कार्यम् । जं संपइ करणिज्जं अहवा पच्छावि पभणेसु ॥ ५८ ॥ सोऽप्यवदद्देव ! तव प्रसादतः सर्वमस्ति सम्पूर्णम् । जइ पुण तं सुपसन्नो तो अणुगमणं कुणसु किंपि ॥ ५९ ॥ देशान्तरेऽपि येन प्रसरेन्मम कीर्त्तिरद्भुता काचित् । तं पडिवन्नं रन्ना गुरुआणं अहह अणुवित्ती ॥ ६० ॥ सार्थेशः सुमुहूर्त्ते ततोऽतिमात्राणि

सा तत्राजन्ममुग्धचित्ता च। एसा एअस्स पिया छेआ पुण तीइ सारिच्छा ॥ ३३ ॥ नयनतिलसर्षपादेरप्य-
न्तरमीक्ष्यते न पुनरनयोः। कह सव्वह तुल्लत्तं को वा जाणेइ इह तत्तं ? ॥ ३४ ॥ कथमत्र निर्णयः स्यादिति नृप
उपलक्षणाय सिचयान्ते। परिवेसिअ जंतीए तीमणबिंदू खिवइ तीए ॥३५॥ नृपगतचित्ता धूर्त्ता तज्ज्ञात्वा प्राह
सा स्वमनसा तम्। इह किं होसि छइल्लो मूढ! बइल्लोऽसि मह पुरओ ॥ ३६ ॥ सा त्वविदतीव सुदती तद्विन्दु-
क्षेपमुपनृपमुपेता। परविंजणेहिं पवणं पकुणंती भणइ भत्तारं ॥ ३७ ॥ भूमान् किमेष विषवन्मुखेऽपि न क्षिपति
भक्ष्यमपि भोज्यम्। वणिआण भोअणं वा कह कह रुचेइ रायाणं ? ॥३८॥ तव भवनस्थं किञ्चिन्नृपतेश्चित्ते चम-
चरिकृयाद्वा। अप्पछुहा व महंता धिट्ठाए अहह वा बुद्धी ॥ ३९ ॥ संशयविस्मयमयतां श्रयति नृपे सार्थपे च
सस्मयताम्। रन्नो दिन्नं तीए ससिअपयं ताविअस्सेव ॥ ४० ॥ निःस्वादमेव मुनिवत्तत्पीत्वा त्वरितमुत्थितः
स ततः। चलिओ तंबूलदुगूलभूसणाई किमवि घित्तुं ॥४१॥ तद्रूपमपरवस्त्रं परिधाय पिधाय मुखमपि प्राग्वत्।
ता पत्ता भूमिहरं सुत्ता सिज्जाइ सा धुत्ता ॥ ४२ ॥ सकलानि तालकानि क्षितिपतिरुद्घाट्य शङ्कितस्वान्तः।
जा गच्छइ भूमिहरे ता पेच्छइ तं सुहपसुत्तं ॥४३॥ दम्भाज्जृम्भादिकृतस्तस्या उत्थाप्य सोऽपरं सिचयम्। अप्प-
अ परिहिअवत्थं मणिआलोए पलोएइ ॥४४॥ सन्मनसीव स ऐक्षत न च तत्कालुष्यमीषदपि तस्मिन्। तो नि-
स्संकिअहिअओ सह तीए विलसइ तहेव ॥४५॥ तत्किमपि धूर्त्तचरितं धूर्त्तैर्धौर्त्याद्विधीयते साक्षात्। जं सच्चम-
सच्चंपि हु नज्जइ सच्चाओ अब्भहिअं ॥४६॥ तत इयमखर्वगर्वं प्रकुर्वती सार्थपेऽतिरज्यंती। साहइ सज्जो होहसु जं

करणात् युक्तं वयमागमिष्यामः ॥९९॥ किन्तु सकृत्तव नेता नेता नः सौहृदं यदि समेयात्। मन्त्र्याद्यखिलव-
लाध्यस्तदुचितभक्तिं किमपि कुर्मः ॥४००॥ अत्रार्थेऽत्यर्थं मयि मुहुर्मुहुः प्रार्थनामिव स कृत्वा। दत्त्वा दिव्याल-
ङ्कृतिवस्त्राद्यमुवाद सादरहृत् ॥ १ ॥ बह्वयोऽपि दिव्यरूपा धन्याः कन्या इमा हि मम मान्याः । तदिमामेकां
परिणय पराणय प्रमदपदमस्मात् ॥ २ ॥ राजन्! राजाऽमात्यादीनां कन्या यथोचितं देयाः। इयतैव हि मे तुष्टि-
र्भर्तृफलं भृत्यकृत्यं यत् ॥ ३ ॥ द्विपां बन्धे वधे युद्धे, दुर्गग्राहे गृहे महे। क्लिश्यन्ते सेवकाः किन्तु, नेतुरेवाखिलं
फलम् ॥४॥ इत्यूचिवानहं भोस्तदा नृपाद्यास्त्वया रयात्प्रेष्याः। भृशमुक्त्वेति विसृष्टः प्रकृष्टबहुमानतस्तेन ॥५॥
आकारणार्थमथ पथदर्शनबहुमानदर्शनार्थं च। प्रजिघाय वैध्यताह्वयमिमं स चात्मप्रतीहारम् ॥ ६ ॥ द्रुतममुनैव
तु दैवतशक्त्या निन्येऽहमिह महीश! ततः। पादावधार्यतां तत्पुरि सन्तो ह्यर्थितार्थकृतः ॥ ७ ॥ तत्संवादि
तदानीमवादि तेनापि वेत्रिणाऽभ्यधिकम्। दिव्यनरे वदति यतः कुतस्तमां स्याद्विसंवादः! ॥८॥ अपि धीसखः
स धूर्त्तः कुधीसखस्तद्विवेद वेदमिव। मन्त्रं हि सुप्रयुक्तं वेत्तुं ब्रह्माऽपि जिह्मात्मा ॥ ९ ॥ उभयोरपि संवादा-
दिति प्रवादात्कृताशयोन्मादात्। नृपसचिवाद्याः सर्वे गन्तुं तत्रोदसुकायन्त ॥१०॥ यमनाम्नाऽपि नृणां भीस्तदा
तु कुतुकं विवक्षवोऽभूवन्। यमगृहमहमहमिकया नृपादयोऽप्यहह लोभमहः ॥ ११ ॥ प्राग्जातदन्तपातव्यथा-
प्रथाऽप्यस्य ऋद्धिगृद्ध्यगदात्। प्रत्यग्राऽप्यत्युग्रा कापि समग्राऽपि दूरमगात् ॥ १२ ॥ सज्जीबभूव भूमानथ भूपा-
त्पूर्वमेव सचिवश्च। सामाजिका अपि मिथस्तथैव दैवप्रहतमतयः ॥ १३ ॥ दिव्यकनीदिव्यबहुद्रव्यविभूषादि-

ताङ्गश्रीः। सात्त्विककष्टात्तुष्टे सुरे किमिष्टं न शिष्टानाम्? ॥ ८५ ॥ वाङ्मनसयोरविषयः काऽपि मयाऽदर्शि तस्य ऋद्धिश्च। का का कथं कथमिति क्षितिपाक्षिप्तः स पुनराख्यत् ॥८६॥ तस्य पुरी संयमनी शक्रपुरीप्रौढिदर्प्पसंयमनी। राजा स धर्म्मराजः प्रजाः पुनस्तत्र पुण्यजनाः ॥ ८७ ॥ ख्याताऽस्य तैजसीति च सभा शुभा ताम्रचूडमथ दण्डम्। लेखनिकां पुस्तकमपि हस्तेषु चतुर्षु स च धत्ते ॥ ८८ ॥ शक्राद्योऽपि देवाः सेवाहेवाकमावहन्त्यस्य। विष्णुब्रह्ममहेशा अपि तत्तुष्ट्यै कृतक्लेशाः ॥ ८९ ॥ योगीन्द्रा अपि योगाभ्यासं भीत्या भजन्ति तस्यैव। किं बहुना त्रिभुवनमपि वनमिव सेक्षुवंशे तस्य ॥ ९० । तस्य च सविता सविता दुस्तमसां प्रसविता प्रणाशमिह। सञ्ज्ञासञ्ज्ञा सञ्ज्ञावतीषु मुख्या पुनर्जननी ॥ ९१ ॥ भ्राता च तस्य शस्यः शनिरशनिरिवातिदुःसहो जगति। मलिनाऽपि विहितविष्टपपवना यमुना पुनर्जामिः ॥ ९२ ॥ धूमोर्णा धूम्रमुखी द्वेष्याणां तस्य पट्टदेवी च। यानं पुनः प्रधानं धीरस्कन्धेषु धौरेयः ॥ ९३ ॥ त्रिजगत्कृतसत्कारस्तस्यायं वैध्यतः प्रतीहारः। चण्डमहाचण्डाविति नाम्ना धाम्ना च दासवरौ ॥९४॥ लिपिकृच्च चित्रगुप्तस्त्रिजगत्सदसच्चरित्रलिपिकर्ता। ऋद्धिः सर्वाङ्गीणाऽप्यनन्यसाधारणाऽस्यैवम् ॥९५॥ तुष्टः स च कल्पतरू रुष्टस्तु कृतान्त एव सत्याह्वः। विश्वप्रभुतालक्षकमक्षूणं लक्षणं ह्येतत् ॥९६॥ लोकेऽप्युक्तम्—"यस्मिन् रुष्टे भयं नास्ति, तुष्टे नास्ति धनागमः। निग्रहानुग्रहौ न स्तः, स जातः किं करिष्यति? ॥९७॥" तां तादृशीं समृद्धिं पश्यन् स्वदृशोरमंसि सफलत्वम्। लोकोऽपि वक्ति भव्यं बहुजीवनतो हि बहुदृष्टम् ॥ ९८ ॥ नाथ! मयाऽथ स युक्त्या निमन्त्रितः प्रीतिपूरितः प्रोचे। अत्यादरस्य

त्री चं शास्त्रमथ शस्त्रम् । चारुत्वाचारुत्वे स्यातामेषां परायत्ते ॥ ७१ ॥ उक्तं हि—"वल्ली नरिंदचित्तं वक्खाणं पाणिअं च महिलाओ । तत्थ य वच्चंति सया जत्थ य धुत्तेहि निज्जंति ॥ ७२ ॥" दुर्मन्त्रिणैव नृपतिर्ज्वर इव विषमेण संनिपातेन । दुष्प्रतिकारस्तत्प्राग् युक्तस्तस्य प्रतीकारः ॥७३॥ दुष्टाशयश्च जीवन्नहिवन्न हि जातु मुञ्चति प्रकृतिम् । तद् ध्रुवमनर्थमूलं समूलमुन्मूलनीयोऽयम् ॥७४॥ काऽस्तु च कृपा कृपालोरपि घात्ये दुर्नयाद्माल्येऽस्मिन् । ननु दमनं दुष्टानां शिष्टानां पालनं न्याय्यम् ॥ ७५ ॥ दम्भप्रपञ्च एवोपायस्तन्निग्रहाय निरपायः । तत्कृतदम्भानुसृतेर्दम्भी दम्भेन यत्साध्यः ॥ ७६ ॥ कवयोऽप्याहुः—"व्रजन्ति ते मूढधियः पराभवं, भवन्ति मायाविषु ये न मायिनः । प्रविश्य हि घ्नन्ति शठास्तथाविधानसंवृताङ्गान्निशिता इवेषवः ॥ ७७ ॥" मन्त्रविदां किल मन्त्रः सर्वत्र श्लाघ्यते चतुष्कर्णः । षट्कर्णोऽप्यस्य पुनः श्लाघ्योऽभूद्भाविसिद्धिफलः ॥ ७८ ॥ षट्कर्णमन्त्रमसाविति कृतपूर्वी स्मृताब्धिसुरसख्यात् । दूष्याभरणैर्दिव्यैर्दिव्यं नव्यं व्यधाद्वेषम् ॥ ७९ ॥ सह रौद्ररूपयमराड्वेत्रिप्रतिरूपदिव्यपुरुषेण । प्रातर्गतश्च नृपतेः पर्षदि हर्षाद्नंसीत्तम् ॥ ८० ॥ हरिमिव दिवोऽवतीर्णं हरिबलमवलोक्य सकललोकयुतः । तादृशवेषवपुष्कं व्यसेष्मयीत् क्ष्मापतिः सोऽन्तः ॥ ८१ ॥ धिग्मन्त्रिवचोऽवद्यं निरवद्यं किन्तु कृत्यमेतस्य । साक्षाद्रक्षापुञ्जीभूतोऽप्ययमाययौ यदिह ॥ ८२ ॥ इति निर्णयता क्षोणीभृता महासाहसिक्य! सहसाऽगाः । कथमिह कोऽयं च पुमानिति पृष्टः सोऽप्यभाषिष्ट ॥८३॥ देहे दहनेनाहं यावादितः पितृपतेः पुरस्तावत् । तत्किङ्करैरनार्यिपि तोषात्तेनोद्जीविषि च ॥ ८४ ॥ तस्य प्रभावभूमेः प्रभावतोऽभूवमङ्गु-

दृढपाशबन्धबन्धनदशनभ्रंशोत्थया महाव्यथया । अथ दुःस्थितः स गाढं मन्द इवामन्दमाक्रन्दन् ॥ ५७ ॥
लालाक्रन्दरदच्युतिभूपाताश्रीकतादिनाऽऽप तदा । स युवाऽपि वार्द्धकं हा लाभेच्छोर्मूलमपि नष्टम् ॥५८॥ उक्तञ्च–
“कतिपयदिवसस्थायिनि मदकारिणि यौवने दुरात्मानः । विदधति तथाऽपराधं जन्मैव यथा वृथा भवति ॥५९॥
परदाररिरंसायामपि ही निबिडं विडम्ब्यते जन्तुः । दृष्टिविषदुष्टविषधरदष्टावपि वा न किं मृत्युः ? ॥ ६० ॥
सङ्क्रन्दनं क्षितेरथ वीक्ष्य कृताक्रन्दनं विगतरदनम् । अतिहीनदीनवदनं कृपया साऽवक् कृपासदनम् ॥ ६१ ॥
तत्तत्परपापपरोऽप्यपारकृपयाऽऽर्द्रया मया त्वरया । अपि मोक्ष्यसेऽत्र न पुनः परत्र दैवेन नरकादौ ॥ ६२ ॥
मा पुनरेवं कार्षीरित्याद्युपदिश्य बन्धनान्यस्य । विनिरस्य तस्य तरसा दुष्कर्माणीव मूर्त्तानि ॥ ६३ ॥ झटिति
ततः सुस्थाङ्गः स्वस्थीभूतः स भूतलस्थोऽपि । यद्वा हरिप्रियायाः प्रसादतः किं सुदुष्प्रापम् ? ॥ ६४ ॥ स्वं बहु
शोचन्नुच्चैरमंदमन्दाक्षमन्दमन्दगतिः । अनुतप्तः सविगुप्तः सुगुप्तमासस्ततः स्वगृहम् ॥ ६५ ॥ अतिवाह्य बाह्य-
सुखदैरौपयिकैस्तां निशां विशां नेता । किञ्चिन्निमिषपिहितमुखः प्रगे ह्रियाऽऽस्थानमास्थितवान् ॥ ६६ ॥ मन्त्र्यास-
तया विदितात्तदुदन्ताद्विदिततत्त्व इव भवतः । भयविस्मयकरुणरसैर्युगपदिवापात्ररूपत्वम् ॥ ६७ ॥ अथ हरि-
बलोऽवलोकितसकलकलत्रातिचित्रतरचरितः । नृपतौ गृहागते सति प्रति प्रिये तत्प्रियं प्राह ॥ ६८ ॥ अनुचित-
कर्त्तुर्नृपतेः समुचितमेवेदमादधे द्वाभ्याम् । आस्फालनविप्लवमृते प्रत्येति न जातु यन्मूर्खः ॥ ६९ ॥ मन्त्री त्वस्य
धरित्रीधवस्य दुर्बुद्धिदानतो दम्भी । कुपथे प्रस्थापयिता रथस्य दुःसारथिर्यद्वत् ॥७०॥ नृपतिर्नरश्च नारी तुरगस्तं-

॥४२॥" तद्विरम विरम विरसात् पररमणीरमणपापतः परमात्। यदनीतिरीतिरीतिप्रतान इव ऋद्धितानवकृत्
॥ ४३ ॥ यदुक्तम्–"सत्यपि सुकृते कर्मणि दुर्नीतिरेवान्तरे श्रियं हरति। तैलेऽनुपभुक्तेऽपि हि दीपशिखां हरति
वाताली ॥ ४४ ॥ श्रेयस्कामेन ततः प्रवर्त्तितव्यं नये न पुनरनये। नय एव सर्वसम्पन्मूलमलङ्कारकश्च नृणाम्
॥ ४५ ॥ यतः–"द्रुमेषु सलिलं सर्पिर्नरेषु मदनं मनः। विद्याखभ्यसनं न्यायः, श्रियामायुः प्रकीर्त्तितम् ॥ ४६ ॥
श्रुतेन बुद्धिः सुकृतेन विज्ञता, मदेन नारी सलिलेन निम्नगा। निशा शशाङ्केन धृतिः समाधिना, नयेन चाल-
ङ्क्रियते नरेन्द्रता ॥ ४७ ॥" इत्यादि नवनवोक्त्या नवनवयुक्त्याऽप्यबोधि नैव नृपः। अभिनवमहाज्वरादौ सदौ-
षधाद्यपि मुधा भवति ॥ ४८ ॥ पृथुमन्मथदुर्व्यथया कथयामासाथ पार्थिवः कथमाः। प्रार्थनपरे नरेन्द्रे मय्य-
प्यधि नानुरज्येथे ॥ ४९ ॥ मा पतिशङ्कां कुरुतां तदर्थमेवास्य भस्मसात्करणात्। युवयोर्नवयोस्तस्माद् गतिर-
हमेवेह रतिहेतुः ॥ ५० ॥ अवले बलादपि युवामबले अवलेपवान् ग्रहीताऽहम्। तत्स्वरसेनागच्छतमतुच्छ एवं
मिथः स्नेहः ॥ ५१ ॥ श्रुत्वेति जगदतुस्ते धिग् धृष्टध्वाङ्क्ष इव निषिद्धोऽपि। कटु रटसि कपटपटुधीर्निकटतटस्थः
कथङ्कारम् ॥ ५२ ॥ अपसर दूरे नो चेल्लभसे रभसेन पापफलमतुलम्। सेत्युक्तोऽहङ्कारात्करोति यावद् बलात्का-
रम् ॥ ५३ ॥ कुसुमश्रिया स तावत् सद्यो विद्याबलेन दृढबन्धैः। तस्करबन्धं बद्धाऽपात्यत पेतुर्यथा दन्ताः ॥ ५४ ॥
॥ ५४ ॥ विशदा वयं सदाऽन्योपकारिणश्चैष सकलुषोऽन्येषाम्। अपकारीति किमेतत्त्यक्त्वा दन्ता गता दूरे
॥ ५५ ॥ दुर्निग्रहोऽप्यनङ्गग्रहः सहाहंकृतिग्रहः सहसा। अतिभीत इव द्विजवरसार्थोऽनश्यत्तदा तस्य ॥ ५६ ॥

द्वयश्च तत्क्षणे स ततः । स्थित्वा काप्यपदोषप्रदोष एव स्वगृहमागात् ॥ २९ ॥ मुदिताभ्यां दयिताभ्यां सुविस्मिताभ्यां कृतस्मिताभ्यां च । सिक्तोऽभूत्तुम्बगताम्रृतेन सुरयच्च दिव्यतनुः ॥ ३० ॥ अन्यकृते कष्टकृतां विपदपि सम्पद्यते सपदि सम्पत् । अगुरोर्न किं गरीयान् दहनाद्गन्धप्रबन्धविधिः ॥ ३१ ॥ यावत्प्रेमालापं तनोति ताभ्यां स तावदावसथे । तत्राजगाम कामं प्रकाममत्तः क्षणात्क्ष्मापः ॥ ३२ ॥ ताभ्यामभ्यायान्तं भूधवमवगत्य पत्युरित्यूचे । गूढं स्थित्वा किञ्चित्कौशलमवलोकय प्रिय ! नौ ॥ ३३ ॥ विहिते तथैव हरिणा हरिणाक्ष्यौ क्षोणिपस्य साक्षेपम् । प्रतिपत्तिमासनाद्यां दक्षे न्यक्षामरक्षाताम् ॥ ३४ ॥ पप्रच्छतुश्च सम्प्रति किमागमो देव ! देवपादानाम् । सोऽप्याह ग्रहिल इव स्वयं हसच्छल्लसंश्च भृशम् ॥ ३५ ॥ कामिन्यौ मानिन्यौ नो जानाथे कथं पृथूत्कण्ठः । आनेतुमागतोऽहं युवा युवामिह निजावासे ॥ ३६ ॥ ते प्राहतुस्ततस्तं नेतस्तव नेति युज्यते वक्तुम् । सेवकजनस्य जनकः पोषकृते यत्प्रभुः प्रथितः ॥३७॥ पररमणी सुररमणीरमणीयाऽप्याशु सुपरिहरणीया । सेवकरमणी तु नृणां स्नुषेव दूराद्विशेषेण ॥ ३८ ॥ राजा भवेत्प्रजानां दण्डविधानादकृत्यविनिवारी । यदि सोऽप्यकृत्यकारी विनिवारी तर्हि कस्तासाम् ? ॥ ३९ ॥ यामिकतस्तास्कर्य धाटीपातश्च रक्षकनरेभ्यः । पानीयतः प्रदीपनमिदं तमःप्रसरणं तरणेः ॥ ४० ॥ तव कोऽयमसद्ग्रह इह मामेते यद्धुत कामयिष्येते । प्राणान्तेऽपि हि नावां शीलं कलुषीकरिष्यावः ॥ ४१ ॥ यतः—"वरं शृङ्गोत्तुङ्गाद्गुरुशिखरिणः क्वापि विषमे, पतित्वाऽयं कायः कठिनदृषदन्तर्विदलितः । वरं न्यस्तो हस्तः फणिपतिमुखे तीक्ष्णदशने, वरं वह्नौ पातस्तदपि न कृतः शीलविलयः

मिति विभोर्वचनम् । सचिवप्रपञ्चरचनं निश्चित्य स चिन्तयांचकृवान् ॥ १५ ॥ प्राग्वदुष्टं न्यदिशत्क्ष्मापः पापस्य धीसखस्य धिया । धिग् भुक्तिसत्कृतिफलं यद्वा युक्तं कुपात्रेऽदः ॥ १६ ॥ यदुक्तम्—"उपकृतिरेव खलानां दोषस्य महीयसो भवति हेतुः । अनुकूलाचरणेन हि कुप्यन्ति व्याधयोऽत्यर्थम् ॥१७॥ प्रागुक्तकथा वितथा मा भूदित्यभ्युपेत्य भूपोक्तम् । काञ्चिद्विचिन्त्य च धियं न्यवेदयद्दयितयोः स ततः ॥ १८ ॥ प्राग्वारणात्तु ताभ्यां किमप्युपालभ्य सभ्यमभ्युदितम् । आधास्यावः स्वधिया साधुतरं त्वं चिरं जीव ॥ १९ ॥ अथ पार्थिवः पुराद्बहिरचीकरद्दारुभिश्चितां निचिताम् । प्रज्वलितां ज्वालयितुं यशःशरीरं स्वमिव सर्वम् ॥ २० ॥ बहुमानं दर्शयितुं प्रत्याययितुं परांश्च सपरिकरौ । अथ तं संप्रेषयितुं समीयतुः क्षितिपमन्त्रिपत्नी ॥ २१ ॥ किमिदं विदुम्भमथवा सदम्भमतिसम्भ्रमेण सममिलत । तत्र च विचित्रवचनाः पौरजनाः प्रेक्षितुं कुतुकम् ॥ २२ ॥ तारक इव नवपयसः पूरे दूरेण पश्यतां तेषाम् । किञ्चित्प्रविचिन्त्य चितावह्नावह्नाय स विवेश ॥ २३ ॥ तैः स्पष्टमेष दृष्टः प्रविष्टमात्रश्च भस्मसाद्भूतः । हाहारवाश्रुपातैः शुचा मुदा त्वधिपसचिवाभ्याम् ॥ २४ ॥ हरिहारिहरिबलनामा हरिधामा धीरवीरकोटीरः । कपटेनानेन मुधा वसुधाधीशेन दग्धः किम् ? ॥ २५ ॥ आ ज्ञातमस्य लक्ष्मीललनालुब्धो ध्रुवं व्यधादधिपः । दुर्धीसखधीसख्यादीदक्षं धिगधमद्वितयीम् ॥ २६ ॥ इत्यादि तदैव तयोर्निन्दाद्वैतं जनेऽजनिष्ट यतः । प्रसरीसरीति दुर्गन्धवदुग्रं हार्दमपि पापम् ॥ २७ ॥ हरिरथ संस्मृतजलनिधिसुरसन्निधितो मनागपि न दग्धः । प्रत्युतजात्योत्तमस्वर्णमिवोद्दीप्रदीप्तिरभूत् ॥ २८ ॥ अञ्जनसिद्ध इवाजनि जनैरद-

रिवारम्। मन्त्र्यादिकैरपि समं निमन्त्रयामास सोल्लासः॥१॥युग्मम् ॥ भुक्तिसमये च ताभ्यां नवनवचेषान् विधाय सविशेषान्। परिवेषणादि विदधे स्वकौशलं दर्शयितुमतुलम् ॥ २ ॥ प्रेतग्रहश्छलाद्तिदौःस्थ्यादाधिः कुपथ्यतो व्याधिः। कुनयात्कुयशः कोपः कटूक्तितः शोक इष्टमृतेः ॥ ३ ॥ जलदनिनदादलर्कश्वाविषमनिलाच्च वह्निरिव राज्ञः। तद्दर्शनान्मनोभूः प्रादुरभूदप्यसन् प्रायः ॥ ४ ॥ युग्मम् ॥ इयतीः सुदतीः कौतस्कुतीः कृती प्रासवान् प्रतीते तु। द्वे एव हन्म्यसुं चेदिमास्तदानीं मदायत्ताः ॥ ५ ॥ इति तर्कात् कर्कशहृद्दुक्तोऽसौ सत्कृतः स्वसद्मगतः। भावं विभाव्य जगदे दुर्मतिसचिवेन सचिवेन ॥ ६ ॥ कृतरतिपोषे योषे इमे उभे एव देव! जानीयाः। अनुरक्ते भक्ति तव नवनववेषैस्त्वपूपुषताम् ॥ ७ ॥ तच्छ्रवणाद्धरणिधवो द्विगुणरणरणकमुद्गृणन्नगृणात्। मन्त्रिन्! मन्त्रय हरिस्मृत्यूपायमायतिहितं तर्हि ॥ ८ ॥ खल इव लब्धावसरः सचिवः प्रोवाच देव! हरिवचनम्। वञ्चनपरं नृणां यत् क्व जीवनं प्रविशतो ज्वलनम्? ॥ ९ ॥ यमराजाह्वानमिषादक्षेपात् क्षिप्यते तदग्नौ सः। अषडक्षीणं क्षोणीरमणोऽप्यनुभणितवांस्तादिदम् ॥ १० ॥ धिग् धिग् धृष्टान् दुष्टान् पापिष्ठानवमतान्यभवकष्टान्। ये दुर्धियः परेभ्योऽप्यासतया दुर्धियं ददते ॥ ११ ॥ हरिमाह्वाय्य नरेन्द्रोऽन्यदाऽवदद् युज्यते न ते सुहृदः। आदेष्टुं तदपि वदाम्यनन्यसाध्यं हि नः साध्यम् ॥ १२ ॥ निमिमन्त्रयिषोऽसि यमं समं सुरैः किङ्करैरिहोद्वाहे। वह्निप्रवेशसाध्यं सिद्ध्यति तत्किन्तु भवतैव ॥ १३ ॥ सिंहस्य साहसजुषः सुजनस्य घनाघनस्य शशिनश्च। भानोश्च बृहद्भानोरनन्यसाधारणी शक्तिः ॥ १४ ॥ सात्त्विकमुकुट! प्रागिव तत्साधय साध्य-

साहसमहो ! अहो ! प्रतिज्ञातनिर्वाहः ॥ ८७ ॥ सौभाग्यभाग्यसङ्गतिरहो ! अहो ! अस्पृहा ! निजार्थेऽस्य । स्वस्वामिकृत्यकौशलमहो ! अहो ! मे सुहृत्परमः ॥ ८८ ॥ श्लाघामनघां घोषन् क्षितिपतिरिति सचकार सारतरैः । तं दुष्यभूषणाद्यैः प्रजिघाय गृहं स बहुमहम् ॥ ८९ ॥ तात्त्विकवृत्तिर्धर्मे सात्त्विकवृत्तिश्च विषमकार्येषु । किं वा कामगवीवत्काभितममितं तनोति नहि ॥ ९० ॥ तस्येत्यसमसमृद्धिं दर्शं दर्शं स्पृहावहां बहुशः । तत्कृतकृत्याकरणात्सदा निनिन्दुः सदस्याः स्वम् ॥ ९१ ॥ अपि कातरः प्रवीरावदातमवदातसम्पदं पश्यन् । लभतेऽम्लिकाविलोककदन्तोदकसंप्लवायिततताम् ॥ ९२ ॥ तत्प्रभृतिनृपतिपरमप्रसादपात्रस्य तस्य किमपि यशः। तद्भूयद्भूरिनुतौ पुरमखिलं सुखमुखमासीत् ॥ ९३ ॥ कोपो भयेन लोभोदयेन मानः सुखेन दुःखमिव । स्नेहः कलहेन मदेन शुग् विषादश्च हर्षेण ॥ ९४ ॥ कामग्रहोऽतितीव्रोऽन्तरितस्तद्वृत्तविस्मयरसेन । अवनिपतेरजनि ततः शनैः शनैर्मन्दमन्दतरः ॥ ९५ ॥ युग्मम् ॥ सङ्कल्पयोनिजन्मनि मूलं सङ्कल्प एव नत्वन्यत् । सङ्कल्पस्य विकल्पान्तरेण नाशो तु सोऽस्तु कुतः ? ॥ ९६ ॥ यदुक्तम्—"काम ! जानामि ते रूपं, सङ्कल्पात् किल जायसे । न त्वां सङ्कल्पयिष्यामि, न च मे त्वं भविष्यसि ॥ ९७ ॥ स रतिप्रीतिरताभ्यां ताभ्यां द्वाभ्यां द्विधा प्रियतमाभ्यां । सरतिप्रीतिः स्मर इव हरिरशुभदलक्ष्यचरितोऽसौ ॥९८॥ असहिष्णुरिमं हरिबलमहिमानममानमत्सरः सचिवः। दौष्ट्याद् भूविभुभुक्त्यै युक्त्यैनं प्रेरयन्नितराम् ॥९९॥ बहुबहुमानावर्जितमना मनाग्मुग्धधीः कदाचिद्थ। अपि वारितः प्रियाभ्यां प्रचकल्प स समग्रसामग्रीम् ॥३००॥ अविभाव्य भाव्यनर्थं भुक्त्यर्थं पार्थिवं सप-

नृपेन्द्र! तद्रूप एव देव इव। स भृशं प्रशंसनपरः परमाग्रहतः सुतां प्रादात् ॥ ७३ ॥ तेनैव तेन महता महेन वीवाह आवयोर्नवयोः। प्रददे च दिव्यदूष्याभरणद्रविणादि बहु मह्यम् ॥ ७४ ॥ करमोचने च तस्याः समाद्देऽश्वीयहास्तिकादि न तु। अपि दीयमानमत्रागमनप्रतिबन्धहेतुत्वात् ॥ ७५ ॥ अत्रैव निवस साधय विद्यां विद्याधरीभवाभिनवाम्। भुङ्क्ष्व च भोगानपि नववल्लभयाऽभिनवभवनेषु ॥ ७६ ॥ इति खेचरेश्वरे बंभणति भणामि स्म निजसुतविवाहे। त्वां देव! निमन्त्रयितुं प्रहितोऽस्मि विशालपुरपतिना ॥ ७७ ॥ शिथिलीकृत्य ततस्तत्कृत्यमहं कथमिवेह तिष्ठेयम्?। निष्ठेयं खलु महतां परकृत्यकृते स्वकृत्यहतिः ॥ ७८ ॥ सद्यः प्रसद्य तन्नः पावय पादावधारणेन पुरम्। सोऽप्याह याहि तर्हि स्वयमेष्यामोऽहि वैवाहे ॥ ७९ ॥ एतद्विषये राज्ञाऽभिज्ञानमदस्त्वमर्पयेरितिवाक्। स्वं चन्द्रहासखड्गं ममार्पयामास दिव्यमसौ ॥ ८० ॥ तेनैव दैवशक्त्या संप्रैषि सप्रियोऽप्यहमिहाशु। हरिरित्युक्त्वा प्रददे नृपाय निपुणः कृपाणं तम् ॥ ८१ ॥ तादृक्कन्याखड्गाभिज्ञानात्तत्तदुक्तियुक्त्या च। मेनेऽखिलमपि नृपतिस्तत्सत्यासत्यमपि सत्यम् ॥ ८२ ॥ सत्याधारमसत्यं सत्यं प्रत्येति सत्यमेव जनः। कर्पूरपूरमिलितं कर्पूरतयैव रेणुगणम् ॥ ८३ ॥ काणः काक इवैको धूर्त्तो मन्त्री न तद्वचो मेने। मनसा वचसा तु न सोऽप्यपाचकार च्छलालाभात् ॥ ८४ ॥ नृपसर्पपिशुनचौरक्षुद्रसुरश्वापदारिशाकिन्यः। दुष्टा अपि किं कुर्युश्छलं विना निष्फलारम्भाः ॥ ८५ ॥ पङ्कपदादतिविकटे क्षिप्तोऽसौ सङ्कटे मया कुधिया। मद्वञ्चनकृते भस्मीभूतस्त्वयमुत्तमत्वमहो! ॥ ८६ ॥ सन्मान्यतमस्तदयं विचिन्तयन्नेवमवनिपः सभ्यान्। प्रत्याह

स लोलः क्ष्मापालश्चुक्षुभे यदभ्यधिकम् । सहसैव हरिबलस्यागमने तत् किमपि नहि भ(न)व्यम् ॥५९॥ धार्ष्ट्य-
मवष्टभ्य पुनः कुतो भयं मेऽकुतोभयस्य ततः । बहुमानदानपूर्वं हरिं निरीक्षे परीक्षेऽपि ॥ ६० ॥ ध्यायन्निति
गुरुकृत्यं कृतमेतेनेति तं युतं प्रियया । प्रावीविशद्विशांपतिरतुच्छमहिमोत्सवैः स्वपुरम् ॥ ६१ ॥ प्राप्रय सोऽपि
जायाद्वयं स्वसौधं च सौधरसतुल्यम् । नृपसभमागत्य नृपं तत्रैव दैवतमिवानतवान् ॥ ६२ ॥ बहु सत्कृत्य स
राज्ञा पृष्टोऽभाषिष्ट शिष्टधीः स्पष्टम् । कष्टात्प्रभो ! प्रकृष्टात्कृतपूर्वी कृत्यमत्रागाम् ॥ ६३ ॥ तथाहि—चलितोऽ-
हमितः कतिचिद् दिवसैः सन्निधिमपांनिधेः प्रापम् । तं दुस्तरं तरीतुं त्वशक्नुवान् बाढमुद्विविजे ॥ ६४ ॥ ताव-
द्राद्यौ राक्षसमभिमुखमायान्तमेकमद्राक्षम् । नास्राक्षं भयमथ तं लङ्कास्यौपयिकमप्राक्षम् ॥ ६५ ॥ सोऽप्या-
ख्यद्यः पुरुषः पौरुषतः काष्ठभक्षणं कुर्यात् । तस्यैव हि लङ्कायां भवेत्प्रवेशश्च मानश्च ॥ ६६ ॥ विनिशम्येति
व्यमृशं निश्चयिकं निधनमत्र सांशयिकम् । लङ्कागमनं तु तदप्यवश्यकृत्यं प्रभोः कृत्यम् ॥ ६७ ॥ धिक् सेवक-
ध्रुवं तं यः प्रभुकृत्ये विभेति बत मृतितः । कार्याशयाऽपि मरणं श्लाघाकरणं हि सुभटानाम् ॥ ६८ ॥ इत्युरसि-
कृत्य सत्यप्रतिपत्तिरहं विचिन्त्य मृत्युचिताम् । महतीं चितां नितान्तं हुताशमुदीपयामास ॥ ६९ ॥ इह सहसा
साहसतः प्राविशमचिराच्च भस्मसाद्भवम् । कः स्यात्कालविलम्बः प्रज्वलने जाज्वलज्ज्वलने ॥ ७० ॥ तद्भस्म-
विस्मयास्पदमुपदेवादाय वृत्तमभिधाय । व्यक्तं मुक्तं नक्तंचरेण खचरेशितुः पुरतः ॥७१॥ सात्त्विकवृत्त्याऽद्भुतया
तयाऽतितुष्टः स्वशक्तितः स नृपः । स्मरमिव भस्मीभूतं भूतपतिर्मामुदजिजीवत् ॥ ७२ ॥ तत्समयमुत्थिते मयि

१०गाथा-
यां हिंसा-
त्यागे हरि-
बलवृत्तं
२४५-२७२

लिततनुयष्टिरिष्टगीस्तस्मै । स्वागतपृच्छापूर्वं सर्वं सा प्राह नृपवृत्तम् ॥ ४५ ॥ सोऽपि च निजवृत्तान्तं प्रस्थानविधेर्गृहागमप्रान्तम् । कथयामास यथार्थं प्रेमस्थाने हि किं गोप्यम् ? ॥ ४६ ॥ रसवशतः सहसोक्त्वा कुसुमश्रीस्वीकृतिं कृती सोऽस्याः । आशङ्क्य मनसि विकृतिं स्वस्याकृत धिक्कृतिं यावत् ॥ ४७ ॥ तावद्वादीदेषा निःशेषानन्दकन्दलितदेहा । सा सुभगा मद्भगिनी वनीस्थिता किमिह नानीता ? ॥४८॥ उत्कण्ठुला मिमेलिषुरहमस्यायामि संमुखमिदानीम् । विपरीतलक्षणेयं किमुताविपरीतमेवेदम् ॥ ४९ ॥ स्वहृदीति संदिहाने पत्यौ सत्यौचितीकृते साऽवक् । त्यज निजमिह सन्देहं स्नेहं सम्यग् हृदि वहेऽहम् ॥५०॥ द्रुह्यन्ति मुधा मूढा मिथः फलं स्वस्वकर्मवशमिह यत् । उक्त्वेत्यनुपतिमगमत् सा सुमुखी संमुखममुष्याः ॥५१॥ तामायान्तीं दृष्ट्वा हृष्टा पर्युल्ललास सहसा सा । विकसितिरुचिता कुसुमश्रियो वसन्तश्रियो योगे ॥ ५२ ॥ ते पदपतनालिङ्गनकुशलप्रश्नादिभिर्मिथश्च तथा । सप्रेम समगसातां यथाऽऽप्तुतां सत्यभगिनीत्वम् ॥ ५३ ॥ न सपत्नी स्वसपत्नीमपि सौदर्यामजर्यतः खिद्येत् । ते तु विजातीये अप्यतिस्नेहावहह पतिभाग्यम् ॥ ५४ ॥ ताभ्यां सहितः स्वहितं किमपि विमृश्य प्रकाश्य किञ्चिदसौ । कश्चित् पुरुषं प्रैषीत् स्वागमनज्ञप्तये राज्ञः ॥ ५५ ॥ गत्वा सोऽपि बभाषे विभीषणं नृप ! निमन्त्र्य तत्पुत्रीम् । परिणीयोपवनमिह प्रापदहो ! हरिबलः कुशली ॥ ५६ ॥ वाक्येन कर्णजाहावगाहिनाऽनेन निहत इव हतधीः । दध्यौ धराधवोऽन्यद्ध्यातं जातं तु धिगिहान्यत् ॥ ५७ ॥ कथमयमगमल्लङ्कामलभत लङ्कापतेः सुतां च कथम् ? । सत्यमसत्यमुतेदं सम्प्रति कर्त्ताऽसि हा ! किमहम् ? ॥५८॥ शिशुपाल इव

रमणि! रमणं ते। मरणार्थमेव विषमे कार्यमिषात्सङ्कटेऽक्षैप्सम् ॥३१॥ क्व च तस्य जीवितव्यं वार्द्ध्यन्तर्निपततः प्रतिज्ञातः। तद्भ्रष्टश्चेत् पश्चादागन्ता तर्हि हन्ताऽस्मि ॥ ३२ ॥ अयमारेभे दम्भारम्भो रम्भोरु! बत तवैवार्थे। स्वीकुरु तत्तरसा मां धिक्कामान्धान् स्वगोप्यभिदः ॥ ३३ ॥ उक्तं हि–"कुविअस्स आउरस्स य वसणासत्तस्स रायरत्तस्स। मत्तस्स मरंतस्स य सब्भावा पायडा हुंति ॥ ३४ ॥" अशुभस्य कालहरणं शुभकरणं सा विभाव्य तदनु जगौ। केयं त्वरा नराधिप! कराग्रगे काम्यकृत्येऽस्मिन् ॥ ३५ ॥ तच्छुद्धिनिर्णयावधि विधाय धैर्यं प्रभो! प्रतीक्षध्वम्। अत्यौत्सुक्यं श्रेयः प्राप्तमपि त्रासयत्यचिरात् ॥ ३६ ॥ उर्वीशोऽप्यविमृशन्मद्भ्रश्यैवेयमपि तु पतिमृत्योः। निर्णयमपेक्षते तत्तं कुर्वे कपटवृत्त्याऽपि ॥ ३७ ॥ तदुपायमायतिहितं सपदि विदध्यामिदं हृदि ध्यात्वा। वचनमनुमत्य तस्याः पुण्यैः प्रहितोऽनुगृहमगमत् ॥ ३८ ॥ साऽपि स्वबुद्धिकौशलपालितशीला व्यलोकतानुकलम्। आगमनं निजभर्त्तुस्तोयमुचश्चातकीवोत्का ॥ ३९ ॥ अथ हरिबलः स्वकगृहस्वरूपविनिरूपणाय निपुणात्मा। कुसुमश्रियमुद्याने विमुच्य कुसुमश्रियः स्थाने ॥ ४० ॥ स्पश इव सुनिभृतवृत्त्या समेत्य निजभवनसंनिधौ क्वचन। गुप्तस्थितिरश्रौषीत् सखीमभि स्वप्रियां ब्रुवतीम् ॥ ४१ ॥ युग्मम् ॥ चिरयन्प्रेयान्नायात्यद्यापि नृपस्तु कपटतः स्फुटयन्। तदमङ्गलगिरमत्रागन्ता चेत्का गतिस्तन्मे ? ॥ ४२ ॥ आधास्ये किमतः परमुत्तरमिह शीलमाः कथं धास्ये ?। प्राणप्रहाणमेव हि शरणीकरणीयमिदमर्थे ॥४३॥ श्रुत्वा स इति सतीत्वाव्यभिचरिते निश्चये प्रियाचरिते। अतितुष्टः प्रकटोऽभूज्झटिति यदिष्टं शुभमिवास्याः ॥ ४४ ॥ सुविपुलपुलकोत्कलिकाक-

लक्षकशब्दैर्दूत्येत्ययमाशयमकृत लक्ष्यमथ ॥ १७ ॥ अथ मन्मथव्यथावान् मुखेन मणीस्पृहणीय उत्तमा त्वं च । लक्षकशब्दैर्दूत्येत्ययमाशयमकृत लक्ष्यमथ ॥ १८ ॥ तदभिप्रायस्तस्या दहनदूत्या अवाच्यमपि वाच्यम् । कृतवान् स्वाकूतमसौ स्मराब्धिपूरस्य वृद्धिरहो ! ॥ १९ ॥ समधिकतापस्तु तथा व्यप्रायः श्रुतेः पथा प्रविशन् । देहं ददाह नहि यत् प्रागन्तः सहनमिह हेतुः ॥ २० ॥ प्रत्यावृत्त्य च दूत्या क्षित्याः थाप्रथामादधे यथा नैनाम् । बुद्धिबलसलिलमहरद्दूत्युत्तरजडधियस्तस्याः ॥ २१ ॥ कामिजनकामधेनौ यामिपत्युर्निवेदितेऽथ तथा । अनिषिद्धमनुमतं स्यादित्यासीत् प्रमुदितात्मा सः ॥ २२ ॥ कामं कामार्तस्तां विन्यामथ च चौर इव निभृतम् । स मदनवेगवशोऽस्याः सदनमगान्मदनवेगन्टपः ॥ २३ ॥ अन्तर्द्वेषविषादौ संवृत्य लोक्य परमप्रमोदमयमदधात् । युक्तमयुक्तं तु सती साऽप्येतद्दर्शनात्तमधात् ॥ २४ ॥ मय्यपि महाननुग्रह इह यविवृत्य विभ्रमं च मनाक् । आसनदानाद्युचितप्रतिपत्तिं व्यधित सा नृपतेः ॥२५॥ संवाद एव सततं तनुवचनमनस्सुत्पादावधारणं विदधे । इत्याद्युक्त्याऽऽदातिमप्यदीदशद्धीरहो सुदृशः ॥ २६ ॥ सत्यप्यसतीचेष्टितमसृष्ट कष्टं स्वशीलशस्यते सत्याः । तस्यास्त्वभूत् प्रशस्यो भृशं विसंवाद एव तदा ॥ २७ ॥ सोऽथ कृतार्थमन्योऽभ्यधत्त धन्येऽवरोधमानेपुष्ट्यै सा । किमशुचिसङ्गं कुरुते न केतकी सौरभसमृद्ध्यै ॥२८॥ छेकोक्त्या साप्यवदन्नृदेव ! देवेन सत्यमुक्तामितुम् । त्वामागतोऽस्मि न यतो भाति विना काञ्चनं रत्नम् ॥२९॥ भर्त्तरि चिन्ताकर्त्तरि सति किन्तु कथं नु युज्यते तदिदम् । परमप्रियं महाहितहेतुः श्रुतिगोचरीचक्रे ॥ ३० ॥ स विहस्य रहस्यमपि प्रकाशयन्नाहदम् । उदयश्रीरपि भास्वति भास्वति सति भजति न मृगाङ्कम् ॥ ३० ॥

गमननिमन्त्रणकृत्यप्रत्यायनाय नृपतेस्तु । सत्यप्रत्ययमस्माद्राज्ञोऽभिज्ञानमानेष्ये ॥ ३ ॥ इत्यभिधाय विधाय च कञ्चिदुपायं तदैव निरपायम् । कृतचन्द्रहासवदना नृपसदनाचन्द्रहासमसिम् ॥ ४ ॥ विज्ञाऽभिज्ञानकृते सुगुसमानीय साऽर्पयत्पत्यै । साधयते दुस्साधं सबलैरबलाऽपि मध्यगता ॥ ५ ॥ युग्मम् ॥ तद्बुद्धिकर्मकौशलचमत्कृतस्तत्कृपाणमादाय । सह सहचर्या निजगृहगृहीतसारश्रिया स तया ॥ ६ ॥ लात्वा तदमृततुम्बं सिद्धरसस्यैव तुम्बमविलम्बम् । योगीन्द्र इव युतोऽद्भुतशक्त्या निरगादथ नगर्याः ॥ ७ ॥ युगलम् ॥ अनिमिषमनिमिषवपुषं वृषभमिवोपस्थितं स्मृतेरेव । गौरीगौरीशाविव तावध्यारुरुहतुः सहसा ॥ ८ ॥ अथ पथि मिथः कुतूहलकलनैकरसौ विशालपुरविपिने । तौ स्त्रीपुंसौ प्रकटिततथाऽऽशयौ तेन निन्याते ॥ ९ ॥ हरिबलचलनानन्तरमवनिपतिर्यञ्चकार सविकारः । निजधाम्नि वसन्तश्रीग्रहणाय भणामि तदिदानीम् ॥ १० ॥ प्रीतस्ततः प्रहितवान् दासीर्दासीकृतः स्मरेण नृपः । नवनवसुवस्तुहस्ता हरिबलललनां प्रसादयितुम् ॥ ११ ॥ अन्तश्चित्तं किञ्चिद्विचार्य सोवाच ताः प्रति प्रथमम् । प्रेषयति किमिति नृपतिर्नवनववस्तूनि मद्भवने ॥ १२ ॥ प्राक् शिक्षिताभिराभिर्बभणे निपुणे ! न वेत्सि तव भर्त्ता । नृपतेः प्रसादपात्रं प्रहितश्च नृपेण निजकार्ये ॥ १३ ॥ उचितां तद्गृहचिन्तां तत्तनुते नृपतिरिति वचः श्रुत्वा । वैयाग्रं सम्प्रेषणमथ चौरं प्राहरिककर्म ॥ १४ ॥ पयसश्चिन्तनमोतोरिदं विदन्त्यप्युपाददे सर्वम् । सुमहान् प्रसाद इति वाक् कामान्धा वञ्चनार्हा यत् ॥ १५ ॥ युग्मम् ॥ एवं वस्तुप्रेषणकुशलप्रश्नादिना दिनाः कतिचित् । आशावशतो व्यङ्ग्याशयेन खलु निन्यिरे राज्ञा ॥ १६ ॥ राजाऽहमुत्तमोत्तमर-

चण्डात्तस्माद्दूरं निनङ्क्षुमाक्षेपात्। मां तु स बन्धधृतामिव नित्यं निरुणद्धि दुर्बुद्धिः ॥ ८९ ॥ निःशूकहृत्प्रकृत्या
कृत्यायितविधया सपद्यपि माम्। कृत्वा मृतामिव बहिः स यात्यनार्यः स्वकार्ये च ॥ ९० ॥ गृहमागतश्च पुनर-
यमेतस्मात्तुम्बतोऽमृतं लात्वा। सिक्त्वा किल मां त्वमिव प्रोज्जीवयति स्वकृत्यकृते ॥ ९१ ॥ ईदृग्विषमनिमग्ना
कथमपि मृतिमप्यभीप्सुरहमस्मि। समुचितमनुचितकृत्याचरणात्प्राणप्रहाणमपि ॥९२॥ त्वां प्रार्थये च किञ्चित्
प्रार्थितकल्पद्रुमाद्रियथाश्चेत्। प्रार्थितसमर्थनं खलु मूलप्राणाः सुगुणतायाः ॥ ९३ ॥ तदुक्तम्–"दुक्खाण एउ दु-
क्खं गुरुअं गुरुआण हियमज्झंमि। जंपि परो पत्थिज्जइ जंपि परे पत्थणाभंगो ॥ ९४ ॥" मामनुरक्तां पाणि-
ग्रहणविधेरनुगृहाण सुभगाग्र्य ! । यस्याः प्राक्तनपुण्यैराकृष्ट इवात्र समगंस्थाः ॥ ९५ ॥ मम जीवितमप्येवं
स्याद्दत्तं त्वद्वशं च मच्चित्तम्। सम्प्रति च लग्नवेलाऽप्यतुला तदलं विलम्ब्य विभो ! ॥ ९६ ॥ स च तस्यास्तद्व-
चनं निशम्य सम्यग् वितर्कयांचकृवान्। अहह ! महिमा महीयान् सकृत्कृताया अपि कृपायाः ॥ ९७ ॥
अधरीकृतामरीश्रीर्यत्खचरीसुन्दरी परीरम्भम्। उररीचरीकरीत्यपि खचरपरीहारतो मेऽपि ॥ ९८ ॥ अहह मह-
द्भाग्यमहो ममेति मुदितस्तदेव दैवतवत्। तां मानयन्ननैषीत् पाणीकृत्य प्रसक्तिपदम् ॥ ९९ ॥ सस्नेहमाह
साऽप्यथ हरिमिह ते जीवितेश ! शिवमिच्छोः। पापस्थानक इव वै न साम्प्रतं साम्प्रतं स्थातुम् ॥ २०० ॥ मा
जातु पुष्पबटुकः कोपाटोपादनर्थमपि कार्षीत्। ज्ञात्वेदमतः प्रस्थीयतामितः स्थानतस्त्वरितम् ॥ २०१ ॥ अल-
मफलेन विभीषणनिमन्त्रणेनापि यन्मनुजकार्ये। खचरेन्द्रा इन्द्रा इव नायान्ति यथा तथा क्वचन ॥२०२॥ अत्रा-

कृतां स्थितो धुरि हरिबलनामाऽसि मान्यतमः ॥७५॥ लङ्काविभोर्विभीषणनाम्नो राज्ञो निमन्त्रणार्थमिह् । प्रहितः
प्रापं दिव्यानुभावतो मीनयानस्थः ॥७६॥ अथ कथय यथाऽवस्थितवृत्तं त्वमपीति तेन सा प्रोक्ता । प्रोचे प्राच्य-
प्रणयादिवोद्भवत्परमरोमाञ्चा ॥ ७७ ॥ लङ्कापतेः पिता मे पुष्पानयनाय देवतायतने । पुष्पवटुकः प्रकृत्या कटुकः
कटुकर्मकर्त्ता च ॥ ७८ ॥ कुसुमश्रीसुकुमारा कुसुमश्रीर्नामतोऽस्मि तनुजाऽस्य । विषहारिणी विषभृतो मणिरिव
भवविषमरीतिरहो ! ॥ ७९ ॥ पित्रान्येद्युः सामुद्रिककुशलः पृष्ट इत्यभापिष्ट । अस्याः सुलक्षणायाः पतिः
पृथिव्याः पतिर्भविता ॥ ८० ॥ यदुक्तम्–"भृङ्गारासनवाजिकुञ्जररथश्रीवत्सयूपेपुभिर्मालाचामरकुण्डलाङ्कुशयवैः
शैलैर्ध्वजैस्तोमरैः । मत्स्यस्वस्तिकवेदिकाव्यजनकैः शङ्खातपत्राम्बुजैः, पादे पाणितले नरा नृपतयो राज्यो
भवन्ति स्त्रियः ॥ ८१ ॥ यद्भाले स्यात् त्रिशूलं सा, स्वामिन्यखिलयोषिताम् । हसन्त्याः स्वस्तिको यस्या, भाले
दृश्येत साऽपि च ॥ ८२ ॥ अन्तर्भुवो ललाटे वा, मशकेन रमान्विता । राज्ञी चापि कपोले च, वामे मिष्टान्नधी-
र्भवेत् ॥ ८३ ॥ हृदि तिलकलाञ्छने वा रक्ताभे धान्यधनसुखोपेता । राज्ञोऽम्बा पत्नी वा लोहितमशकान्नसाग्र-
जुपः ॥८४॥ श्रुत्वेति राज्यलोभादियेष मामेष मेष इव मूर्खः । उद्वोढुं धिग् लोभान्धमुन्मार्गैकगमनपरम् ॥८५॥
'रत्तिंधा दीहंधा जच्चंधा मायमाणकोवंधा । कामंधा लोहंधा इमे कमेणं विसेसंधा ॥ ८६ ॥ लोभः सर्वविनाशी-
त्यनिवर्त्तितदेकदुर्मतिः स ततः । मन्मात्रादिस्वजनैः सपरिजनैर्गाढमुद्विग्नैः ॥ ८७ ॥ सहसा श्मशानतरुरिव
पथिकैर्दूरेण तत्यजेऽपि निजैः । अनुचितचिन्तनमपि हा दवदहनः स्नेहवनदहने ॥ ८८ ॥ युग्मम् ॥ चाण्डालादिव

नवदीव्यद्विद्रुमस्तोमान् ॥ ६१ ॥ स्फटिकान् खटिकाखण्डानिव बदराणीव पद्मरागमणीन् । जात्यतरहीरकाणां प्रकरान् किल शर्कराशकलान् ॥६२॥ तृणमणिनिवहानिव हारितरघृणीन् बहुतरेन्द्रनीलमणीन् । निचयविहितानि जम्बूफलवत् किल रिष्ठरत्नानि ॥ ६३ ॥ अन्यानपि विविधमणीन् गणीकृतान् कर्करानिव प्रचुरान् । इन्धनवद् घनचन्दनदारूणि सुगन्धचारूणि ॥६४॥ राशिकृतानिव राशिव्रजवद्दूष्याणि देवदूष्याणि । सुस्थूलकम्बलानिव कम्बलरत्नानि नूत्नानि ॥ ६५ ॥ उच्चैः श्रेणिकृतानां हिरण्मयीनां मणिमयानां च । भाण्डानामुत्त्रिपुटीः पटीयसी-र्मृन्मयानां तु ॥ ६६ ॥ अपरमपि गृहोपस्करमासनशयनादिकं तथारूपम् । पश्यन्नुत्पश्यतया विसिष्मयामासि-वानेषः ॥ ६७ ॥ अष्टभिः कुलकम् । ईदृक्समृद्धिरस्यं हर्म्यं शून्यं किमेतदिति विमृशन् । अविशत्तासिन्नपवर-कान्तः कमलान्तरलिरिव सः ॥ ६८ ॥ सौभाग्यगुणविशालां बालां नवयौवनश्रियः शालाम् । निश्चेतनां मृतामिव स तत्र वीक्ष्येति चिन्तितवान् ॥ ६९ ॥ इह धाम्नि किमियमेकाऽप्यविनष्टसुपुष्टवरवपुष्टमका । किं वा मृतेव पतिता यदिवा को वेद दैवगतिम् ? ॥७०॥ ईषद्विषादविस्मयवान् सैवमवैक्षतामृतसुपूर्णम् । तूर्णं तुम्ब-कमेकं गतमुच्चैर्जीवितमिवास्याः ॥७१॥ पानीयधिया सुधिया दयालुनाऽऽदाय तदमुना च ततः । सा सर्वाङ्गम-सिच्यत परहितपरता हि सत्प्रकृतिः ॥ ७२ ॥ सुप्तोत्थितेव तत्क्षणमुत्तस्थौ साऽथ सुस्थिता स्थातुम् । पुरतस्त-मेक्ष्य दक्षेत्यापिप्रिणत् प्रणयगर्भगिरा ॥ ७३ ॥ उत्तम ! तवोत्तमत्वं निर्णिन्येऽन्योपकारसारतया । तदपि वद कोऽसि कुत्र च वससि किमर्थं तथाऽऽगाः ? ॥७४॥ सोऽप्याह मदनवेगाह्वयस्य नृपतेर्विशालपुरभर्त्तुः । सेवा-

हीयते हि तेजस्तद्दिशि विशतस्त्विनस्यापि ॥ ४७ ॥ अजडाशयोऽपि सोऽयं जडाशयस्यैव सङ्गमधिगम्य । जज्ञे जडाशयस्तत्क्षणे क्षणं किं विधेयविधौ ? ॥ ४८ ॥ परिधार्य धैर्यमुच्चैश्चेतसि पुनरेष चिन्तयामास । किमनुचितां कातरतामातुर इव हा वहामि मुधा ? ॥४९॥ अधिजलधि साहसवशाद्विशामि सहसैव भवतु यद्भवति । एकैव गतिर्महतां स्वीकृतकरणं हि मरणं वा ॥ ५० ॥ इति निर्धार्य स धैर्याचेतोवृत्तिं विधाय धुतकम्पाम् । झम्पां यावत्प्रददात्यपांनिधौ भयस्रजामवधौ ॥ ५१ ॥ उदधेर्देवस्तावत्तुष्टः प्राग्दत्ततद्वराकृष्टः । प्रादुर्भूय प्रणयाद्भणद्रण भद्र ! किं कुर्वे ? ॥ ५२ ॥ जीवदयानियमफलं किमप्यहो ! निस्तुलं यदविलम्बात् । मम विस्मृतोऽपि निधिरिव विधुरे स्वयमेष आविरभूत् ॥ ५३ ॥ इति चिन्तयन् स तुष्टस्तं प्रत्याचष्ट शिष्टधीः स्पष्टम् । नय मां लङ्कामपनय शङ्कामिह कार्यनिर्वाहे ॥ ५४ ॥ हरिमिव हरिबलममरः कालिय इव विपुलमत्स्यरूपधरः । पृष्ठे कृत्वा प्रस्थप्रथे प्रतस्थेऽथ पथि पयसः ॥ ५५ ॥ कुल्यामिव कुल्यापतिमतुल्यमुल्लङ्घ्य स लघुपवन इव । लङ्कोपवनमनैषीदमुं महायानपात्रमिव ॥५६॥ सर्वर्तुकपुष्पफलं विद्याविधिसिद्धविविधवृक्षगणम् । तं वीक्ष्य वीक्षणीयं क्षणमथ विद्याधरोद्यानम् ॥ ५७ ॥ अन्तर्बहिश्च पूर्णस्वर्णश्रियमाढ्यखेचरां खमिव । बालेन्दुनिष्कलङ्कां लङ्कां स विवेश पेशलमुत् ॥५८॥ युग्मम् ॥ तस्याः सुषमामसृतं दृग्भ्यां सुखमापिबंस्तृषित इव सः । कौतुकतः काप्यविशद्विवशः शून्ये कनकसद्मने ॥ ५९ ॥ अघटितहाटककूटान्मेरोः कूटानिव स्फुटांस्तत्र । ठिक्करिकाराशीनिव सुवर्णदीनारगुरुराशीन् ॥ ६० ॥ निचयीकृतांश्च मौक्तिकनिकरान् जूर्णाह्वकणगणान् किन्तु । गुरुगुञ्जापुञ्जानिव

वास्त्वपि समस्तः । श्रेयस्वी च यशस्वी प्रसद्य सद्यः समागच्छेः ॥३३॥ मच्चिन्तया च चितया मा धाक्षीः स्वतनुमतनुबुद्ध्या यत् । स्रक्ष्यामि शीलरक्षां दक्षाः खलु तत्र कुलललनाः ॥३४॥ विज्ञापयाम्यविज्ञाऽप्यहमेकं जीवितं निजं रक्षेः । अविचार्यकार्यकरणात्पतङ्गमरणं तु मा कार्षीः ॥ ३५ ॥ यतः–"जीवन् भद्राण्यवाप्नोति, जीवन् पुण्यं करोति च । मृतस्य देहनाशः स्याद्धर्माद्युपरमस्तथा ॥ ३६ ॥ प्रियतम! यद्वा शिक्षा दक्षाणां का विशिष्य पुरुषाणाम् । स्नेहग्रहिला महिलास्तदपि वदन्त्येव यत्तदपि ॥ ३७ ॥ स्निग्धां मुग्धां मुग्धाङ्गनागिरं तां सुधाकिरं सुचिरम् । पीत्वा प्रीतः प्रास्थित दक्षिणदिशि दक्षिणः क्षणतः ॥ ३८ ॥ सत्त्वैकसखा स्वसुखाद्व्रजंस्त्यजन्मङ्क्षु स विषयग्रामान् । निःसङ्ग इव बभासे समधिकवेगैककृतरङ्गः ॥३९॥ विकटं तटिनीभर्त्तुस्तटं स्फुटन्तं तु वीचिनिर्घातैः । सोऽगात् क्रमतोऽक्रममिव किमिव दवीयोऽथवोद्यमिनाम् ॥ ४० ॥ पारावारमपारं भीष्माकारं नृभिर्दुरुत्तारम् । दर्शं दर्शं भवमिव भव्यः सोद्वेविजामास ॥ ४१ ॥ दध्यौ च निषिद्धोऽपि प्रियया प्राप्तोऽत्र यद्भविष्यतया । वारिधिविहितातङ्कां कथमिव लङ्कां व्रजिष्यामि ॥ ४२ ॥ नैवात्र यानपात्रप्रभृतिरुपायः प्ररूप्यते तज्ज्ञैः । कार्यमकृत्वा च कथं कृतप्रतिज्ञो निवर्त्तेऽहम् ? ॥ ४३ ॥ प्राग् धीवरोऽप्यवाप्यै (पिच) दैवेनैवेयतीं भुवं महतीम् । तेनैव यद्भविष्योऽभवन् भविष्यामि कथमधुना? ॥ ४४ ॥ ध्रुवमेकजीवरक्षाफलं मया तुच्छवित्तमिव सकलम् । लघु भुक्तं तद्युक्तं दरिद्रवन्मम सुदुःखित्वम् ॥४५॥ तेजस्व्यपि निस्तेजास्तत्राजनि सैष यन्न तच्चित्रम् । यत्तेजोऽधिपतेरपि दिशि तस्यां हीयते तेजः ॥ ४६॥ यद्वा–नृपतेः स सेवकोऽजनि निस्तेजास्तत्र यन्न तत्कार्यम् । परि-

हा ! निहन्तुं नूनमनर्थोऽयमारब्धः ॥ १९ ॥ कामं कामान्धेनादिष्टं दौष्ट्येन यदि नृपेणेदम् । कस्मादेतदकस्मात् स्वामिन्नङ्गीचकार तदा ? ॥ २० ॥ अविमृश्यकारितायां नियतमनर्थं पुरःस्थितं पश्य । शलभो लभते रभसाद् भस्मीभावं न वह्नौ किम् ? ॥ २१ ॥ उक्तञ्च—"सहसा विदधीत न क्रियामविवेकः परमापदां पदम् । वृणते हि विमृश्यकारिणं, गुणलुब्धाः स्वयमेव सम्पदः ॥ २२ ॥" दाक्षिण्यनिधे ! किमिदं दाक्षिण्यमपत्रपाऽपि काऽत्र पदे । येनान्यार्थविनाशः प्रोल्लासः प्रकृतिमलिनानाम् ॥ २३ ॥ अद्यापि किमपि कथमपि विचार्य किञ्चिन्मिषं च परिधार्य । पर्यवसाप्यो नृपतिर्निजार्थनाशी हि मूढतमः ॥ २४ ॥ श्रुत्वेति सात्त्विकः सोऽभिदधे मुग्धेव किमिदमभिदधिषे । प्राणान्तेऽपि प्रतिपन्नमन्यथा कथमिवास्तु सताम्? ॥ २५ ॥ कातर एवातुरहृत्तरसाऽपि विमुञ्चति प्रतिज्ञातम् । न तु साहसिकः क्वचिदपि विधुरिव विधुरेऽपि लक्ष्मसृगम् ॥ २६ ॥ उक्तञ्च—"अलसायंतेणवि सज्जणेण जे अक्खरा समुल्लविआ । ते पत्थरटंकुक्कीरिय व्व न हु अन्नहा हुंति ॥ २७ ॥ छिज्जउ सीसं अह होउ बंधणं चयउ सव्वहा लच्छी । पडिवन्नपालणेसुं पुरिसाण जं होइ तं होउ ॥ २८ ॥" किञ्च स्वीकृतकृत्ये पुरतो यदि कोऽप्यनर्थ आशङ्क्यः । तत्त्यागे निष्टङ्क्यः सम्प्रत्येवापवादस्तु ॥ २९ ॥ यास्याम्यवश्यमेतत्कार्यकृते तेन यद्भविष्यतया । न्याय्ये पथि पथिकानां यद्वा सममेव विषममपि ॥३०॥ मम काऽपि मामकीना नहि चिन्ता किन्तु तावकीनोच्चैः । हरिणाधिप इव हरिणीं मा हार्षीदेष नृपतिस्त्वाम् ॥ ३१ ॥ श्रुत्वा तदुक्तमत्वाव्यभिचरितं चारु भाषितं भर्त्तुः । मुदितार्दिता च विरहातङ्कात्सा गद्गदमगादीत् ॥ ३२ ॥ एवं यदि तत्पन्थाः प्राणेश ! शिवस्त-

जातु निमन्त्र्य सजानिं भूजानिरबूभुजद्भक्त्या ॥ ५ ॥ अप्रतिरूपं रूपं निरूप्य लुभ्यन्नृपस्तु तत्पत्न्यां । हन्तुमपि हरिबलं द्राग् दध्यौ धिक्कामिनां चेतः ॥ ६ ॥ ज्ञात्वाऽपि दुरभिसन्धिं दुष्टो मन्त्री न्यवारयन्न नृपम् । प्रत्युत तद्वधबुद्ध्योददीपयत् पवन इव वह्निम् ॥ ७ ॥ प्रभोः प्रसादैकदुराशया स्याद्, दुराशयान् पोपुषतो दुराशया । धिग्मन्त्रिणोऽप्यत्र परत्र भाविनीमनर्थवीथीं नहि मन्त्रयन्त्यपि ॥ ८ ॥ यतः-"सर्वत्र सुलभा राजन् !, पुमांसः प्रियवादिनः । अप्रियस्य तु पथ्यस्य, वक्ता श्रोता च दुर्लभः ॥ ९ ॥" धीराखधियाऽभ्यधादिदमास्थानीमास्थितोऽथ नरनाथः । खोद्वहवीवाहमहं सर्वोत्कर्षाच्चिकीर्षुरहम् ॥ १० ॥ तदुपरि पुरि लङ्कायां गत्वा सत्त्वाधिकः सपरिवारम् । को नामामन्त्रयिता बिभीषणं भीषणं द्विषताम् ॥ ११ ॥ असमञ्जसमादेशं श्रुत्वैवमवाङ्मुखेषु निखिलेषु । क्षितिपतिरैक्षत हरिबलमुखसन्मुखमेव कैतवतः ॥१२॥ सचिवश्च तावदवदद्दम्भनिधिर्देव! सेवकाः के? ते। स्वाम्यादेशे येषां न्यग्मुखता क्लीबतासजुषाम्? ॥ १३ ॥ धुर्यैवानुत्साहैर्हतकैः कथमस्तु वस्तुनः सिद्धिः । चित्तोत्साहो हि नृणां निबन्धनं साध्यसंसिद्धेः ॥ १४ ॥ देव ! तव मान्यताऽस्योचितैव धन्यस्य यो महोत्साही । कर्त्ता कार्यं यद्वा धर्त्ता जगतां हि हरिरेव ॥१५॥ श्रुत्वेत्यपत्रपिष्णुः स दैवपरतां सधैर्यमवलम्ब्य । तत्प्रत्यपद्यत मुदा त्रपागुणः कोऽप्यहो ! पुंसाम् ॥ १६ ॥ त्रपयैव वीरपुरुषा विषमेष्वपि सङ्ग्रमुख्यकृत्येपु । तुरगाः प्रदीपन इवाग्रतः स्युरवमत्य मृत्युमपि ॥ १७ ॥ अथ तत्कथितमतर्क्यं व्यतिकरमाकर्ण्य सा वसन्तश्रीः । तमुवाच विषादवती विज्ञा विज्ञातनृपचित्ता ॥ १८ ॥ भूविभुना निजभवने भोजनसमये समीक्ष्य मां लातुम् । आर्य च

स्याहो महिमेत्युचैरुदश्चिरोमाञ्चः । गन्धर्वविवाहेनोदुवाह स हरिः श्रियमिवैताम् ॥ ९२ ॥ उदयश्रियं तदैव च दिवसाधीशोऽपि पर्यणैष्ट किल । पुरतः प्रवर्द्धिलक्ष्म्याः साम्यमिव व्यञ्जयन्नमुना ॥ ९३ ॥ प्रौढनवोढावचसा क्वचन ग्रामेऽथ सोऽग्रहीदश्वम् । सल्लक्षणगतिचतुरं तुरङ्गमं सङ्गमं श्रीणाम् ॥ ९४ ॥ कर्मकरकर्मकर्याव्यप्येवमुपाददे यथार्ह सः । सति वित्ते कः क्लेशप्रवेशकृत् स्ववपुषा विज्ञः ॥ ९५ ॥ क्रमतोऽतिक्रामन् बहुदेशान् देशान्तरेऽथ दूरे सः । सुकृतैरित इव गतवान् श्रिया विशालं विशालपुरम् ॥ ९६ ॥ आटकतस्तत्रासौ प्रौढतरावासमध्युवास सुखम् । कन्यानीतद्रविणप्रगुणसमग्राङ्गगृहयोगः ॥ ९७ ॥ क्वाहं निन्द्यः क्वेयं धन्या क्वेदं धनं ममानिधनम् । योगोऽयमजनि दैवात्तत्किं गृह्णे श्रियो न फलम् ? ॥ ९८ ॥ ध्यात्वेति प्रावर्त्तत दातुं भोक्तुं च भृशमसौ विभवम् । भाग्याभ्युदयेऽभ्युदयति मतिरपि पुंसोऽभ्युदयहेतुः ॥ ९९ ॥ दानाद्याडम्बरतो नगरेऽभूत्तस्य कस्यचिन्नृपतेः । पुत्रोऽयमिति ख्यातिर्यद्वा दानान्न किं भवति ? ॥ १०० ॥ यतः–पात्रे धर्मनिबन्धनं तदितरे प्रोद्यद्दयाख्यापकं, मित्रे प्रीतिविवर्द्धकं रिपुजने वैरापहारक्षमम् । भृत्ये भक्तिभरावहं नरपतौ सन्मानपूजाप्रदं, भट्टादौ च यशस्करं वितरणं न क्वाप्यहो ! निष्फलम् ॥ १ ॥ श्रुत्वाऽथ तत्प्रसिद्धिं तत्पुरनरनायकेन स सभायाम् । आहूय बहमन्यत शुभोदये ह्यखिलमनुकूलम् ॥ २ ॥ सोऽपि नृदेवमसेवत तथा यथोच्चैः प्रसादपात्रं सः । तस्यासीत् कामगवी सेवा सेवाविदः किल यत् ॥ ३ ॥ पठ्यतेऽपि–"सुवर्णपुष्पां पृथिवीं, चिन्वन्ति पुरुषास्त्रयः । शूरश्च कृतविद्यश्च, यश्च जानाति सेवितुम् ॥ ४ ॥ अदनप्रदानमादरपूर्वं सन्मान आदिम इतीमम् ।

विमर्शी किं गतस्यार्त्या। गतशोची स्वश्लाघी स्वार्थभ्रंशी च यन्मूर्खः ॥ ७८ ॥ यदुक्तं कथासम्बन्धे—"खादन्न गच्छामि हसन्न भाषे, गतं न शोचामि कृतं न मन्ये। द्वाभ्यां तृतीयो न भवामि राजन्!, असादृशाः केन गुणेन मूर्खाः ॥ ७९ ॥" तत एनमेव दैवप्रदत्तमन्वेषयामि सविशेषम्। ननु कोऽयं! किंजातिः? किंरूपः? किंस्वरूपश्च? ॥८०॥ तत्स्थाने सिद्धोपस्थायितया भाग्यवांस्तु भाव्येषः। यद्वाऽस्मि मन्दभाग्या यदेतदनुगामिनी भूता ॥ ८१ ॥ पृष्टाऽपि निर्णयेऽमुं तदिदं को वाऽस्तु निर्णयो धनिकात्। अस्यामिति संशयभृति दिवि दिव्या वाग् बभूवैवम् ॥ ८२ ॥ प्रौढिं परां यदीच्छसि तल्लब्धारं महोदयं द्वेधा। तन्वङ्गि! सङ्गतं त्वद्भाग्यैरनिभैर्भजस्वैनम् ॥ ८३ ॥ इति दिव्यगवीसाधितसमीहिता सा हृदाहितानन्दा। सानुनयं सप्रणयं तमाललाप प्रियालापैः ॥ ८४ ॥ प्रागुद्भूततृषार्त्तैर्मृपाकृते तं जलं ययाचे च। तस्या हि रसार्थिन्या रसार्थनं युक्तमेव तदा ॥ ८५ ॥ अभ्यस्तनव्यानुरक्तकृत्यं कष्टसपीष्टं भवेदमृततोऽपि। इति स प्रमुदितचेताः प्रययौ तूर्णं तदानेतुम् ॥ ८६ ॥ रात्रावप्यज्ञातेऽरण्ये भ्रान्त्वा रयाज्जलानयनात्। साहसिकतयाऽपि तयाऽतिशायिता तस्य निश्चिक्ये ॥ ८७ ॥ नीरतीरस्तम्यासपि स भ्रमन् क्वचन लब्ध्वा। तां जीवनेन नितमामपिप्रीणज्जीवनेनेव ॥ ८८ ॥ अथ पप्रथे पृथुश्रीर्मिथस्तयोः प्रीतिवत्प्रभा भानोः। सुप्रातरिव दिशन्ती प्रसादविधिना वधूवरयोः ॥ ८९ ॥ मनसा हि मानितं यत्तदेव विश्वे प्रशस्यमिति तस्य। रूपं सौभाग्यमयं पश्यन्त्यथ साऽऽह सस्नेहम् ॥ ९० ॥ सुभगाग्रिम! कुरु सम्प्रति पाणिगृहीतिं गृहीतविनयां माम्। इयमेव लग्नवेला प्रागपि निर्द्धारिता ह्यासीत् ॥ ९१ ॥ स नियमधर्म-

मामकरोत् ॥ ६४ ॥ गूढत्वाहङ्कारान् हुङ्कारानेव किमिति कुरुतेऽसौ । किमिति च किञ्चिद्दूरे चकित इव व्रजति सत्तोऽपि ॥ ६५ ॥ किमिति च कुपितप्रियवत्क्वचन न मे संमुखं मुखं कुरुते । उद्धतगतिरिव चायं तन्मा भूत् कश्चनाप्यन्यः ॥ ६६ ॥ इत्याशङ्काशङ्कुव्यथाप्रथादुःस्थिताऽस्ति सा यावत् । इन्दुरुदियाय तावत्त्वरितं तन्निर्णयायेव ॥ ६७ ॥ उद्योते जाते सत्यासत्तिमुपेत्य सेक्षते यावत् । तावत्तमीप्सिततरमवेत्य हाहा चकारतराम् ॥ ६८ ॥ कर्कशकुलिशाकस्मिकनिपातनिहतेव तीव्रदुःखार्त्ता । दध्यौ च दुर्विधे ! धिग् नष्टं मे द्वयमपि द्विपवत् ॥ ६९ ॥ उक्तञ्च—"निदाघे दाहार्त्तः प्रचुरतरतृष्णातरलितः, सरः पूर्णं दृष्ट्वा त्वरितमुपयातः करिवरः । तथा पङ्के मग्नस्तटनिकटवर्त्तिन्यपि यथा, न नीरं नो तीरं द्वयमपि विनष्टं विधिवशात् ॥ ७० ॥" पित्रादिविरहराज्यश्रीत्यजनोद्व्रजनजनविरुद्धादि । यं हेतुमत्र साऽगात्तस्य पदेऽयं मणेर्मृदिव ॥७१॥ स्वच्छन्दचारिता ह्यरुचितं पुंसां विशिष्य च स्त्रीणाम् । विनिवारिता यदस्याः फलमिदमादौ मया लेभे ॥ ७२ ॥ धिग् दुर्धिया मयाऽऽदौ निर्धननग्नो ह्ययं न निरणायि । सम्प्रति तु का गतिर्मे चिरमनुतप्यापि यदि तु मृतिः ॥७३॥ दुर्विधदुर्भगदुष्कुलदुष्टानिष्टादिदयितसंयोगात् । नित्यं जीवन्मरणात् श्रेयस्करणं सकृन्मरणम् ॥ ७४ ॥ इति साऽत्यन्तार्त्तिपरा परासुतामप्यभीप्सुरश्ववरात् । मूढतयाऽधः पतिता गतचैतन्येव भुव्यलुठत् ॥ ७५ ॥ अनया सह गृहवासाद्याशाप्रसरं करोम्यहं हतकः । सां वीक्ष्याप्येषा पुनरीदृगभूदग्निमग्नेव ॥ ७६ ॥ कर्त्तव्यं किमिह मया यदिवा देवोऽत्र सन्निधत्तां सः । नियमाद्यो मेऽतुष्यत्सुधीरिति ध्यायति स यावत् ॥ ७७ ॥ तावत्कुशलविमर्शादिति सा

व्याजहार हरिबल ! सुभगाऽग्रिम ! कच्चिदत्रास्ति ॥ ५० ॥ अच्छुप्तामिव देवीं तां दिव्यालङ्कृतिं तुरगयानाम् । निर्वर्ण्य तच्च तस्या वचः समाकर्ण्य कर्णसुधाम् ॥ ५१ ॥ विस्मितमुदितः कृतवान् हुङ्कारं हरिबलोऽथ मध्यगतः । तस्मादतोषहेतोरप्येषाऽन्तस्तुतोषतमाम् ॥ ५२ ॥ युग्मम् ॥ ऊचे च चतुरचेताः पुरतः प्रस्थीयतां त्वरितगत्या । स्युर्देशान्तरगमनान्मनोरथा नौ यथा फलिताः ॥ ५३ ॥ नियतमियं सङ्केतितमन्यं मत्तुल्यनामकं कञ्चित् । प्रीति-प्रह्वाऽऽह्वयते तत्किं नो यामि तत्स्थाने ? ॥५४॥ भाग्येनैतदुपस्थितमित्यन्तश्चिन्तयन्नयं सरयम् । निर्गत्य ततस्तस्याः पुरस्सरीभूय चलति स्म ॥ ५५ ॥ आम्नायं वृजिनानामानायं सह कुकर्मणा स जहौ । तत्रैव लाति राज्याशायां भिक्षाकपालं कः! ॥ ५६ ॥ तं वीक्ष्य तादृशमसौ साशङ्कावक्कुमार! नग्न इव । निर्वाहनश्च कस्मात्किं केनाप्यप-हृतं स्वं ते ॥ ५७ ॥ दुष्कर्मैवापहृतं त्वया ममाद्येति स ब्रुवन्नन्तः । तां प्रति बहिःप्रलम्बं चकार हुङ्कारमेव सुधीः ॥ ५८ ॥ निर्गमितसमग्रतया न वदति खेदोदयादयं नियतम् । ध्यात्वेति पर्यधाप्यत वर इव वरवेषमेष तया ॥ ५९ ॥ भणितश्च निपुण ! गणनाऽतीतमदानीतवित्ततः खलु नौ । निखिलाभिलषितसिद्धिर्विशुद्धहेतोरिव भवित्री ॥ ६० ॥ तस्मादस्मिन् विषये न विषादनिषादसविधमपि गम्यम् । धनहान्याद्यं विदुरा दुःस्वप्नमिव स्मरन्त्यपि न ॥ ६१ ॥ इत्याख्याय विदुष्या मनोविनोदाय तस्य शस्यतमाः । प्रेमरसोल्लासिन्यः पथि तास्ताः प्रस्तुता वार्त्ताः ॥ ६२ ॥ स पुनः सर्वत्रापि हि हुङ्कृतिमात्रोत्तरस्तदेकगतिः । हुङ्कृतिकृतितात्कालिकफलोपलब्धे रिव बभूव ॥ ६३ ॥ तस्येप्सितस्य चोच्चैस्त्वादिकसाम्याद् द्रुयेन तमसा सा । निश्शङ्काऽभूत् पूर्वं ततस्तु शङ्कामि-

तया तयाऽन्यदा पथि यान्। इभ्यात्मभूर्न्यरूप्यत हरिरूपः श्रीहरिबलाह्वः ॥ ३६ ॥ सद्योऽनुरागसागरमग्ना लग्ना तदाप्त्युपाये सा। क्वचन कथञ्चन तेनालिनीव नलिनेन समगंस्त ॥३७॥ वनितास्वभावसुलभैर्व्यामोहकरैरिवौपधैर्धूर्त्ता। झटिति पटुचाटुकारैस्तं च व्यामोहयामास ॥ ३८ ॥ सङ्केतनिकेतागमदूरगमोपयमनादि तद्गदितम्। अवमत्य नृपभयाद्यथ स प्रतिपेदे विनीत इव ॥ ३९ ॥ सङ्केतितं च सदनं दिनं च दैवात्तयोस्तदेवासीत्। यत्र हि रात्रौ चिन्तार्दितः स्थितः सोऽस्ति तिमिहन्ता ॥४०॥ अथ सा कथमप्यनयोरभ्यर्थनयेव पप्रथेऽतिपृथुः। कामासिकृत्रियामा श्यामा प्रच्छन्नकर्मकृताम् ॥ ४१ ॥ सज्जीभवंश्च तस्यां रात्रौ तत्र प्रयातुमुत्कमनाः। कर्मानुगामिनी मतिरिति चिन्तयितुं प्रववृतेऽसौ ॥ ४२ ॥ को वेद किं पुरस्ताद्भवितेत्यधुना तु जातु मन्तुकृतम्। यदि मां विद्यादद्यात् ध्रुवं क्षमाभृद्यमाय तदा ॥ ४३ ॥ इत्युद्भवदाशङ्कः शशाक गन्तुं न गन्तुकामोऽपि। तत्रैष भोक्तुकामोऽपि भोक्तुमिव भीरहो! वणिजाम् ॥ ४४॥ उक्तं च–"स्त्रीजातौ दाम्भिकता भीलुकता भूयसी वणिग्जातौ। रोषः क्षत्रियजातौ द्विजातिजातौ पुनर्लोभः ॥ ४५ ॥" बह्वाशङ्कातङ्काकुलितः किल नैहलौकिकमपीह। न च पारलौकिकमपि स्वहितं कर्त्तुं प्रभूष्णुः स्यात्॥ ४६ ॥ यद्वा क्व तस्य तादृग् भाग्यं जागर्त्ति येन तां लेभे। नियतं तस्या भर्त्ता भर्त्ता भविता भुवोऽपि यतः ॥ ४७ ॥ सा तु स्वजातिसिद्धान्मात्राधिकसाहसात्समं मात्रा। कृत्वा कृत्रिमकलहं पृथग्गृहस्था यथाऽभीष्टम् ॥ ४८ ॥ यत्नात्तजात्यरत्नाद्युरुधनवसना हयेन्द्रमधिरुह्य। पूर्देवतेव साक्षादगमत् समयाऽऽलयद्वारि ॥ ४९ ॥ युग्मम् ॥ निर्विघ्नागममुदिता द्रुतमुदितानेकसात्त्विका च ततः। सा

तत्कण्ठे। तेनाभिज्ञानकृते कपर्दिकां सपदि मुमुचे सः ॥ २२ ॥ निर्भयतयैव पुनरपि स एव पतितोऽप्यमोचि
तेनैवम्। स्थानान्तरेऽपि सन्ध्यावध्यपि पतितश्च मुक्तश्च ॥२३॥ अनुशयकथाऽपि न तथाऽपि तस्य नियमे दृढाश-
यस्यासीत्। प्रतिपन्नविधौ विधुरेऽप्यधीरतां यान्ति न हि धीराः ॥२४॥ सायंसमये स महातिमिर्विमुक्तस्तमुक्त-
वान्नरवाक्। साहसिक! साहसात्ते तुष्टोऽस्मीष्टं वृणीष्व वरम् ॥२५॥ अयमप्यतिविस्मयमयहृदयस्तमुवाच वाच-
मिति मतिमान्। मत्स्योऽसि मत्स्य! किं त्वं दास्यसि मत्स्योऽप्यथाभिदधे ॥ २६ ॥ मा मां मत्स्यं ज्ञासीर्माऽव-
ज्ञासीश्च यदहमुदधिसुरः। अवधार्याऽऽसन्नतया पर्यैक्षिषि ते नियमकक्षाम् ॥ २७ ॥ गृह्णन्ति नैव नियमं केचि-
द्गृह्णन्ति निर्वहन्ति न च। गृह्णन्ति निर्वहन्ति च ते केचित् पञ्चषाः पुरुषाः ॥२८॥ अपि मात्स्यिकस्य दृढतां तवेक्ष्य
तुष्टोऽस्मि किं ददे तुभ्यम्?। तेनेत्युक्तः स मुदाऽवददापदि सपदि मां रक्षेः ॥ २९ ॥ प्रतिपद्य तथा सद्यस्तिरो-
ऽभवद्देवता स तु तमीं ताम्। मत्स्यालाभाद्भार्याभीतोऽस्थाद्धाद्यदेवकुले ॥३०॥ तत्र स्थितश्च दध्यौ द्विधाऽप्ययं
धीवरः कथमिवाहो?। द्राग् मे नियमः समभूत् फलेग्रहिश्चक्रिशालिरिव ॥ ३१ ॥ अप्येकजीवदयया मया
रयात् प्रापि निर्जरस्य वरः। यदि कुर्वे सर्वेष्वपि दयां तदा वेद कः किं स्यात्?॥ ३२॥ मूर्द्धन्या धन्यानां तयैव
ये घ्नन्ति जातु नहि जन्तून्। निर्मन्तुजन्तुघातननिरतं सततं पुनर्धिग् माम् ॥ ३३ ॥ तन्निर्वहामि कथमपि यद्यौ-
पयिकेन केनचित्कचन। तर्हि कृतसुकृतहिंसां जहामि हिंसां विषलतावत् ॥ ३४ ॥ दृष्टैहिकधर्मफलो भद्रप्रकृ-
तिर्भविष्यभद्रोऽसौ। चिन्तयति यावदेवं तावद्यदभूत् शृणुत तद्भोः!॥ ३५ ॥ एकः प्राग् नृपसुतया गवाक्षग-

सत्याभिधा प्रचण्डेति । स तु तद्भीतो नित्योद्विग्नः स्वप्नेऽपि नाप सुखम् ॥ ८ ॥ यतः–"कुग्रामवासः कुनरेन्द्रसेवा, कुभोजनं क्रोधमुखी च भार्या । कन्याबहुत्वं च दरिद्रता च, षड् जीवलोके नरका भवन्ति ॥ ९ ॥" मुनिमेकं सोऽन्येद्युर्नद्यास्तीरे निरीक्ष्य नमसितवान् । मुनिना किञ्चिद्धर्म्मं वेत्सीत्याक्षिप्त आख्यच्च ॥ १० ॥ स्वकुलाचारो धर्म्मः को वा धर्मस्ततः परः परमः ? । आराधयामि तं पुनरनुदिनमेकाग्रचित्ततया ॥ ११ ॥ मुनिरूचे मूढधियां वचनमिदं युज्यते न विज्ञानाम् । कुलमार्गे धर्म्मश्चेद् धर्मनाम्नाऽपि तन्नष्टम् ॥ १२ ॥ किञ्च–दारिद्र्यदास्यदुर्नयदुर्भगतादुःखितादि पितृचरितम् । नैव त्याज्यं तनयैः स्वकुलाचारैककथितनयैः ॥१३॥ तस्मान्न कुलाचारो धर्मः स्यात् किन्तु जन्तुरक्षादिः । तत्रापि जन्तुरक्षा दक्षा न्यक्षाऽर्थितप्रथने ॥ १४ ॥ प्रणिहन्ति हन्त ! संततदुरन्तदुरितोत्थदुःखदन्तिततीः । एकाऽप्यनेकरूपा सद्यः सिंहीव जीवदया ॥ १५ ॥ दुःखादुद्विग्नो यदि र हृदि सौख्याभिलाषुकश्चासि । धीवर ! वरगुणपीवर ! जीवदयायां यतस्व तदा ॥ १६ ॥ स प्राह प्रतिबुद्धः सत्यं धर्मो दयैव किन्तु कुतः ? । कैवर्त्तकुले सा स्याद्रङ्कगृहे चक्रिभोज्यमिव ॥ १७ ॥ ऋषिराख्यदक्षमश्चेदधिकं कर्तुं कुरुष्व तर्हीदम् । जाले प्रथमं पतितो मत्स्यो मोच्यस्त्वया जीवन् ॥ १८ ॥ एतावानपि नियमः सम्यक् प्रतिपालितो वटाङ्कुरवत् । सद्भावनाम्बुसिक्तः फलिताऽनन्तैः फलैरतुलैः ॥ १९ ॥ सुकरत्वात्तं नियमं मुदितः स्वीकृत्य स स्वकृत्यकृते । गत्वा सरिज्जलान्तर्जालं चिक्षेप साक्षेपम् ॥ २० ॥ तस्मिंश्च कश्चन महान् मीनः पीनः पपात तत्कालम् । तस्मै प्रदर्शयन्निव नियमफलं सुविपुलं पुरतः ॥ २१ ॥ लोभक्षोभप्रसरं निरुध्य नियमान्निबध्य

स्याकामनिर्जरया जातं जातिस्मरणं पुत्रं प्रति कथयन्नस्ति–पुत्र ! किं मां मारयसि ?, तव पिताऽहं, यदि न
प्रत्येषि तदाऽभिज्ञानं पश्य, ततश्छागेन गृहान्तर्निधानस्थानं दर्शितं, तत्र निधाने लब्धे प्रत्ययो जातः, सर्वैर्द-
याधर्मः प्रपन्नः, तस्मात्सर्वथा हिंसा वर्ज्या, एतद्व्रतफलं चैवमाहुः–"जं आरुग्गमुदग्गमप्पडिहयं आणेसरत्तं
फुडं, रूवं अप्पडिरूवमुज्जलतरा कित्ती धणं जुव्वणं। दीहं आउ अवंचणो परिअणो पुत्ता सुपुण्णासया, तं सव्वं
सचराचरंमिवि जए नूणं दयाए फलं ॥ १ ॥" एतस्यानङ्गीकारेऽतिचारे वा पङ्गुताकुणिताकुष्ठादिमहारोगवि-
योगशोकापूर्णायुर्दुःखदौर्गत्यादिफलं, यतः–"पाणिवहे वट्टंता भमंति भीमासु गब्भवसहीसु। संसारमण्डलगया
नरगतिरिक्खासु जोणीसु ॥ १ ॥" इति दशमगाथार्थः ॥ १० ॥ एतद्व्रते हरिबलधीवरकथा—

कल्पलतिकेव कल्पितमनल्पमल्पाऽपि कल्पयत्याचिरात्। जीवदयाऽत्रापि भवे कैवर्त्तकहरिबलस्येव ॥ १ ॥
यद्वा–अपि सुकरं नियमवरं विधुरेऽप्याराधयन्ननन्यमनाः। प्राप्नोति फलं धीवरहरिबलवत्तद्भवेऽप्यतुलम् ॥ २ ॥
तथाहि–कलयत्काञ्चनकमलासुच्चैः स चकास्ति काञ्चनाचलवत्। काञ्चनपुरं पुरं सन्नन्दनमानन्दि सुमनःश्रि ॥ ३ ॥
नृपतिर्वसन्तसेनस्तत्रासीत्रासितारिनृपसेनः। कान्ता वसन्तसेना मेनारूपेण तस्य पुनः ॥ ४ ॥ निरपत्ययोस्त-
योरथ पृथुगुणपात्रं सुता वसन्तश्रीः। युवजनमनउन्मादे मूर्त्तेवासीद्वसन्तश्रीः ॥ ५ ॥ तस्याः प्रियंभविष्णोः
प्रभविष्णोः सुरपुरन्ध्रिरूपजये। नापि क्वाऽप्यनुरूपं वरं पिता कविवदुपमानम् ॥६॥ इतश्च–तिमिजालजालपातन-
निष्णातः प्रत्यहं प्रकृतिभद्रः। हरिबलनामा कश्चित् कैवर्त्तस्तत्र वसति स्म ॥ ७ ॥ भार्याऽनार्याधुर्या तस्य च

यद्बलिनाऽतिदुर्बलो, हहा ! महाकष्टमराजकं जगत् ॥ १ ॥ वैरिणोऽपि हि मुच्यन्ते, प्राणान्ते तृणभक्षणात् । तृणाहाराः सदैवैते, हन्यन्ते पशवः कथम् ? ॥ २ ॥" इति श्रुत्वा स जातकरुणरसः श्रीभोजो नियमितमृगयाव्यसनः पुरं प्रत्यागच्छन् यज्ञस्थाने स्तम्भनियन्त्रितं छागं दीनं दृष्ट्वा किमेष विब्रवीतीति पप्रच्छ, पण्डितधनपालः प्राह–स्वामिन् ! मरणभयात्तं छाग एवं वक्ति–"नाहं स्वर्गफलोपभोगतृषितो नाभ्यर्थितस्त्वं मया, सन्तुष्टस्तृणभक्षणेन सततं साधो ! न युक्तं तव । स्वर्गे यान्ति यदि त्वया विनिहता यज्ञे ध्रुवं प्राणिनो, यज्ञं किं न करोपि मातृपितृभिः पुत्रैस्तथा बान्धवैः ? ॥ १ ॥" राज्ञा किमेतत् ? इति पृष्टः पुनराह–"यूपं छित्त्वा पशून् हत्वा, कृत्वा रुधिरकर्दमम् । यद्येवं गम्यते स्वर्गे, नरके केन गम्यते ? ॥ १ ॥ सत्यं यूपं तपो ह्यग्निः, प्राणाश्च समिधो मम । अहिंसामाहुतिं दद्यादेष यज्ञः सनातनः ॥ २ ॥" शुकसंवादोक्तमिदं श्रुत्वा श्रीभोजेनाप्यनुमतं, श्रीहर्षमहाकविनाऽपि यज्ञे हिंसा दोषहेतुर्दर्शिता, यन्नैषधे द्वाविंशे सर्गे षट्सप्ततितमं वृत्तम्–"इज्येव देवव्रजभोज्यऋद्धिः, शुद्धा सुधादीधितिमण्डलीयम् । हिंसां यथा सैव तथाऽङ्गमेषा, कलङ्कमेकं मलिनं बिभर्ति ॥१॥" यज्ञहिंसायां रुद्रशर्मविप्रदृष्टान्तः–यथा तत्पुत्रेण यज्ञार्थं छागे नीयमाने ज्ञानिना सोममुनिनोक्तं–"खड्ढु खणाविअ तइं छगल ! तइं आरोविअ रुक्ख । इंमजि पवत्तिअ जंन इह काइं वुब्बूइ मुरुक्ख ! ॥ १ ॥" इदं श्रुत्वा छागस्य जातिस्मरणं, साधुनोक्तं–रुद्रशर्मा छागवधकस्य पिताऽभूत्तेनेदं सरः खानितं पालौ वृक्षा रोपिताः प्रतिवर्षं छागवधेन यज्ञः प्रवर्त्तितः, रुद्रशर्मा मृत्वा छागो जातः, पुत्रेण पञ्चसु भवेषु यज्ञे हतः, एष षष्ठो भवः, सम्प्रत्येत-

१०गाथाया व्याख्याने वधाद्यतिचाराः

तुसखंडणं व गयमज्जणं व सव्वंपि । कासकुसुमं व वणगाइअं व विहलं इमीइ विणा ॥ १ ॥ कूपानदीमहातीरे, सर्वे धर्मास्तृणाङ्कुराः । तस्यां शोषमुपेतायां, कियन्नन्दन्ति ते पुनः ? ॥ २ ॥" एवं सति ये वदन्ति–यज्ञादौ हिंसा धर्माय भवति, वेदविहितत्वाद्देवपूजादिवदित्यादि, तत्सर्वं प्रलापमात्रमेवेत्यवगन्तव्यं, हिंसायाः सर्वत्र गर्हितत्वात्, यदि च हिंसातोऽपि धर्मस्तदा विषादप्यमृतोद्भवः कृशानोरपि शीतलजलप्रभवः सर्पवक्त्रादपि सुधारसोद्गारः खलमुखादपि सम्यक् परगुणोच्चारः क्षाराब्धेरपि स्निग्धदुग्धपूरप्रसरः कर्दमादपि कर्पूरप्रकरश्रोद्पादि, कदाचिद्देवतादिसान्निध्यादेवंविधान्यपि घटन्ते न पुनर्हिंसातो धर्मसम्भवः कथमप्युपपत्तिपदवीमवगाहते, यतः–"अहिंसासम्भवो धर्मः, स हिंसातः कथं भवेत् ? । न तोयजानि पद्मानि, जायन्ते जातवेदसः ॥ १ ॥" निषिद्धा च परसमयेऽपि यज्ञहिंसा, यदाहुस्त एव–"अग्नीषोमीयमिति या, पश्वालम्भनकारिका । न सा प्रमाणं ज्ञातृणां, आमिता(का)सा सतामिह ॥ १ ॥ यावन्ति पशुरोमाणि, पशुगात्रेषु भारत ! । तावद्वर्षसहस्राणि, पच्यन्ते पशुघातकाः ॥ २ ॥ अन्धे तमसि मज्जामः, पशुभिर्ये यजामहे । हिंसा नाम भवेद्धर्मो, न भूतो न भविष्यति ॥ ३ ॥" अथ यज्ञे हताः प्राणिनः स्वर्गं प्रयान्ति ततो यज्ञहिंसा न दोषायेति, तदप्युन्मत्तप्रलपितं, यतः कोऽत्र प्रत्ययो ? यद्यज्ञे हताः स्वर्गे यान्तीति, तेषां हि तथा कुमरणसम्भवे महार्त्तरौद्रदुर्ध्यानेन प्रत्युत दुर्गतिरेव सम्भविनी, तथा चात्र धनपालपण्डितसम्बन्धः–अन्यदा श्रीभोजे मृगयागते कविभिर्नृपव्यावर्णने क्रियमाणे धनपालपण्डितः प्राह–"रसातलं यातु यदत्र पौरुषं, कुनीतिरेषाऽशरणो ह्यदोषवान् । प्रहन्यते

गसहसाकारादिना प्रागव्याख्याततिक्रमादिना वा सर्वत्रातीचारता विज्ञेया, तत्रानाभोगं-असावधानता सहसाकारः-अविमृश्यकारित्वम्, आहुश्च-"पुव्वं अपासिऊणं छूढे पायंमि जं पुणो पासे। न य तरइ नियत्तेउं पायं सहसाकरणमेअं ॥ १ ॥" एतद्व्रतं सर्वव्रतादिधर्म्माणां रहस्यभूतं, यतः-"धन्नाणं रक्खट्ठा कीरंति वइओ जह तहेवेत्थ। पढमवयरक्खणट्ठा कीरंति वयाइं सेसाइं ॥ १ ॥ किं ताए पढिआए पयकोडीए पलालभूआए ?। जं इत्तिअं न नायं परस्स पीडा न कायवा ॥ २ ॥ किं सुरगिरिणो गरुअं जलनिहिणो किं व हुज्ज गंभीरं ?। किं गयणओ विसालं को(उ) अहिंसासमो धम्मो ? ॥ ३ ॥" इतिहाससमुच्चयेऽपि-"सर्वे वेदा न तत्कुर्युः, सर्वे यज्ञाश्च भारत !। सर्वे तीर्थाभिषेकाश्च, यत्कुर्यात् प्राणिनां दया ॥ १ ॥" महाभारतादावपि-"यो दद्यात् काञ्चनं मेरुं, कृत्स्नां चैव वसुन्धराम्। एकस्य जीवितं दद्यान्न च तुल्यं युधिष्ठिर ! ॥ १ ॥" इत्यादि, तथा-"शतेषु जायते शूरः, सहस्रेषु च पण्डितः। वक्ता शतसहस्रेषु, दाता भवति वा न वा ॥ १ ॥ न रणे निर्जिते शूरो, विद्यया न च पण्डितः। न वक्ता वाक्पटुत्वेन, न दाता धनदायकः ॥ २ ॥ इन्द्रियाणां जये शूरो, धर्मं चरति पण्डितः। सत्यवादी भवेद्वक्ता, दाता भूताभयप्रदः ॥ ३ ॥" अभयदाता च स एव यो यूकालिक्षादिक्षुद्रजन्तूनपि न दुनोति, उक्तश्चेतिहाससमुच्चयादौ-"यूकामत्कुणदंशादीन्, ये जन्तूंस्तुदतस्तनुम्। पुत्रवत्परिरक्षन्ति, ते नराः स्वर्गगामिनः ॥ १ ॥ अमेध्यमध्ये कीटस्य, सुरेन्द्रस्य सुरालये। समाना जीविताकाङ्क्षा, समं मृत्युभयं द्वयोः ॥ २ ॥" दयां विना च सर्वेऽपि धर्मा निष्फलाः, पञ्चाग्निसाधककमठतापसादीनामिव, यतः-"मयमंडणं व

म्रियते तदाऽपि तं भोजयित्वैव स्वयं भुञ्जीत, रोगादिशान्त्यर्थं पुनरुपवासाद्यपि कारयेत्, किं बहुना ?, यथा मूलगुणस्याद्याणुव्रतस्य मालिन्यं न स्यात्तथा यतितव्यम् ५, एवं चौर्यादिमहाऽपराधकारिणोऽपि वधबन्धादि सापेक्षतयैव श्राद्धस्य युज्यते, नतु निर्दयतया, यदुक्तम्—"वहमारणअब्भक्खाणदाणपरधणविलोवणाईणं। सव्वजहन्नो उदओ दसगुणिओ इक्कसि कयाणं ॥ १ ॥ तिव्वयरे अ पओसे सयगुणिओ सयसहस्सकोडिगुणो। कोडाकोडिगुणो वा हुज्ज विवागो बहुतरो वा ॥ २ ॥" पङ्कच्छागोत्पत्त्यादिबहुदोषहेतुमहिष्यजादिसङ्ग्रहं च वर्जयेदिति, वधबन्धादिग्रहणं चोपलक्षणं तेन क्रोधादिना हिंसादिहेतुमन्त्रतन्त्रौषधप्रयोगादयोऽन्येऽप्यतिचारतयाऽत्र व्रतेऽवगन्तव्याः। पर आह—अङ्गीकृतायाः प्राणातिपातविरतेरखण्डितत्वाद्वधबन्धादिविरतेश्च श्राद्धेनानङ्गीकृतत्वात्कथं वधादीनामतिचारता ?, उच्यते, प्राणातिपाते प्रत्याख्याते परमार्थवृत्त्या निरपेक्षवधबन्धादयोऽपि प्रत्याख्याता एव, प्राणातिपातहेतुत्वात्तेषां, एवं चेत्तर्हि वधादिकरणे व्रतभङ्ग एव नातिचारो, नियमस्यापालनात्, मैवं वादीः, यतो द्विविधं व्रतम्—अन्तर्वृत्त्या बहिर्वृत्त्या च, तत्र यदा कोपाद्यावेशान्निरपेक्षतया वधादौ प्रवर्त्तते तदा जातु स म्रियते तेन निर्दयत्वान्निरपेक्षत्वाच्च व्रतमन्तर्वृत्त्या भग्नं, हिंसाया अभावाच्च बहिर्वृत्त्या पालितं, ततो देशस्य भङ्गाद्देशस्य पालनाच्चातिचारव्यपदेशः, तदुक्तम्—"न मारयामीतिकृतव्रतस्य, विनैव मृत्युं क इहातिचारः ?। निगद्यते यः कुपितो वधादीन्, करोत्यसौ स्यान्नियमेऽनपेक्षः ॥ १ ॥ मृत्योरभावान्नियमोऽस्ति तस्य, कोपाद्दयाहीनतया तु भग्नः। देशस्य भङ्गादनुपालनाच्च, पूज्या अतीचारमुदाहरन्ति ॥ २ ॥" यद्वाऽनाभो-

त्वग् वा तस्याश्छेदश्छविच्छेदः कर्णनासिकागलकम्बलपुच्छादिकर्त्तनमित्यर्थः ३, 'अतिभारः' शक्त्यनपेक्षं गुरुभारारोपणं ४, 'भक्तपानव्यवच्छेदः' अन्नपाननिषेधः ५, सर्वत्र क्रोधादिप्रबलकषायोदयादित्यध्याहार्यं, अन्यथाऽतिचारत्वानुपपत्तेः, श्राद्धेन विनयादिशिक्षार्थं पुत्रादीनामपि सापेक्षतया वधबन्धाद्याचरणात्, यच्चाणाक्यः–"लालनाद्बहवो दोषास्ताडनाद्बहवो गुणाः। तस्मात्पुत्रं च शिष्यं च, ताडयेन्नतु लालयेत् ॥ १ ॥" एवं पञ्चविधे प्रथमाणुव्रतस्यातिचारे सति यद्बद्धमित्यादि तथैव, अत्र चावश्यकचूर्णियोगशास्त्रवृत्त्याद्युक्तो विधिरयं–प्रथमं तावद्भीतपर्षदेव श्रावकेण भाव्यं, यथा पुत्रादयः कर्मकरादयश्च दृष्टिदर्शनादिमात्रेणैव भीताः सम्यक् प्रवर्त्तन्ते, सम्भवे च सति दासादिद्विपदा गवादिचतुष्पदाश्च त एव संग्राह्या ये वधबन्धादि विनाऽपि मर्यादया तिष्ठन्ति स्वस्वकार्याणि च कुर्वते, तथा सम्भवाभावेऽपि सापेक्षतयैव वधबन्धादि करोति, नत्वन्यथा, तत्र वधो मर्माणि मुक्त्वा लतादवरकादिना सकृद्द्विर्वा १, बन्धश्च प्रलम्बदामग्रन्थिना शिथिलेनैव यथा बद्धानामप्यङ्गानि सप्रवीचाराणि स्युः, प्रदीपनादौ च सद्य एव छोटनादि स्यात् २, छविच्छेदस्तु रक्तगड्डुप्रभृतिविकारेऽपि सदयत्वेनैव युज्यते ३, द्विपदादिभारवाहनेन पुनर्याऽऽजीविका सा श्रावकेण मुख्यवृत्त्या वर्जनीया, बहुदोषत्वात्, अन्यजीविकोपायाभावेऽपि द्विपदो यावन्तं भारं स्वयमुत्क्षिपत्यवतारयति च तावन्तमेव वाह्यते, चतुष्पदस्य तु यथाशक्ति भारः किञ्चिदूनः क्रियते, हलशकटादिभ्योऽन्नपानाद्युचितवेलायां चासौ मुच्यते ४, तथाऽन्नपानादिनिषेधोऽपराधकारिणोऽपि तवाद्य भोजनं न दास्यते इत्यादि वचसैवोच्यते न तु क्रियते जातु

मिच्छानाणं तहेव य ३। रागो ४ दोसो ५ मइब्भंसो ६, धम्मंमि य अणायरो ७॥ १ ॥ जोगाणं दुप्पणीहाणं८, पमाओ अट्ठहा भवे। संसारुत्तारकामेणं, सव्वहा वज्जिअव्वओ ॥२॥" तेषु प्रकर्षेण संजननं—प्रवर्त्तनं प्रसङ्गः प्रमादस्य प्रसंगः प्रमादप्रसङ्गस्तेन कषायविषयादिप्रमादप्रसङ्गेनैव हि प्रायो जीवा व्रतान्यतिचरन्ति, प्रमादप्रसङ्गश्च श्रुतकेवलिनामप्यनर्थहेतुः, किं पुनरन्यस्य ?, भणितं च—"चउदसपुव्वी आहारगा य मणनाणि वीअरागावि। हुंति पमायपरवसा तयणंतरमेव चउगइआ ॥ १ ॥" श्रीआचाराङ्गेऽपि—"पमत्तस्स सव्वओ भयं अप्पमत्तस्स न कुतोवि भयं" प्रमादग्रहणं चात्रोपलक्षणं तेनाकुट्टिदर्पादिभिरपि यदाचरितमित्यप्यभ्यूह्यं, तत्राकुट्टि उपेत्य प्रतिषिद्धाचरणोत्साहात्मकः सङ्कल्पः दर्पो—वल्गनधावनादिउन्मत्तता, उक्तमपि—"आउट्टिया उविच्चा दप्पो पुण होइ वग्गणाईओ। कंदप्पाइ पमाओ दप्पो पुण कारणे करणं ॥ १ ॥" उन्मत्ततया च वल्गनधावनादौ हयशकटादेरौत्सुक्यखेटनादौ च मुधैव पञ्चेन्द्रियवधात्मोपघातादिरपि दोषः, एवं यदाचरितं तन्निन्दामीति गम्यं, यद्वाऽनाचरितमित्येवोक्तं तत्प्रतिक्रमणं त्वग्रेतनगाथया व्यक्तिदर्शनपूर्वं करिष्यतीति नवमगाथार्थः ॥ ९ ॥ इदानीं यदाचरितं तदेव व्यक्त्या दर्शयति—

वह १ बंध २ छविच्छेए ३ अइभारे ४ भत्तपाणवुच्छेए ५। पढमवयस्सऽइआरे पडिक्कमे देसिअं सव्वं ॥१०॥

'वहबंधे'ति 'वधो व्यधो वा' चतुष्पदादीनां निर्दयताडनं १, 'बन्धो' रज्ज्वादिभिर्गाढनियन्त्रणं २, छविः—शरीरं

प्राय: प्रथममणुव्रतम् । अथ सूत्रगाथाव्याख्या-प्रथमे सर्वव्रतानां सारत्वादादिमाणुव्रतेऽनन्तरोक्तस्वरूपे स्थूला एव स्थूलका-गमनागमनादिव्यक्तजीवलिङ्गा द्वित्रिचतुष्पञ्चेन्द्रिया जीवास्तेषां प्राणा इन्द्रियादयस्तेषां सङ्कल्पतोऽस्थिचर्मनखदन्ताद्यर्थमतिपातो-विनाशो हिंसेत्यर्थः, उक्तं च-"पञ्चेन्द्रियाणि त्रिविधं बलं च, उच्छ्वासनिःश्वासमथान्यदायुः । प्राणा दशैते भगवद्भिरुक्तास्तेषां वियोजीकरणं तु हिंसा ॥ १ ॥" यद्वा स्थूलकप्राणा द्वीन्द्रियादयस्तेषामतिपातः स्थूरको-बाह्यैरुपलक्षणत्वाद्बादरो द्वीन्द्रियादिप्राणानामतिपातः स्थूरकप्राणातिपात इति वा तस्य विरतिः-निवृत्तिस्तस्याः, अत्र गम्ययपि पञ्चमी, ततः प्राणातिपातविरतिमाश्रित्य यदाचरितं वक्ष्यमाणं वधबन्धादिकमसाध्वनुष्ठितम्, अथवा प्राणातिपातविरतेः सकाशात् 'आयरिअ'त्ति आर्षत्वात्पाठान्तराद्वा यदतिचरितमतिक्रान्तमतिक्रमादिना मालिन्यं कृतमितियावत् वधबन्धाद्याचरणं दोषमान्द्याद्युपशान्त्यै प्रशस्तेऽपि भावे स्यात्, यद्वाऽतिचरितम्-अन्यत्र गमनं तच्च देशविरतेः सर्वविरतावपि स्यात् न च तत्प्रतिक्रमणार्हमित्याह-अप्रशस्ते-क्रोधादिनौदयिकभावे सति, वधादयो ह्यतिचाराः क्रोधाद्यप्रशस्तभाव एव स्युः, मृषावादादिद्वारेणाप्याद्यव्रतातिचारः संभवेद्यथा स्नेहपरीक्षार्थं देवेन रामो मृत इत्युक्त्या लक्ष्मणमृतौ, कुमारपालेन कौतुकादेव नाणकापहृत्या मूषकमृतौ वा तच्च द्वितीयव्रतादौ प्रतिक्रम्यं तद्व्यपोहायाह-'इत्थ'त्ति अत्रैव प्राणातिपाते प्रमादप्रसङ्गेन, तत्र प्रमादाः पञ्च, यदाह-"मज्जं १ विसय २ कसाया ३ निद्दा ४ विगहा ५ य पंचमी भणिआ। एए पंच पमाया जीवं पाडंति संसारे॥ १॥" अष्टौ वा प्रमादाः, यदाहुः-"अन्नाणं १ संसओ चेव २,

मित्ति परिणओ संपत्तीए विमुचए वेरा। अवहंतोवि न मुचइ किलिट्ठभावोऽइवायस्स ॥१॥" त्ति, भावतो न तु द्रव्यतोऽङ्गारमर्दकस्य कीटबुद्ध्याऽङ्गारमर्दने मन्दप्रकाशे रज्जुमहिबुद्ध्या घ्नतो वा ३, न द्रव्यतो न च भावतो मनोवाक्कायैः शुद्धस्य साधोः ४, अन्यथा वा प्राणिवधद्वैविध्यादि, यत उक्तम्-"थूला सुहुमा जीवा संकप्पारंभओ अ ते दुविहा। सवराहनिरवराहा साविक्खा चेव निरविक्खा ॥१॥" अस्या व्याख्या-प्राणिवधो द्विविधः स्थूलसूक्ष्मजीवभेदात्, तत्र स्थूला द्वीन्द्रियादयः सूक्ष्माश्चात्रैकेन्द्रियाः पृथ्व्यादयः पञ्च बादरा न तु सूक्ष्मनामकर्मोदयवर्त्तिनः, सर्वलोकव्यापिनस्तेषां वधाभावात् स्वयमायुःक्षयेणैव मरणात्, अत्र च साधूनां द्विविधादपि वधान्निवृत्तत्वाद्विंशतिविंशोपका जीवदया, गृहस्थानां स्थूलप्राणिवधान्निवृत्तिर्न तु सूक्ष्मवधात्, पृथ्वीजलादिषु सततमारम्भप्रवृत्तत्वादिति दशविंशोपकरूपमर्द्धं गतं, स्थूलप्राणिवधोऽपि द्विधा-सङ्कल्पज आरम्भजश्च, तत्र सङ्कल्पान्मारयाम्येनमिति मनःसङ्कल्परूपाद्यो जायते तस्माद्गृही निवृत्तो नत्वारम्भजात्, कृष्याद्यारम्भे द्वीन्द्रियादिव्यापादनसम्भवात्, अन्यथा च शरीरकुटुम्बनिर्वाहाभावात्, एवं पुनरर्द्धं गतं, जाताः पञ्च विंशोपकाः, सङ्कल्पजोऽपि द्विधा सापराधो निरपराधश्च, तत्र निरपराधान्निवृत्तिः सापराधे तु गुरुलाघवचिन्तनं यथा गुर्वपराधो लघुर्वेति, एवं पुनरर्द्धं गतेऽस्या द्वौ विंशोपकौ जातौ, निरपराधवधोऽपि द्वेधा-सापेक्षो निरपेक्षश्च, तत्र निरपेक्षान्निवृत्तिर्न तु सापेक्षात्, निरपराधेऽपि वाह्यमानमहिषवृषभहयादौ पाठादिप्रमत्तपुत्रादौ च सापेक्षतया वधबन्धादिकरणात्, ततः पुनरर्द्धे गते सपादो विंशोपकः स्थितः श्रावकस्य जीवदयायाम्, एवंविधश्राद्धस्य

यो मां सर्वगतं ज्ञात्वा, न च हिंस्येत् कदाचन । तस्याहं न प्रणश्यामि, न च मां स प्रणश्यति ॥२॥" वनस्पत्यादीनां सचेतनत्वयुक्तिस्तु प्रागुक्तेति सप्तमगाथार्थः ॥ ७ ॥ अधुना सामान्येन चारित्रातिचारान् प्रतिक्रामति—

पंचण्हमणुवयाणं गुणव्वयाणं च तिण्हमइआरे । सिक्खाणं च चउण्हं पडिक्कमे देसियं सव्वं ॥८॥

'पंचण्हे'ति०, अनु–सम्यक्त्वप्रतिपत्तेः पश्चात् यद्वाऽणूनि–महाव्रतापेक्षया लघूनि व्रतानि अणुव्रतानि, तेषां पञ्चानां मूलगुणभूतानां तथा तेषामेव यानि विशेषगुणकारकाणि दिग्व्रतादीनि त्रीणि गुणव्रतानि तेषां तथा शिष्यस्य विद्याग्रहणवत्पुनः पुनरभ्यसनीयानि चत्वारि सामायिकादीनि शिक्षाव्रतानि तेषां चातिचारानाश्रित्य यद्बद्धं, शेषं प्रागुक्तवत्, तत्राणुव्रतानि गुणव्रतानि च प्रायो यावत्कथितानि शिक्षाव्रतानि पुनरित्वरिकाणीत्यष्टमगाथार्थः ॥ ८ ॥ अथ 'यथोद्देशं निर्देश' इति प्रथममणुव्रतमाह—

पढमे अणुव्वयंमी थूलगपाणाइवायविरईओ । आयरिअमप्पसत्थे इत्थ पमायपसंगेणं ॥ ९ ॥

'पढमे'त्ति ॥ प्राणिवधो हि २४३ विधः स्याद्यतः–"भूजलजलणानिलवणबितिचउपंचिंदिएहि नव जीवा । मणवयणकायगुणिआ हवंति ते सत्तावीसत्ति ॥ १ ॥ इक्कासीई सा करणकारणाणुमइताडिआ होइ । सचिअ तिकालगुणिआ दुन्नि सया हुंति तेआला ॥२॥" यद्वा द्रव्यभावाभ्यां हिंसा चतुर्धा, तत्र द्रव्यतो भावतश्च हिंसा हन्मीति परिणतस्य व्याधस्य मृगवधे १ द्रव्यतो न तु भावत ईर्यासमितस्य साधोः सत्त्ववधे, यदागमः–"वज्जे-

साधुनियमभङ्गाय कश्चित्पचनादि कृत्वा दत्ते इत्यादिग्रहः अथवा षट्कायसमारम्भादिष्वयत्नेनागालिताशोधितजलेन्धनधान्यग्रहणादिना ये दोषाः कृतास्तांश्च निन्दामीत्यर्थः, श्रावकेण हि त्रसादिरहितं संखारकसम्यक्सत्यापनादिविधिना निश्छिद्रदृढवस्त्रगालितं जलमिन्धनानि च शुष्काण्यजीर्णान्यशुषिराण्यकीटजग्धानि धान्यपक्वान्नसुखासिकाशाकखादिमपत्रपुष्पफलादीन्यप्यसंसक्तान्यगर्भितानि सर्वाण्यपि च जलादीनि परिमितानि सम्यक् शोधितान्येव च व्यापार्याण्यन्यथा निर्दयत्वादिना शमसंवेगादिलक्षणसम्यक्त्वलक्षणपञ्चकान्तर्गताया अनुकम्पाया व्यभिचारापत्तेः, तदुच्यते–“परिसुद्धं जलगहणं दारुअधन्नाइआण य तहेव। गहिआण य परिभोगो विहीइ तसरक्खणट्ठाए ॥१॥” महाभारतादावपि–“संवत्सरेण यत्पापं, कैवर्त्तस्येह जायते। एकाहेन तदाप्नोति, अपूतजलसङ्ग्रही ॥ १ ॥ विंशत्यङ्गुलमानं तु, त्रिंशदङ्गुलमायतौ। तद्वस्त्रं द्विगुणीकृत्य, गालयेज्जलमापिबेत् ॥२॥ तस्मिन् वस्त्रे स्थितान् जीवान्, स्थापयेज्जलमध्यतः। एवं कृत्वा पिबेत्तोयं, स याति परमां गतिम् ॥३॥” इत्यादि। पृथ्व्यादीनां चागमे जीवमयत्वमेवमुक्तम्–“अद्दामलगपमाणे पुढविक्काए हवंति जे जीवा। ते जइ सरसवमित्ता जंबुदीवे न मायंति ॥ १ ॥” “एगंमि उदगबिंदुंमि जे जीवा जिणवरेहिं पन्नत्ता। ते पारेवय० ॥ १ ॥” इत्यादि, उत्तरमीमांसादावपि–“लूतास्यतन्तुगलिते, ये बिन्दौ सन्ति जन्तवः। सूक्ष्मा भ्रमरमानास्ते, नैव मान्ति त्रिविष्टपे ॥१ ॥ कुसुम्भकुङ्कुमाम्भोवन्निचितं सूक्ष्मजन्तुभिः। न दृढेनापि वस्त्रेण, शक्यं शोधयितुं जलम् ॥२॥” भगवद्गीतायामपि–“पृथिव्यामप्यहं पार्थ!, वायावग्नौ जलेऽप्यहम्। वनस्पतिगतश्चाहं,सर्वभूतगतोऽप्यहम् ॥१॥

समारम्भारम्भाणां त्रितयमुपात्तमत्र किमिति केवलः समारम्भ एवोपाददे ?, उच्यते, मध्यग्रहणे आद्यन्तयोरपि ग्रहणं तुलादण्डस्येवेति न्यायेन समारम्भोपादानात्संरम्भारम्भावप्युपात्तावेव मन्तव्यौ, तत्र संरम्भः-प्राणिवधादिसङ्कल्पः, समारम्भः परितापनादिः, आरम्भः प्राणिप्राणापहारः, तथा चोक्तम्-"संकप्पो संरंभो परितावकरो भवे समारंभो । आरंभो उद्दवओ सव्वनयाणं विसुद्धाणं ॥ १ ॥" ततस्तेषु त्रिष्वपि ये दोषाः-पापानि न त्वतीचाराः श्राद्धेन षट्कायारम्भवर्जनस्यानङ्गीकृतत्वादनङ्गीकृते चातीचाराभावात् पक्के (पचने) सति-स्वयं पचने परपार्श्वात्पाचने चशब्दादनुमतौ च, किमर्थम् ?-'आत्मार्थं' स्वभोगार्थं 'परार्थं' प्राघूर्णकाद्यर्थम् 'उभयार्थं' स्वपरभोगार्थं चशब्दान्निरर्थकद्वेषादिकृतपचनपाचनादौ च, एवकारः प्रकारेयत्तासूचकः, निरर्थकपाकादि च लोकेऽपि निन्द्यं, यथोक्तम्-"पङ्क्तिभेदी वृथापाकी, नित्यं दर्शननिन्दकः । मृतशय्याप्रतिग्राही, न भूयः पुरुषो भवेत् ॥१॥" ननु 'दुविहे परिग्गहंमी'त्यनेनारम्भनिन्दा प्रागुक्ता पुनः कस्मादियम् ?, उच्यते, तत्र निषिद्धबहुविधारम्भमुद्दिश्यात्र तु स्वनिर्वाहहेतुकारम्भमपि, अत एव तत्र प्रतिक्रमणमुक्तमत्र तु निन्दामात्रमेव, सम्यग्दृशा हि सावद्यारम्भेषु निर्वाहार्थमपि प्रवर्त्तमानेन धिग्मां षट्कायवधादिपापिनमित्यादि हृदि भावनीयं, तथाऽऽह-"हिअए जिणाण आणा चरिअं मह एरिसं अउन्नस्स । एअं आलप्पालं अव्वो दूरं विसंवयइ ॥ १ ॥" यद्वाऽत्मार्थमिति कोऽर्थः ?-साधुनिमित्तमशने कृते मम पुण्यं भविष्यतीति मुग्धबुद्धितयाऽऽत्मपुण्यार्थं पापं करोति, परः पितृमातृपुत्रादिस्तत्पुण्यार्थं साधुदानाय पाककरणादौ परार्थम्, एवमुभयोः पुण्यार्थमुभयार्थं चशब्दाद्द्वेषेण

च । जं छव्विहववहारं न कुणइ सा छव्विहा जयणा ॥ १२ ॥ वंदण १ नमंसणं वा २ दाणा ३ णुपयाण ४ मसि
वज्जेइ । आलावं ५ संलावं ६ पुव्वमणालत्तगो न करे ॥ १३ ॥ रायाभिओगो अ १ गणाभिओगो २, बलाभि-
ओगो अ ३ सुराभिओगो ४। कंतारवित्ती ५ गुरुनिग्गहो अ ६, छ छिंडिआओ जिणसासणंमि ॥ १४ ॥
भाविज्ज मूलभूअं १ दुवारभूअं २ पइट्ठ ३ निहिभूअं ४। आहार ५ भायण ६ मिमं संमत्तं चरणधम्मस्स
॥ १५ ॥ अत्थि जिओ १ तह निच्चो २ कत्ता ३ भुत्ता य पुन्नपावाणं ४। अत्थि धुवं निव्वाणं ५ तस्सोवाओ ६ अ
छट्ठाणा ॥ १६ ॥" एषां भेदानां व्याख्या दर्शनसप्तत्यादिभ्यो ज्ञेयेति षष्ठगाथार्थः ॥ ६ ॥

॥ इति श्रीतपागच्छनायकपरमगुरुश्रीसोमसुन्दरसूरिशिष्यश्रीभुवनसुन्दरसूरिविनेयोपाध्याय-
रत्नशेखरगणिविरचितायामर्थदीपिकानाम्न्यां श्राद्धप्रतिक्रमणसूत्रवृत्तौ
सम्यक्त्वाधिकारः प्रथमः ॥ १ ॥

इदानीं चारित्राचारं प्रतिचिक्रमिषुः प्रथमं सामान्येनारम्भनिन्दनायाह—

छक्कायसमारंभे पयणे अ पयावणे य जे दोसा । अत्तट्ठा य परट्ठा उभयट्ठा चेव तं निंदे ॥ ७ ॥

षट्कायानां—भू १ जला २ नल ३ वायु ४ वनस्पति ५ त्रस ६ रूपाणां समारम्भे—परितापनादौ, नन्वन्य-
त्रागमे—"संरंभसमारंभे आरंभंमि तहेव य । मणं पवत्तमाणं तु निअत्तिज्ज जयं जई ॥१॥" इत्यादिना संरम्भ-

देवगुरुधर्मेष्वयमयं वा सत्य इति संशयानस्य ४, अनाभोगिकं विचारशून्यस्यैकेन्द्रियादेर्वा विशेषज्ञानविकलस्य, एवं सर्वप्रकारैर्मिथ्यात्वं परिहार्य । सम्यक्त्वं च सप्तषष्टिभेदैर्विशुद्धं स्याद्यदाहुः—चउसद्दहण ४ तिलिङ्गं ३ दसविणय १० तिसुद्धि ३ पंचगयदोसं ५ । अट्ठपभावण ८ भूसण ५ लक्खण ५ पंचविहसंजुत्तं ॥ १ ॥ छव्विहजयणा ६ ऽऽगारं ६ छब्भावणभाविअं च छट्ठाणं ६ । इअ सत्तट्ठिदंसणभेअविसुद्धं तु सम्मत्तं ॥ २ ॥ परमत्थसंथवो खलु १ सुमुणिअपरमत्थजइजणनिसेवा ॥ २ ॥ वावन्न ३ कुदिट्ठीण य वज्जण ४ मिअ चउह सद्दहणं ॥ ३ ॥ परमागमसुस्सूसा १ अणुराओ धम्मसाहणे परमो २ । जिणगुरुवेआवच्चे निअमो ३ सम्मत्तलिंगाइं ॥ ४ ॥ अरिहंत १ सिद्ध २ चेइअ ३ सुए अ ४ धम्मे अ ५ साहुवग्गे य ६ आयरिय । ७ उज्झाए ८ पवयणे ९ दंसणे १० विणओ ॥ ५ ॥ मणवायाकायाणं सुद्धी सम्मत्तसोहणी तत्थ । मणसुद्धी जिणाजिणमयवज्जमसारं मुणइ लोअं ॥ ६ ॥ तित्थंकरचलणाराहणेण जं मज्झ सिज्झइ न कज्जं । पत्थेति तत्थ नन्ने देवविसेसे हि वयसुद्धी ॥ ७ ॥ छिज्जंतो भिज्जंतो पीलिज्जंतोवि डज्झमाणोवि । जिणवज्जदेवयाणं न नमइ जो तस्स तणुसुद्धी ॥ ८ ॥" शङ्कादयः पञ्च दोषाः प्रागुक्ताः, "पावयणी १ धम्मकही २ वाई ३ नेमित्तिओ ४ तवस्सी अ ५ । विज्जा ६ सिद्धो अ ७ कई ८ अट्ठेव पभावगा भणिआ ॥ ९ ॥ जिणसासणे कुसलया १ पभावणा २ तित्थसेवणा ३ थिरया ४ । भत्ती अ ५ गुणा संमत्तदीवगा उत्तमा पंच ॥ १० ॥ लक्खिज्जइ सम्मत्तं हिययगयं जेहिं ताइं पंचेव । उवसम १ संवेगो २ तह निव्वेअ ३ णुकंप ४ अत्थिक्कं ५ ॥ १ ॥ परतित्थीणं तद्देवयाण तग्गहिअचेइआणं

निषेधे कथं न लोकविरुद्धत्वापभ्राजनादिदोषः?, उच्यते, पात्रबुद्ध्या तेषां न देयमेव, तथाऽर्हता दययौचित्यादिदानं तु न क्वापि निषिध्यते, यदुक्तं राजप्रश्नीयोपाङ्गे प्रदेशीनृपस्य नव्यार्हद्धर्मप्रतिपत्त्यनन्तरं शिक्षावसरे केशिगणधरेण–"मा णं तुमं पएसी! पुव्विं रमणिज्जे भवित्ता पच्छा अरमणिज्जे भविज्जासि"त्ति, श्रीमलयगिरिकृतैतद्वृत्तिर्यथा–'मा णं तुमं पएसी'त्यादिग्रन्थस्यायं भावार्थः–पूर्वमन्येषां दात्रा भूत्वा सम्प्रति जिनधर्मप्रतिपत्त्या तेषामदात्रा न भाव्यम्, अस्माकमन्तरायस्य जिनधर्मापभ्राजनस्य च प्रसक्ते"रिति ततो यथोक्तं मिथ्यात्वं सर्वं वर्ज्यं, तदुक्तं दर्शनशुद्धिप्रकरणे–"दुविहं लोइअमिच्छं देवगयं गुरुगयं मुणेअव्वं। लोउत्तरंपि दुविहं देवगयं गुरुगयं चेव ॥१॥ चउभेअं मिच्छत्तं तिविहं तिविहेण जो विवज्जेइ। अकलंकं सम्मत्तं होइ फुडं तस्स जीवस्स ॥ २ ॥" त्रिविधं त्रिविधेनेत्यत्र भावनामेवमाहुः–"एअं अणंतरुत्तं मिच्छं मणसा न चिंतइ करेमि। सयमेसो व करेऊ अन्नेण कए व सुट्ठु कयं ॥ १ ॥ एवं वाया न भणइ करेमि अण्णं व न भणइ करेहि। अन्नकयं न पसंसइ न कुणइ सयमेव काएण ॥२॥ करसन्नभमुहखेवाइएहिं नय कारवेइ अण्णेणं। अण्णकयं न पसंसइ अण्णेण कए व सुट्ठु कयं ॥३॥" अथवा मिथ्यात्वं पञ्चविधं, यदाह–"आभिग्गहिअं अणभिग्गहं च तह अभिनिवेसिअं चेव। संसइअमणाभोगं मिच्छत्तं पंचहा एअं ॥ १ ॥" आभिग्रहिकं पाषण्डिनां स्वस्वशास्त्रनियन्त्रितविवेकालोकानां परपक्षप्रतिक्षेपदक्षाणाम् १, अनाभिग्रहिकं प्राकृतजनानां सर्वदेवा वन्द्या न निन्द्याः, एवं सर्वे गुरवो धर्माश्चाराध्या इति २, आभिनिवेशिकं (तेषां ये) यथास्थितवस्तु जानन्तोऽपि दुरभिनिवेशविप्लावितमतयो, गोष्ठामाहिलादेरिव ३, सांशयिकं

मिहलोकार्थमपि श्रावकेण वर्जनीयमेव, प्रसङ्गाद्यनेकदोषसम्भवात्, प्रायो हि जीवा मन्दमुग्धवक्रबुद्धयः सम्प्रति विशिष्य, ते ह्येवं विमृशन्ति–यद्यनेन विशुद्धसम्यक्त्वेन महात्मना यक्षाद्याराधनं विधीयते तदा नूनमयमपि देवो मोक्षप्रदतया सम्यगाराध्य इत्यादिपरम्परया मिथ्यात्ववृद्धिस्थिरीकरणादिप्रसङ्गः, तथा चैहिकफलार्थमेव यक्षाद्याराधकस्यापि प्रेत्य बोधिर्दुष्प्रापः स्यात्, उक्तञ्च–"अन्नेसिं सत्ताणं मिच्छत्तं जो जणेइ मूढप्पा। सो तेण निमित्तेणं न लहइ बोहिं जिणाभिहिअं ॥ १ ॥" रावणकृष्णादिभिश्च तत्समयेऽर्हद्धर्मस्येतरधर्मेभ्योऽतिशायितया सर्वप्रतीतत्वेनापवादपदे यदि किञ्चिद्विद्याराधनादि कृतं तदाऽपि तदालम्बनग्रहणं नोचितं, यतः–"जाणिज्ज मिच्छदिट्ठी जे पडणालंबणाइ घिप्पंति। जे पुण सम्मदिट्ठी तेसिं पुणो चडइ पयडीए ॥ १ ॥" आवश्यकनिर्युक्तावप्युक्तं भद्रबाहुस्वामिना–"तत्थ समणोवासओ पुव्वामेव मिच्छत्ताओ पडिक्कमइ संमत्तं उवसंपज्जइ, नो से कप्पइ अज्जप्पभिई अन्नउत्थिए वा अन्नउत्थिअदेवयाणि वा अन्नउत्थियपरिग्गहिआणि वा अरिहंतचेइआणि वा वंदित्तए वा नमंसित्तए वा पुव्विं अणालित्तएणं आलवित्तए वा संलवित्तए वा, तेसिं असणं वा पाणं वा खाइमं वा साइमं वा दाउं वा अणुप्पयाउं वा, नन्नत्थ रायाभिओगेणं गणाभिओगेणं बलाभिओगेणं देवयाभिओगेणं गुरुनिग्गहेणं वित्तीकंतारेण"मिति, 'पुव्विं अणालित्तएण'त्ति पूर्वमालसेन त्वसम्भ्रमं लोकापवादभीरुतया कीदृशस्त्वमित्यादि प्रतिवाच्यमित्युक्तं तद्वृत्तौ। गुरुसमक्षं सम्यक्त्वालापकोऽप्यनयैव रीत्योचार्यते, ततो निर्वाहयितुमपि तथैव युज्यते, नन्वेवं तर्हि विप्रादीनामशनादि न दातव्यमेवेत्यागतं, तथा च चिरप्रसक्तदानस्यापि

जामातृभागिनेयभोजनादि ७४, सोमवारयुतामावास्यायां नवोदकीअमावास्यायां च नदीतडागादौ विशेषस्नानादि ७५, दीपोत्सवामावास्यायां पितृनिमित्तदीपप्रदानं ७६, कार्त्तिक्यादिपूर्णिमासु विशेषस्नानादि ७७, फाल्गुन्यां पौर्णमास्यां होलिकाप्रदक्षिणादि ७८, श्रावण्यां तु बलिपर्व ७९, एवं तत्तद्देशप्रसिद्धमनेकविधं लौकिकदेवगतं मिथ्यात्वम्। लौकिकगुरुगतं त्वेवम्–लौकिकगुरूणां ब्राह्मणतापसादीनां नमस्कारकरणं ब्राह्मणाग्रे पाडण (पण्ड्या) इति तापसाद्यग्रे ओं नमः शिवायेति भणनादि च १ मूलाश्लेषादिजाते बाले विप्रोक्तक्रियाकरणं २ विप्रादीनां कथाश्रवणं ३, तेभ्यो गोतिलतैलादिदानं भोजनादिदानं च ४ तेषां गृहेषु बहुमानार्थं गमनादि च ५। लोकोत्तरदेवगतं तु परतीर्थिकसङ्गृहीतजिनबिम्बार्चनादि सप्रत्ययश्रीशान्तिनाथपार्श्वनाथादिप्रतिमाणामिहलोकार्थं यात्रोपयाचितमाननादि च ३, लोकोत्तरगुरुगतं च लोकोत्तरलिङ्गेषु पार्श्वस्थादिषु च गुरुत्वबुद्ध्या वन्दनादि गुरुस्तूपादावैहिकफलार्थं यात्रोपयाचितादि च ४, ननु यथा वैद्यादयो व्याधिप्रतीकाराद्यर्थं धनभोजनवसनप्रदानादिना बहुमन्यन्ते तथा सप्रभावयक्षयक्षिण्यादीनामप्यैहलौकिकफलार्थं पूजोपयाचितादौ को दोषः?, मिथ्यात्वं हि तदा स्याद्यदि मोक्षप्रदोऽयमिति देवत्वबुद्ध्याऽऽराध्येत, यदाहुः–"अदेवे देवबुद्धिर्या, गुरुधीरगुरौ च या। अधर्मे धर्मबुद्धिश्च, मिथ्यात्वं तद्विपर्ययात् ॥ १ ॥" श्रूयते च विशुद्धदृढसम्यक्त्वरावणकृष्णश्रेणिकाभयकुमारादयोऽपि शत्रुजयपुत्रप्राप्त्याद्यैहिककार्यार्थं विद्यादेवताद्याराधनं कृतवन्त इति, ततश्चेहलोकार्थं यक्षाद्याराधनेऽपि किं नाम मिथ्यात्वं?, सत्यं, तत्त्ववृत्त्याऽदेवस्य देवत्वबुद्ध्याऽऽराधने एव मिथ्यात्वं तथाऽपि यक्षाद्याराधन-

अजाप्रतिपत् तद्दिने गोहिंसादि च ४४, भ्रातृद्वितीया ४५, शुक्लद्वितीयायां चन्द्रं प्रति दशिकादानं ४६, माघशुक्लतृतीयायां गौरीभक्तं ४७, अक्षयतृतीयादिनेऽकर्त्तनं लाहणकादिदानं च ४८, भाद्रपदे कृष्णकज्जलतृतीया शुक्ला तु हरितालिका तयोः कज्जलीदेवतापूजादि ४९, आश्विनशुक्लगोमयतृतीया ५०, मार्गशीर्षमाघकृष्णपक्षयोर्गणेशचतुर्थ्यामिन्दूदयेऽद्नादि ५१, श्रावणशुक्लनागपञ्चम्यां नागपूजादि ५२, पञ्चम्यादितिथिषु दध्यविलोडनाकर्त्तनादि ५३, माघशुक्लषष्ठ्यां सूर्यरथयात्रा ५४, श्रावणे शुक्ला चन्दनषष्ठी भाद्रपदे सूर्यषष्ठी झूलणाषष्ठी च ५६ श्रावणशुदिशीतलसप्तम्यां शीतलभोजनादि ५७ भाद्रशुक्लसप्तम्यां वैद्यनाथादेर्देवस्य सप्तम्याश्च पूजोपवासादि गृहसप्तके स्त्रीभिः कणभिक्षादि च ५८, बुधाष्टम्यां केवलगोधूममात्रभोजनादि ५९, भाद्रवदिजन्माष्टम्यामुत्सवादि शुक्लदूर्वाष्टम्यां विरूढादनादि ६०, आश्विने चैत्रशुक्लपक्षयोर्नवरात्रयोर्नागादिपूजोपवासादि ६१, चैत्राश्विनशुदिअष्टम्यां महानवम्यां गोत्रदेवताविशेषपूजादि ६२, भाद्रशुदिअक्षतनवम्यामक्षतान्नभोजनादि ६३, भाद्रशुदिअविधवदशम्यां जागरणादि ६४, विजयदशम्यां शमीप्रदक्षिणादि ६५, विष्णोः स्वापे उत्थाने तथा फाल्गुनशुदिआमलक्यां ज्येष्ठशुदि पाण्डवानां चैकादश्यां सर्वमासेषु वा तासूपवासादि ६६, सन्तानादिनिमित्तं भाद्रवावदिवत्सद्वादशी शुक्ला तु ओघद्वादशी ६७, ज्येष्ठशुदित्रयोदश्यां ज्येष्ठिन्यां सक्तुकदानादि ६८, धनत्रयोदश्यां स्नपनादि ६९, फाल्गुनवदिचतुर्दश्यां शिवरात्रावुपवासजागरणादि ७०, चैत्रवदिचतुर्दश्यां नवसतीयात्रादि ७१, भाद्रवदिचतुर्दश्यां पवित्रकरणादि ७२, चतुर्दश्यामनन्तबन्धनादि ७३, अमावास्यायां

स्थापनं ४, पुत्रजन्मादौ षष्ठीदिने षष्ठीदेवतापूजादि ४, विवाहे मातॄणां स्थापनं ६, चण्डिकादीनामुपयाचितकरणं ७, तोतुलाग्रहादिपूजनं ८, सूर्यचन्द्रग्रहणव्यतिपातादौ विशेषतः स्नानदानपूजादि ९, पितॄणां पिण्डप्रदानं १०, रेवंतपन्थदेवतयोः पूजनं ११, क्षेत्रे सीताया हलदेवतायाः कृषिप्रारम्भेऽर्चनं १२, पुत्रादिजन्मनि मातृशरावाणां वूढानामकानां भरणं १३, सुवर्णरूप्यरञ्जितवस्त्रपरिधानदिने सोनिणिरूपिणिरंगिणिदेवताविशेषानाश्रित्य विशेषपूजालाहणकादिदानं च १४, मृतकार्थं जलाञ्जलितिलदर्भजलघटदानादि १५, नदीतीर्थादौ मृतकदाहः १६, मृतकार्थे शण्डविवाहः १७, धर्मार्थं सपत्नीपूर्वजपितॄणां प्रतिमाकारणं १८, भूतानां शरावदानं १९, श्राद्धद्वादशाहिकमासिकषाण्मासिकसांवत्सरिकाणि २०, प्रपादानं २१, कुमारिकाभोजनदानं २२, धर्मार्थं परकीयकन्यायाः पाणिग्रहणकारणं २३, नानायज्ञविधापनं २४, लौकिकतीर्थे यात्रोपयाचितदानतुण्डमुण्डमुण्डनाङ्कदापनादि २५, तद्यात्रानिमित्तं भोजनादि २६, धर्मार्थं कूपादिखननं २७, क्षेत्रादौ गोचरदानं २८, पितॄणां निमित्तं भोजनात् हान्तकारदानं २९, काकमार्जारादीनां पिण्डदानं ३०, पिप्पलनिम्बवटाम्रादिवृक्षारोपणसेचनादि ३१, शण्डाङ्कनपूजनादि ३२, गोपुच्छपूजादि ३३, शीतकालादौ धर्मार्थमग्निप्रज्वालनम् ३४, उम्बराम्लिनीचुल्ल्यादिपूजनं ३५ राधाकृष्णादिरूपकारिनटप्रेक्षणकाद्यवलोकनं ३६, सूर्यसङ्क्रान्तिदिने विशेषपूजास्नानदानादि ३७, उत्तरायणदिने विशेषस्नानादि ३८, आदित्यसोमवारादिष्वेकभक्तादि ३९, शनिवारे पूजार्थं विशेषतिलतैलप्रदानस्नपनादि ४०, कार्त्तिकस्नानं ४१, माघस्नानं घृतकम्बलदानादि च ४२, धर्मार्थं चैत्रे चचरीदानं ४३,

च नीतो गवाशनैः ॥ १ ॥ गवाशनानां स गिरः श्रृणोति, अहं च राजन्! मुनिपुङ्गवानाम्। प्रत्यक्षमेतद्भवताऽपि दृष्टं, संसर्गजा दोषगुणा भवन्ति ॥ २ ॥ आस्तां सचेतसां सङ्गात्सदसत्स्यात्तरोरपि। अशोकः शोकनाशाय, कलये तु कलिद्रुमः ॥ ३ ॥" अतः कुलिङ्ग्यादीनां सर्वथा परिचयः परिहार्यः संविग्नगीतार्थसाधुसाधर्मिकाणां च यत्नेनापि कार्यः, श्राद्धस्य निवासोऽपि तत्सामग्र्यामेव युज्यते, तथैव स्वधर्मनिर्वाहस्थैर्यवृद्धिसम्भवादन्यथा नन्दमणिकारस्येव स्वीकृतधर्मभ्रंशापत्तेः, भण्यते च-"जत्थ पुरे जिणभवणं समयविऊ साहुसावया जत्थ। तत्थ सया वसिअव्वं पउरजलं इंधणं जत्थ ॥ १ ॥" आद्यपञ्चाशकेऽपि-"निवसेज्ज तत्थ सद्धो साहूणं जत्थ होइ संपाओ। चेइअघराइं जंमि अ तयन्नसाहम्मिआ चेव ॥१॥" सिथ्यादृक्संस्तवे श्रीहरिभद्रसूरिशिष्यसिद्धसाधुज्ञातं, स सौगतमतरहस्यसमग्रहणार्थं गतस्तैर्भावितो गुरुदत्तवचनत्वान्मुत्कलापनाय गतो गुरुभिर्बोधितो बौद्धानामपि दत्तवचनत्वान्मुत्कलापनार्थं गतः पुनस्तैर्भावितः, एवमेकविंशतिवारान् गतागतकारी तत्प्रतिबोधार्थं गुरुकृतललितविस्तराख्यशक्रस्तववृत्त्या दृढं प्रतिबुद्धः श्रीगुरुपार्श्वे तस्थौ, इति पञ्चमोऽतिचारः ५। एवं सम्यक्त्वातिचारे सति यद्बद्धमित्यादि पूर्ववत्। सम्यक्त्वं हि सर्वप्रकारमिथ्यात्वपरिहारेणैव निष्कलङ्कतां कलयति, मिथ्यात्वं च द्विविधं-लौकिकं लोकोत्तरं च उभयमपि च द्विविधं-देवविषयं गुरुविषयं चेति मिथ्यात्वस्य चत्वारो भेदाः, तत्र देवगतलौकिकमिथ्यात्वस्थानानि यथा-हरिहरब्रह्मादिदेवानां भवनेषु गमनं प्रणामपूजादि च १, कार्यारम्भे हट्टोपवेशनादौ लाभाद्यर्थं विनायकादीनां नामग्रहणम् २, चन्द्ररोहिण्योः गीतगानादि ३, विवाहे विनायक-

त्ययात्कुलिङ्गिभिः सह वा संवासभोजनालापादिरूपः परिचयः संस्तवः, मिथ्यादृष्टिभिः सहैकत्रवासादिपरिचये
सुखसाध्यतत्प्रक्रियाश्रवणात्सुखसाध्यतत्क्रियादर्शनाच्च दृढसम्यक्त्ववतोऽपि दृष्टिभेदः संभाव्यते किमुत
मन्दबुद्धेरभिनवधर्म्मस्येति तत्संस्तवोऽपि सम्यक्त्वदोषः, उपलक्षणत्वान्निह्नवादीनामपि प्रशंसायां संस्तवे च
सम्यक्त्वातिचारः, यदागमः—"अंबस्स य निम्बस्स य दुण्हंपि समागयाइं मूलाइं । संसग्गीइ विणट्ठो अंबो निंब-
त्तणं पत्तो ॥१॥ जो जारिसेण मित्तिं करेइ अचिरेण तारिसो होइ । कुसुमेहिं सह वसंता तिलावि तग्गंधिआ
हुंति ॥ २ ॥" अत्र नोदकवचनं—"सुचिरंपि अच्छमाणो वेरुलिओ कायमणिअउम्मीसो । न उवेइ कायभावं
पाहन्नगुणेण निअएण ॥ ३ ॥ सुचिरंपि अच्छमाणो नलथंभो उच्छुवाडमज्झंमि । कीस न जायइ महुरो जइ
संसग्गी पमाणं ते ? ॥ ४ ॥" कवयोऽप्याहुः—असाधुः साधुर्वा भवति खलु जात्यैव पुरुषो, न सङ्गाद्दौर्जन्यं न च
सुजनता कस्यचिदपि । समाने सम्बन्धे मणिभुजगयोर्जन्मजनिते, मणिर्नाहिर्दोषान् स्पृशति नच सर्पो मणिगु-
णान् ॥ ५ ॥" अत्रोत्तरं—"भावुगअभावुगाणि अ लोए दुविहाइं हुंति दव्वाइं । वेरुलिओ तत्थ मणी अभावुगो
अन्नदव्वेहिं ॥६॥ जीवो अणाइनिहणो तब्भावणभाविओ अ संसारे । खिप्पं सो भाविज्जइ मेलणदोसाणुभावेण
॥ ७ ॥ जह नाम महुरसलिलं सागरसलिलं कमेण संपत्तं । पावइ लोणभावं मेलणदोसाणुभावेणं ॥ ८ ॥ एवं
खु सीलवंते असीलवंतेहिं मेलिओ संतो । पावइ गुणपरिहाणिं मेलणदोसाणुभावेणं ॥ ९ ॥" सत्सङ्गकुसङ्ग-
योश्च शुकद्वयोदाहरणं, तदाह—"माताऽप्येका पिताऽप्येको, मम तस्य च पक्षिणः । अहं मुनिभिरानीतः, स

स्या वस्त्राञ्चले स्वनाममुद्रिकां बद्ध्वा मया नाममुद्रा हारितेत्युवाच, अभयमन्त्रिणा तद्देवकुलद्वारे एकैकमानुषशोधने तदञ्चले मुद्रां दृष्ट्वा साऽन्तःपुरे क्षिप्ता, राज्ञा हृष्टेनोढा, क्रीडायां पृष्ठाधिरोहे राज्ञा हसिते प्राक्तनतत्कुलादिसम्बन्धकथने निर्वेदात् प्रव्रजिता प्रभुपार्श्वे इति तृतीयोऽतिचारः ३। कुलिङ्गिषु-शाक्यादिष्वहो ! महातपस्विन एत इत्यादि वर्णनं प्रशंसा, मिथ्यादृष्टिप्रशंसायां हि मुग्धबुद्धीनां मिथ्यादृष्टिष्वप्यादरबहुमानादि स्यादित्येषाऽपि सम्यक्त्वं दूषयति, उक्तञ्च-"मिच्छत्तथिरीकरणं अतत्तसद्धा पवित्तिदोसो अ। तह तिव्वकम्मबंधो पसंसओ इह कुदंसणिणं ॥ १ ॥" मिथ्यादृष्टिषु हि महातपस्तपनाद्यपि दृष्ट्वाऽज्ञानकष्टमेतेषामित्याद्येव चिन्तयितव्यं वक्तव्यं च स्यात्, यत उक्तम्-"जं अन्नाणी कम्मं खवेइ बहुआहिं वासकोडीहिं। तं नाणी तिहिं गुत्तो खवेइ ऊसासमित्तेण ॥ १ ॥ सट्ठिं वाससहस्सा तिसत्तखुत्तोदएण धोएण। अणुचिन्नं तामलिणा अन्नाणतवुत्ति अप्पफलो ॥ २ ॥ तामलितणे तवेण जिणमइ सिज्झइ सत्तजण। अन्नाणह दोसेण तामलि ईसाणहि गओ ॥ ३ ॥" अस्यां सिंहपुरीवासिपरमार्हतगीतार्थनैष्ठिकलक्ष्मणश्रेष्ठिदृष्टान्तः-तेन सभानिविष्टेनान्यदैको मासक्षपकः परिव्राट् तपसि श्लाघितः, तच्छ्रुत्वा द्वौ श्राद्धौ तं नन्तुं सादरं गतौ व्युद्ग्राहितौ च तेन तथा यथाऽर्हन्मतावज्ञाकारिणौ मृत्वा नरकादिनानाभवेषु भ्रान्तौ, लक्ष्मणश्रेष्ठी तु चिरं श्राद्धधर्ममाराध्य सौधर्मे सुरोऽभूत्, च्यवनासन्नौ च तेन पृष्टः श्रीवीरः प्राह-सप्ततिर्यग्भवानन्तरं नृत्वप्राप्तावपि प्राक्कुलिङ्गिप्रशंसया बोधिस्तेऽतिदुर्लभः, ततोऽपि कतिपयभवान् भ्रान्त्वा पद्मनाभार्हत्तीर्थे त्वं सेत्स्यसीति, इति तुर्योऽतिचारः ४। तथा कुलिङ्गिषु विभक्तिव्य-

शुद्ध्यन्ति, मनः सत्येन शुद्ध्यति । विद्यातपोभ्यां भूतात्मा, बुद्धिर्ज्ञानेन शुद्ध्यति ॥ २ ॥ नित्यं शुद्धः कारुहस्तः, पण्यं यच्च प्रसारितम् । ब्रह्मचारिगतं भैक्षं, नित्यं शुद्धमिति स्थितिः ॥ ३ ॥" शौचं हि लोकेऽपि यथानिर्वाहमेव व्यवह्रियते सर्वत्रापि, न त्वन्यथा, बालस्त्रीगवादिपशुप्रभृतिषु मलिनपरिकर्मितकोरकवस्त्रपट्टकूलकरपत्रिकाकुतुपोपानद्वृकखलसावद्धसूर्पकशाटीप्रत्याकारदन्तिदन्तश्रीकरीचामरकम्बलादिग्रहणे मृगमदजवाधिपोहीसकगोरोचनागरुधूपाशुचिस्थानकवर्द्धितकेतकीदलादिभोगे मलिनसंस्कृतपूगीफलसेल्लरकखर्जूरगुडादिभक्षणे नानास्थानश्मशानमृतकमलमूत्राद्याक्रान्तनद्यादिजलस्नानपानादौ च सर्वत्र पावित्र्यस्यैव व्यवहारात्, उक्तञ्च मनुस्मृतौ-"रथ्या कर्दमतोयानि, स्पृष्टान्यन्त्यैश्च वायसैः । मारुतेनैव शुद्ध्यन्ति पक्वेष्टकचितानि च ॥ १ ॥ मक्षिकाविप्रुषं छाया, गौरश्वः सूर्यरश्मयः । रजो भूर्वायुरग्निश्च, स्पर्शमेध्यानि निर्दिशेत् ॥२॥" मिताक्षरास्मृतावपि-"पन्थानश्च विशुद्ध्यन्ति, सोमसूर्यांशुमारुतैः । श्मश्रु चास्यगतं दन्तं, सिक्थं त्यक्त्वा ततः शुचिः ॥३॥" अतो विवेकिना विद्वज्जुगुप्सा सर्वथा त्याज्या, अत्रोदाहरणं यथा-विवाहे श्राद्धसुता सर्वाङ्गविभूषिता साधूनां प्रतिलाभनेऽङ्गमलदुर्गन्धाद्दध्यौ जिनधर्मोऽनवद्यः परं प्रासुकोदकेन मुनीनां यदि स्नानं स्यात्तदा को दोष इत्यादि, सा चानालोच्य मृता राजगृहे गणिकाकुक्षौ उत्पेदे, गर्भेऽप्यरतिप्रदानान्मात्रा त्यक्ताऽतितीव्रदुर्गन्धा राज्ञा श्रेणिकेन तद्दुर्गन्धत्वकर्मपृच्छायां श्रीवीरेणोक्तं-पात्रदानादियं ते प्रिया भाविनी क्रीडाया अन्ते पृष्ठेऽधिरोहणाच्च सा ज्ञेयेति, सा च मुहूर्त्तेनापगतदुर्गन्धा आभीर्या नीता वर्द्धिता यौवने कौमुदीमहे श्रेणिकस्तत्स्पर्शेनानुरक्तस्त-

सक्तत्वादिना शीघ्रं नागतस्तत आचार्यैश्चिन्तितं–मुधाऽयं चारित्राराधनादिक्लेशस्त्यजामि लिङ्गमित्यादि तावता शिष्यसुर उपयुक्तः परीक्षार्थं नाटकविकुर्वणादि आचार्येण षण्मासीं नाटकालोकनार्थं मार्गे पृथिवीकायिकादिपट्कुमारालङ्कारलुण्टनादि शिष्यसुरेण श्राद्धीभूय निमन्त्रणे सूरिणा चाग्रहणे बलान्मोदकक्षेपार्थं पात्रकर्षणेऽलङ्कारदर्शनाल्लज्जादि देवेन बोधितश्चेति विचिकित्सास्वरूपं। 'विउच्छ'त्ति पाठे तु विउच्छा–विद्वज्जुगुप्सा विज्जुगुप्सा वा, तत्र विद्वांसो विदो वा ज्ञाततत्त्वतया साधवस्तेषां जुगुप्सा, तथाहि–मलमलिनगात्रोपधीन् साधून् दृष्ट्वा मूढधीरेवं चिन्तयति–यथा स्नानाकरणादिना प्रस्वेदजलक्लिन्नमलत्वाद्दुर्गन्धिवपुरुपधय एते मुनयः, को दोषः स्याद्यदि प्रासुकोदकेनाङ्गोपधिक्षालनं कुर्वीरन्नित्यादि, स हि मूढत्वादेवं न वेत्ति यन्मुनीनामजिह्मब्रह्मविशुद्ध्यर्थं विभूषादिवर्जिनां मलमलिनत्वं प्रत्युत विशेषगुणशोभाहेतुः, आह च–"मलमइल पंकमइला धूलीमइला न ते नरा मइला। जे पावपंकमइला ते मइला जीवलोगंमि ॥ १ ॥" लौकिका एवं पठन्ति–"शुचिर्भूमिगतं तोयं, शुचिर्नारी पतिव्रता। शुचिर्धर्मपरो राजा, ब्रह्मचारी सदा शुचिः ॥ १ ॥ स्नानमुद्वर्त्तनाभ्यङ्गं, नखकेशादिसत्क्रियाम्। गन्धमाल्यं प्रदीपं च, त्यजन्ति ब्रह्मचारिणः ॥ २ ॥ सत्यं शौचं तपः शौचं, शौचमिन्द्रियनिग्रहः। सर्वभूतदया शौचं, जलशौचं च पञ्चमम् ॥ ३ ॥" याज्ञवल्क्यस्मृतावपि–"ब्रह्मचर्यस्थितो नैकमन्नमद्यादनापदि। दन्तधावनगीतादि, ब्रह्मचारी विवर्जयेत् ॥ १ ॥" मनुस्मृतावपि पञ्चमाध्याये–"क्षान्त्या शुद्ध्यन्ति विद्वांसो, दानेनाकार्यकारिणः। प्रच्छन्नपापा जापेन, तपसा वेदवित्तमाः ॥ १ ॥ अद्भिर्गात्राणि

यथा-भद्राचार्यस्य पञ्चशती साधवः द्वादशशती साध्व्यः, तद्गच्छे च काञ्जिकमवश्रामणं त्रिदण्डोद्वृत्तोष्णोदकं च मुक्त्वा वारि न भुज्यते, रज्जार्यायाश्च दुर्दैवाद्देहो गलत्कुष्ठेन विनष्टः, अन्यसाध्वीभिर्दुष्करकारिके! किमेतत्? इति प्रश्ने तयोक्तम्-एतेन प्रासुकपानकेन देहो मे विनष्ट इति, तच्छ्रुत्वैव क्षुभितं सर्वसाध्वीनां हृदयं, वर्जयामः प्रासुकपानकमिति, तत्रैकया चिन्तितं-सम्प्रत्येव जातु मे देहः शाटं २ पतति तदाऽपि प्रासुकोदकं न त्यजामि, नहि देहस्य प्रासुकोदकेन विनाशः किन्तु प्राग्दुष्कर्मणैव, हा धिगनया महापापया किमिदमीदृशमसमञ्जसमवाच्यमुक्तं, यतः-"किं केण कस्स दिज्जइ विहिअं को हरइ हीरए कस्स। सयमप्पणा विढत्तं अल्लियइ सुहंपि दुक्खंपि ॥ १ ॥" एवं ध्यायन्त्या एव तस्याः केवलमुत्पेदे, तया सर्वार्यिकादीनां सन्देहो हृतः, रज्जया रक्तपित्तदूषितया कोलिकमिश्रः स्निग्धाहारो भुक्तस्तथा श्राद्धसुतस्याप्रासुकं पानकं सङ्गृह्य मुखं प्रक्षालितं, रुष्टया च शासनदेव्या शिक्षार्थं किञ्चिच्चूर्णं रज्जाया आहारान्तः क्षिप्तं तेन देहो विनष्टो नतु प्रासुकोदकेनेति, ततो रज्जयोक्तं-भगवति! मे प्रायश्चित्तं देहि, तयोक्तं-तव शुद्धिहेतुः प्रायश्चित्तमेव नास्ति, त्वया तत्तादृग्दुर्वचननिकाचितकर्मणा कुष्ठभगन्दरजलोदरश्वासार्शोगण्डमालादिमहादुःखमनन्तभवैरवश्यं वेदितव्यं, अन्यासामार्याणां तु तया प्रायश्चित्तं दत्तमिति, एवमगीतार्थतायां दुरन्तदोषं परिभाव्य धर्मविरुद्धं वचः सर्वथा त्याज्यम्। विचिकित्सायां चाषाढभूत्याचार्यदृष्टान्तः, तैर्हि बहुशिष्यनिर्यापकैरन्यदैकः स्वशिष्यः सम्यग् निर्यापितः, देवत्वे त्वया स्वं दर्शनीयमिति दृढं सङ्केतितश्च, तथाऽपि स सुरीभूतो व्याक्षिप्त-

यत्रापि च सुराः प्रकटीभूय स्वं दर्शयन्ति दिव्यभोगर्द्धिं च पूरयन्ति तत्रापि दृढतमस्नेहाद्याकृष्टत्वमेव हेतुर्यथा गोभद्रदेवस्य शालिभद्रं प्रति, आह च सङ्ग्रहणिकारः–"संकंतदिव्वपेमा विसयपसत्तासमत्तकत्तव्वा । अणहीणमणुअकज्जा नरभवमसुहं न इंति सुरा ॥ १ ॥ चत्तारि पंच जोअणसयाइं गंधो अ मणुअलोगस्स । उड्ढं वच्चइ जेणं न हु देवा तेण आवंति ॥२॥ पंचसु जिणकल्लाणेसु चेव महरिसितवाणुभावाओ । जम्मंतरनेहेण य आगच्छंती सुरा इहयं ॥३॥" तदेवं विचिकित्साऽपि भगवद्वचनानाश्वासरूपत्वात्सम्यक्त्वस्य दोषः । ननु शङ्काऽपि सन्देहरूपा तदेतस्याः शङ्कातः कः प्रतिविशेषः?, उच्यते, शङ्का हि द्रव्यगुणविषया इयं तु क्रियाविषयैवेति, यस्त्वत्यन्तं विपर्यस्तमतिः कस्यचित्सद्धर्ममाराधयतोऽपि प्राग् दुष्कर्मवशादुपस्थिते किञ्चि(कस्मिंश्चि)द्व्यसने धर्मकरणादिदं जातमिति चिन्तयति वदति वा तस्यान्धस्येव सम्यग्दर्शनमेव क?, धर्मस्वरूपस्यैवापरिज्ञानात्, न ह्यमृतात्कस्यापि मृतिर्घटते पानीयाद्वा प्रदीपनोत्थानं तरणेर्वा तमःप्रसरणं सुधांशोर्वा वह्निकणवर्षणं कल्पद्रुमादेर्वा दारिद्र्योपद्रवः कृशानोर्वा शीतविप्लवः, जातुचिदमृतादेरपि मृत्यादि स्यान्न तु कल्पान्तेऽपि धर्मकृत्याद्विरूपसम्भवो भूतो भवति भविष्यति वा, अन्यस्यापि चालीकमालप्रदानं महते दोषाय किं पुनस्त्रैलोक्येऽप्यतिशयालोः सकलश्रेयःपरमनिमित्तभूतस्य धर्मस्य?, अतस्तस्य धर्मद्वेषिणो धर्मनिन्दासादरस्य परेषामपि बोधिबीजविध्वंसिनो दुर्लभबोधेरनन्तसंसारिणः कुतस्त्यमत्रामुत्र च श्रेयः?, यतः–"न निमित्तद्विषां क्षेमो, नायुर्वैद्यकविद्विषाम् । न श्रीर्नीतिद्विषामेकमपि धर्मद्विषां नहि ॥ १ ॥" इह महानिशीथोक्तं रज्जार्यिकाज्ञातं

दिपरायणा विषयानुपभुञ्जाना एव परलोकेऽप्यभीष्टसुखेन युज्यन्त इति साधीयानेषोऽपि धर्म इत्यादि, दृश्यन्ते हि मुग्धबुद्धयः स्थलनिम्नक्षेत्रभूबीजवापककर्षुकवद्धर्मार्थितया सर्वदर्शनान्याराधयन्तः, एवं चाऽऽकाङ्क्षाऽपि परमार्थतो भगवदर्हत्प्रणीतागमानाश्वासरूपा सम्यक्त्वं दूषयति, अत्र ज्ञातमेवं–कश्चिद्द्विजो धाराभिधस्वगोत्रदेव्याराधकश्चामुण्डामपि सप्रभावां निशम्याराधयामास, अन्येद्युर्नद्याः पूरेण प्लाव्यमानो धावस्व धारे! धावस्व चामुण्डे! मां रक्ष २ इत्यादिवादी तत्रागताभ्यामप्युभाभ्यां देवीभ्यां मिथः ईर्ष्ययोपेक्षितो ब्रुडितश्चेत्यन्यान्याकाङ्क्षा [न] कार्येति द्वितीयोऽतिचारः २। 'विगिच्छ'त्ति विचिकित्सा तपस्तपनादौ धर्मकार्ये फलं प्रति सन्देहः, सा चैवम् उभयथाऽपि हि क्रिया दृश्यन्ते सफला अफलाश्च कृषीबलादीनामिव, अतः श्रीजिनधर्मेऽप्यस्य महतस्तपस्तपनकष्टानुष्ठानादिक्लेशस्य सिकताकणकवलवन्निःस्वादस्यायत्यां फलसम्पद्भविन्त्री न वेति, मूढबुद्धयो ह्येवं चिन्तयन्ति–सम्यक्समाराधितश्राद्धयतिधर्मा महातपस्विनः प्रान्तसमयस्पष्टसञ्जाताराधनाऽनशनादिकृत्याः पण्डितमरणेन कालं कृतवन्तः प्रान्तसमयकृतसङ्केता अपि देवभूयं गता न कापि स्वं दर्शयन्ति ज्ञापयन्ति वा, ततस्तपस्तपनादेः क्लेशमात्रमेव फलं सम्भावयाम इत्यादि, नत्वेवं तत्त्वमवबुध्यन्ते यत्सम्यग्धर्माराधकाः प्रेत्य देवत्वं प्राप्तास्तत्तादृग्विमानदेवाङ्गनादिदिव्यमहर्द्धिलाभादिना प्राग्भवसम्बन्धिनः स्मरन्त्यपि न, जातु स्मरणेऽपि सम्प्रत्येव प्राग्भवस्थाने यामि स्वं दर्शयामीत्यादि चिन्तयन्तोऽपि दिव्यभोगर्द्धिरसासक्तत्वादिना प्रभूतमपि समयमतिवाहयन्ति तावता च प्राग्भवसम्बन्धिमनुष्याणामायूंष्यपि समाप्यन्त इति कः कस्य स्वं दर्शयिष्यति?,

भणियं भयवया इहं खित्ते। आणाजुत्ताणमियं न होइ अहुणत्ति वामोहो ॥ १ ॥" केचिच्च भावा निगोदादयः केवलागमगम्याः, यतः-"गोला य असंखिज्जा अस्संखनिग्गोअओ हवइ गोलो। इक्किक्कंमि निगोए अणंतजीवा मुणेयव्वा ॥ १ ॥ जइआ होही पुच्छा जिणाण मग्गंमि उत्तरं तइआ। इक्कस्स निगोअस्स य अणंतभागो अ सिद्धिगओ ॥२॥" न चात्र हेतुदृष्टान्ताद्यस्ति, तदुक्तम्-"आणागिज्झो अत्थो आणाए चेव सो कहेअव्वो। दिट्ठंतिउ दिट्ठंता कहणविहि विराहणा इहरा ॥ १ ॥" श्रीजिनभद्रगणिक्षमाश्रमणोऽप्यूचे-"कत्थइ मइदुव्बल्लेण तव्विहायरिअविरहओ वावि। नेअगहणत्तणेण य नाणावरणोदएणं च ॥१॥ हेऊदाहरणासंभवे अ सइ सुट्ठु जं न बुज्झिज्जा। सव्वण्णुमयमवितहं तहावि तं चिंतए मइमं ॥ २ ॥ अणुवकयपराणुग्गहपरायणा जं जिणा जगप्पवरा। जिअरागदोसमोहा य नन्नहा वाइणो तेणं ॥३॥" शङ्कायां ज्ञातं यथा-बह्वाराद्धसिद्धनरेणेयं षण्मासीं नित्यं कण्ठस्था प्रत्यहं ५०० पञ्चशतदीनारप्रदेत्युक्त्वा द्वयोः कन्था दत्ता, एकेन शङ्कया जनह्रिया त्यक्ताऽन्येन षण्मासीं व्यूढा स महर्द्धिर्जज्ञे अतः शङ्का न कार्येतिप्रथमोऽतिचारः १। क्षमादिगुणलेशदर्शनादिना परदर्शनाभिलाष आकाङ्क्षा, साऽपि सर्वविषया देशविषया च, सर्वविषया सर्वपाषण्डिधर्म्माकाङ्क्षालक्षणा देशविषयाकाङ्क्षा तु सुगताद्यन्यतरदर्शनाभिलापरूपा, यथा सुगतेन भिक्षूणामक्लेशको धर्म उपदिष्टः स्नानान्नपानाच्छादनशयनीयादिषु सुखानुभवद्वारेणैव, यदाह-"मृद्वी शय्या प्रातरुत्थाय पेया, मध्ये भक्तं पानकं चापराह्णे। द्राक्षाखण्डं शर्करा चार्द्धरात्रे, मोक्षश्चान्ते शाक्यसिंहेन दृष्टः ॥ १ ॥" तथा परिव्राजकभौतब्राह्मणादयः स्नाना-

सेसु ॥ १४ ॥" 'अणभिग्गहिओ'त्ति अनाग्रही शाक्यादिप्रवचनेषु चिलातीपुत्रवत्, "जो अत्थिकायधम्मं सुअधम्मं खलु चरित्तधम्मं च। सद्दहइ जिणाभिहिअं सो धम्मरुइत्ति नायव्वो ॥१५॥" इति सम्यक्त्वस्वरूपम् ॥ अस्मिंश्च परमरहस्यभूते शङ्कादयः पञ्चातीचाराः परिहार्याः। अथ सूत्रगाथाव्याख्या–'संक'त्ति शङ्का–सन्देहः, सा च सर्वविषया देशविषया च, तत्र सर्वविषयाऽस्ति वा नास्ति वा धर्मः यद्वा जिनधर्मः सत्योऽसत्यो वेत्यादि, देशशङ्का एकैकवस्तुगोचरा यथाऽस्ति जीवः परं सर्वगतोऽसर्वगतो वा पृथ्व्यादीनां वा कथं सजीवत्वं? निगोदादयो वा कथं घटन्ते? यद्वा सम्प्रति यतिचारित्रमत्रास्ति न वा? इत्यादि, इयं द्विविधाऽप्यर्हदुक्ततत्त्वेष्वप्रत्ययरूपा सम्यक्त्वं दूषयति, यतः केचन भावा हेतुगम्या यथा वनस्पत्यादीनां सजीवत्वं, तथा च प्रयोगः–वनस्पतयः सचेतना जलाद्याहारग्रहणाग्रहणाभ्यां चयापचयदर्शनान्मनुष्यवत्, आचाराङ्गेऽप्युक्तम्–"इमंपि जाइधम्मयं एअंपि जाइधम्मयं इमंपि वुड्ढिधम्मयं एयंपि वुड्ढिधम्मयं इमंपि चित्तमंतयं एयंपि चित्तमंतयं इमंपि छिन्नं मिलाइ एयंपि छिन्नं मिलाइ इमंपि आहारगं एयंपि आहारगं इमंपि अणिच्चयं एयंपि अणिच्चयं इमंपि असासयं एयंपि असासयं इमंपि चओवचइअं एअंपि चओवचइअं इमंपि विप्परिणामयं एयंपि विप्परिणामयं"मिति, 'इमं'ति मनुष्यशरीरम् 'एअं'ति वनस्पतिशरीरं 'जाइधम्मयं'ति उत्पत्तिधर्मकं 'विप्परिणामयं'ति विविधपरिणामं तत्तद्रोगसम्पर्कात्, तदेवं वनस्पतिसचेतनत्वादयो भावा हेतुगम्या दृष्टान्तेन दर्शयितुं शक्यत्वाद्दार्ष्टान्तिकाश्चोच्यन्ते, एवं सम्प्रत्यत्र यतिचारित्रसद्भावोऽपि, यदुक्तम्–"दुप्पसहंतं चरणं जं

४ वीअरुइमेव ५। अभिगम ६ वित्थाररुई ७ किरिआ ८ संखेव ९ धम्मरुई १० ॥ ४ ॥ भूअत्थेणाहिगया जीवाजीवा य पुन्नपावं च। सहसंमइआऽऽसवसंवरो अ रोएई निसग्गो ॥ ५ ॥" 'भूअत्थ'त्ति सद्भूता अमी-अर्था इति सद्भूतार्थत्वेन 'सहसंमइअ'त्ति सहसन्मत्या जातिस्मृतिप्रतिभादिरूपया, "जो जिणदिट्ठे भावे चउ-विहे सद्दहाइ सयमेव। एमेव नन्नहत्ति अ स निसग्गरुइत्ति नायव्वो ॥ ६ ॥" 'चउविहे'त्ति द्रव्यादिभेदैर्नामा-दिभेदैर्वा, "एए चेव हु भावे उवइट्ठे जो परेण सद्दहइ। छउमत्थेण जिणेण व उवएसरुइत्ति नायव्वो ॥ ७ ॥ रागो दोसो मोहो अन्नाणं जस्स अवगयं होइ। आणाए रोयंतो सो खलु आणारुई नाम ॥ ८ ॥" 'आणाए'त्ति आज्ञयैवाचार्यादिसम्बन्धिन्या जीवादि प्रतिपद्यमानो माषतुषादिवत्, "जो सुत्तमहिज्जंतो सुएण ओगाहइ उ सम्मत्तं। अंगेण बाहिरेण व सो सुत्तरुइत्ति णायव्वो ॥ ९ ॥" 'ओगाहइ'त्ति प्राप्नोति सम्यक्त्वं रहस्यग्रहणार्थं कपटसंयतीभूतशाक्यभक्तगोविन्दवाचकवत्, "एगेण अणेगाइं पयाइ जो पसरइ उ सम्मत्तं। उदएव्व तिल्ल-बिंदू सो वीअरुइत्ति नायव्वो ॥१०॥" 'एगेण'त्ति जीवाद्येकपदेन रुचितेन जीवाजीवाद्यनेकपदेषु रुचिमान्, "सो होइ अभिगमरुई सुअनाणं जेण अत्थओ दिट्ठं। इक्कारसमंगाइं पइन्नगं दिट्ठिवाओ अ ॥११॥" 'पइन्न'त्ति प्रकीर्ण-कानि–उत्तराध्ययनादीनि, "दव्वाण सव्वभावा सव्वपमाणेहिं जस्स उवलद्धा। सव्वाहि नयविहीहि अ वित्थाररुइत्ति नायव्वो ॥ १२ ॥ दंसणनाणचरित्ते तवविणए सच्चसमिइगुत्तीसु । जो किरिआभावरुई सो खलु किरिआरुई नाम ॥ १३ ॥ अणभिग्गहिअकुदिट्ठी संखेवरुइत्ति होइ नायव्वो । अविसारओ पवयणे अणभिग्गहिओ अ से-

ऊर्द्ध्वं सम्यक्त्वाप्रच्युतः सिद्ध्यत्येव, नानाजीवानां तु सर्वकालः, यतः—"दो वारे विजयाइसु गयस्स तिन्नि-च्चुए अहव ताइं । अइरेगं नरभविअं नाणाजीवाण सव्वद्धा ॥ १ ॥" सम्यक्त्वस्यान्तरं जघन्यतोऽन्तर्मुहूर्त्तं, कस्य-चित्सम्यक्त्वत्यागे सति पुनस्तदावरणक्षयोपशमादन्तर्मुहूर्त्तमात्रेणैव तत्प्रतिपत्तेः, उत्कृष्टतस्त्वाशातनाप्रचुर-स्यापार्द्धपुद्गलपरावर्त्तः, उक्तञ्च—"तित्थयरपवयणसुअं आयरिअं गणहरं महड्ढीअं । आसायंतो बहुसो अणं-तसंसारिओ होइ ॥ १ ॥" नानाजीवानपेक्ष्य चान्तराभाव इत्याद्युक्तमावश्यकवृत्तौ, किं सम्यक्त्वं किं गतौ ताद्भविकं पारभविकं चेत्यादिविचारो ग्रन्थान्तरादवधार्यः, अथवा सम्यक्त्वं त्रेधा कारक१रोचक२दीपकभे-दात्, तत्र सम्यगनुष्ठानप्रवृत्तिं कारयतीति कारकं विशुद्धचारित्रिणामेव १, रोचयति सम्यगनुष्ठानप्रवृत्तिं न तु कारयतीति रोचकमविरतसम्यग्दृशां कृष्णश्रेणिकादीनां २, व्यञ्जकं दीपकमित्येक एवार्थः, एतत्तु यः स्वयं मिथ्यादृष्टिरपि परेभ्यो जीवाजीवादिपदार्थान् यथाऽवस्थितान् व्यनक्ति तस्याङ्गारमर्द्दकादेर्द्रष्टव्यं, यद्वा सम्य-क्त्वमनेकविधं, यदाहुः—"एगविह १ दुविह २ तिविहं ३ चउहा ४ पंचविह ५ दसविहं ६ सम्मं । दव्वाइकारयाई उवसमभेएहिं वा सम्मं ॥ १ ॥ एगविहं सम्म (तत्त) रुई निसग्गाहिगमेहि तं भवे दुविहं । तिविहं तं खइआई अहवावि हु कारगाईअं ॥ २॥" 'दव्वाइ'त्ति शुद्धपुद्गलवेदनतत्त्वरुचिरूपाभ्यां द्रव्यभावाभ्यां निसर्गाधिगमाभ्यां वा निश्चयव्यवहाराभ्यां पौद्गलिकापौद्गलिकभेदाभ्यां वा सम्यक्त्वं द्विधा—"खइआइसासणजुअं चउहा वेअग-जुअं तु पंचविहं । तं मिच्छचरमपुग्गलवेअणओ दसविहं एवं ॥ ३ ॥ निस्सग्गु १ वएसरुई २ आणरुई ३ सुत्त-

सहसपुहत्तं सयप्पुहुत्तं च होइ विरईए। एगभवे आगरिसा एवइआ हुंति नायव्वा ॥ ३ ॥' 'तिण्ह'न्ति श्रुतसम्यक्त्वदेशविरतीनाम् 'आगरिस'त्ति आकर्षः प्रथमतया मुक्तस्य वा ग्रहणम्, एते आकर्षा उत्कर्षतो जघन्यतस्त्वेक एव, "तिण्हं सहसमसंखा सहसपुहुत्तं च होइ विरईए। नाणभवे आगरिसा एवइआ हुंति नायव्वा ॥१॥" "बीअगुणे सासाणो तुरिआइसु अट्ठि १ गार २ चउ ३ चउसु ४। उवसमग १ खइग २ वेअग ३ खाओवसमा ४ कमा हुंति ॥ १ ॥" अस्या व्याख्या–द्वितीयगुणस्थाने सास्वादनं चतुर्थादिष्वष्टसु गुणस्थानेष्वौपशमिकं चतुर्थादिष्वेकादशसु क्षायिकं चतुर्थादिषु चतुर्षु वेदकं क्षायोपशमिकं चेत्यर्थः, "सम्मत्तंमि अ लद्धे पलिअपुहुत्तेण सावओ हुज्जा १ चरणोवसम ३ खयाणं ४ सागर संखंतरा हुंति ६ ॥ १ ॥ अप्परिवडिए सम्मे सुरमणुए इगभवे य सव्वाणि। इगसेढिवज्जिआइं सिवं च सत्तट्ठभवमज्झे ७ ॥ २ ॥" क्षायिकसम्यग्दृष्टिस्तु तृतीये चतुर्थे तस्मिन् भवे वा सिद्ध्यति, उक्तश्च पञ्चसङ्ग्रहादौ–"तइअचउत्थे तम्मि व भवंमि सिज्झंति दंसणे खीणे। जं देवनिरयऽसंखाउचरमदेहेसु ते हुंति ॥१॥" व्याख्या–बद्धायुः क्षीणसप्तको यदि देवगतिं नरकगतिं वा याति (तदा) तद्भवान्तारितस्तृतीयभवे सिद्ध्यति, अथ तिर्यक्षु नृषु वोत्पद्यते सोऽवश्यमसङ्ख्यवर्षायुष्केष्वेव न तु सङ्ख्येयवर्षायुष्केषु, तद्भवादनन्तरं च देवभवे ततो नृभवे सिद्ध्यतीति चतुर्थभवे मोक्षः, अबद्धायुश्च तस्मिन्नेव भवे क्षपकश्रेणिं सम्पूर्णीकृत्य सिद्ध्यतीत्यर्थः, एकजीवं नानाजीवान् वाऽपेक्ष्य सम्यक्त्वोपयोगो जघन्यत उत्कृष्टतश्चान्तर्मुहूर्त्तमेव, क्षयोपशमरूपा तल्लब्धिस्त्वेकजीवस्य जघन्याऽन्तर्मुहूर्त्तमुत्कृष्टा तु ६६ सागराणि नृभवाधिकानि, तत

हूर्त्तेनोत्कर्षतः प्रभूतकालेन यथोक्तकरणपूर्वकमेव पुनस्तां लभन्ते इत्युक्तं कर्मप्रकृतिवृत्तौ, सैद्धान्तिकमते हि
विराधितसम्यक्त्वो गृहीतेनापि सम्यक्त्वेन षष्ठपृथ्वीं यावत्कोऽप्युत्पद्यते, कार्मग्रन्थिकमते तु वैमानिकेभ्यो-
ऽन्यत्र नोत्पद्यते तेन गृहीतेनेत्युक्तं प्रवचनसारोद्धारवृत्तौ, अवाप्तसम्यक्त्वश्च तत्परित्यागे कार्मग्रन्थिकमते-
नोत्कृष्टस्थितीः कर्मप्रकृतीर्बध्नाति, सैद्धान्तिकाभिप्रायतस्तु भिन्नग्रन्थेरुत्कृष्टः स्थितिबन्ध एव न स्यात्। तच्च
सम्यक्त्वमौपशमिक १ क्षायिक २ क्षायोपशमिक ३ वेदक ४ सास्वादन ५ भेदैः पञ्चधा, तत्रौपशमिकं मिथ्या-
त्वरूपदर्शनमोहनीयोपशमनस्वरूपं ग्रन्थिभेदकर्तुरुपशमश्रेणिप्रारम्भकस्य वा स्यात् १ क्षायिकं सम्यक्त्वमिश्र-
मिथ्यात्वपुञ्जरूपत्रिविधदर्शनमोहनीयनिःशेषक्षयलक्षणं क्षपकश्रेणिप्रतिपत्तुः २ क्षायोपशमिकमुदीर्णस्य मिथ्या-
त्वमोहनीयस्य विपाकोदयेन वेदितत्वात्क्षयेऽनुदीर्णस्य चोपशमे सति क्षयोपशमरूपम्, अस्मिंश्च शुद्धमिथ्या-
त्वपुञ्जपुद्गला विपाकोदयेन प्रदेशोदयेन त्वशुद्धमिथ्यात्वपुञ्जपुद्गला अपि वेद्यन्ते, औपशमिके तु सर्वथा न कि-
मपि वेद्यते इत्यनयोर्भेदः ३, वेदकं क्षपकश्रेणिं प्रपन्नस्य चतुर्ष्वनन्तानुबन्धिषु मिथ्यात्वमिश्रपुञ्जद्वये च क्षपितेषु
सत्सु क्षिप्यमाणे सम्यक्त्वपुञ्जे तत्सत्कचरमपुद्गलक्षपणोद्यतस्य तच्चरमपुद्गलवेदनरूपं ४ सास्वादनं पूर्वोक्तौपश-
मिकसम्यक्त्ववमनसमये तदास्वादस्वरूपं ५। पञ्चानामप्येषां स्थितिकालमानादि चैवमाहुः—"अंतमुहुत्तुवसम-
ओ १ छावलि सासाण २ वेअगो समओ ३। साहिअ तित्तीसायर खइओ ४ दुगुणो खओवसमे ५ ॥ १ ॥"
उक्कोसं सासायणउवसमिआ हुंति पंचवाराओ। वेअगखइगा इक्कसि असंखवारा खओवसमो ॥ २ ॥ तिण्हं

कोइ पमत्तापमत्तभावंपि, सासायणो पुण न किंपि लहेइ'त्ति, पुञ्जत्रयसङ्क्रमश्च कल्पभाष्ये एवमुक्तः-मिथ्यात्वदलिकात्पुद्गलानाकृष्य सम्यग्दृष्टिः प्रवर्द्धमानपरिणामः सम्यक्त्वे मिश्रे च सङ्क्रमयति, मिश्रपुद्गलांश्च सम्यग्दृष्टिः सम्यक्त्वे मिथ्यादृष्टिश्च मिथ्यात्वे, सम्यक्त्वपुद्गलांस्तु मिथ्यात्वे सङ्क्रमयति न तु मिश्रे, "मिच्छत्तंमि अखीणे तियपुंजा सम्मदिट्ठिणो नियमा। खीणंमि उ मिच्छत्ते दुएगपुंजी व खवगो वा ॥ १ ॥" मिथ्यात्वे अक्षीणे सम्यग्दृष्ट्यो नियमात्रिपुञ्जिनः, मिथ्यात्वे क्षीणे द्विपुञ्जिनः, मिश्रे क्षीणे एकपुञ्जिनः, सम्यक्त्वे तु क्षीणे क्षपकः, सम्यक्त्वपुद्गलाश्च शोधितमदनकोद्रवस्थानीया विरुद्धतैलादिद्रव्यकल्पेन कुतीर्थिकसंसर्गकुशास्त्रश्रवणादिमिथ्यात्वेन मिश्रिताः सन्तस्तत्क्षणादेव मिथ्यात्वं स्युः, यदाऽपि प्रपतितसम्यक्त्वः पुनः सम्यक्त्वं लभते तदाऽप्यपूर्वकरणेन पुञ्जत्रयं कृत्वाऽनिवृत्तिकरणेन सम्यक्त्वपुञ्ज एव गमनाद्द्रष्टव्यं, ननु तदाऽपूर्वकरणस्य पूर्वलब्धस्यैव लाभात्कथमपूर्वता? इतिचेदुच्यते-अपूर्वमिवापूर्वं स्तोकवारमेव लाभादिति वृद्धाः, सैद्धान्तिकमतं चैतत्-सम्यक्त्वप्राप्ताविव देशविरतिसर्वविरत्योः प्राप्तावपि यथाप्रवृत्तापूर्वकरणे [न] भवतो नत्वनिवृत्तिकरणम्, अपूर्वकरणाद्धासमाप्तावनन्तरसमये एव तयोर्भावात्, देशसर्वविरत्योः प्रतिपत्तेरनन्तरमन्तर्मुहूर्त्तं यावदवश्यं जीवः प्रवर्द्धमानपरिणामस्तत ऊर्द्ध्वं त्वनियमः, कोऽपि प्रवर्द्धमानपरिणाम एव कोऽपि स्वभावस्थः कोऽपि हीनपरिणामः, ये चाभोगं विनैव कथञ्चित्परिणामह्रासाद्देशविरतेः सर्वविरतेर्वा प्रतिपतितास्तेऽकृतकरणा एव पुनस्तां लभन्ते, ये त्वाभोगतः प्रतिपतिता आभोगेनैव च मिथ्यात्वं गतास्ते जघन्यतोऽन्तर्मु-

नस्येति, सम्यक्त्वं पुरस्कृतं येन तस्मिन्नासन्नसम्यक्त्व इत्यर्थः, अन्तरकरणे च कृते मिथ्यात्वस्य स्थितिद्वयं स्याद्, अन्तरकरणादधस्तनी प्रथमा स्थितिरन्तर्मुहूर्त्तप्रमाणा तस्मादेवोपरितनी द्वितीया, स्थापना ⫿, तत्र प्रथमस्थितौ मिथ्यात्वदलिकवेदनादसौ मिथ्यादृष्टिरेव, अन्तर्मुहूर्त्तेन पुनस्तस्यामपगतायामन्तरकरणाद्यसमय एवौपशमिकसम्यक्त्वं प्राप्नोति, मिथ्यात्वदलिकवेदनाभावात्, एवं लब्धेनौपशमिकसम्यक्त्वेनौषधविशेषकल्पेन शोधितस्य मदनकोद्रवकल्पस्य मिथ्यात्वस्य शुद्धार्द्धशुद्धाशुद्धरूपं पुञ्जत्रयमसौ करोत्येव, अत एवौपशमिकसम्यक्त्वाच्च्युतोऽसौ क्षायोपशमिकसम्यग्दृष्टिर्मिश्रो मिथ्यादृष्टिर्वा भवति, उक्तञ्च कर्म्मग्रन्थेषु–"धुवं पढमोवसमी करेइ पुंजतिअं । तव्वडिओ पुण गच्छइ सम्मे मीसंमि मिच्छे वा ॥ १ ॥" इदं च कार्मग्रन्थिकमतं, सैद्धान्तिकमतं त्वेवं–यदुतानादिमिथ्यादृष्टिः कोऽपि तथाविधसामग्रीसद्भावेऽपूर्वकरणेन पुञ्जत्रयं कृत्वा शुद्धपुद्गलान् वेदयन्नौपशमिकसम्यक्त्वमलब्ध्वैव प्रथमत एव क्षायोपशमिकसम्यग्दृष्टिर्भवति, अन्यस्तु यथाप्रवृत्तादिकरणत्रयक्रमेणान्तरकरणे औपशमिकसम्यक्त्वं लभते, पुञ्जत्रयं त्वसौ न करोत्येव, ततश्चौपशमिकसम्यक्त्वाच्च्युतोऽवश्यं मिथ्यात्वमेव याति, उक्तञ्च कल्पभाष्ये–"आलंबणमलहंती जह सट्ठाणं न मुंचए इलिआ । एवं अकयतिपुञ्जो मिच्छं चिअ उवसमी एइ ॥ १ ॥" प्रथमं च सम्यक्त्वे लभ्यमाने कश्चित्सम्यक्त्वेन समं देशविरतिं सर्वविरतिं वा प्रतिपद्यते, उक्तञ्च शतकबृहच्चूर्णौ–"उवसमसम्मादिट्ठी अंतरकरणे ठिओ कोइ देसविरइंपि लभइ

प्रथमं सम्यक्त्वलाभश्च गतिचतुष्केऽपि सञ्ज्ञिपर्याप्तपञ्चेन्द्रियस्य स्यात्, स चैवं-कश्चिदनादिमिथ्यादृष्टिर्जन्तुर्मिथ्यात्वप्रत्ययमनन्तान् पुद्गलपरावर्त्तान् भ्रान्तपूर्वी गिरिसरिदुपलघोलनाकल्पेन कथमप्यनाभोगनिर्वर्त्तितयथाप्रवृत्तकरणेन परिणामविशेषरूपेणायुर्वर्जं सप्तापि कर्माणि पल्यासङ्ख्येयभागन्यूनैकसागरोपमकोटाकोटीस्थितिकानि करोति, अत्रान्तरे जन्तोर्दुष्कर्मजनितो घनरागद्वेषपरिणामः कर्कशनिबिडचिरप्ररूढगुपिलवक्रग्रन्थिवद्दुर्भेदोऽभिन्नपूर्वो ग्रन्थिर्भवति, इमं च यावदभव्या अपि यथाप्रवृत्तकरणेन कर्म क्षपयित्वाऽनन्तशः समागच्छन्ति, ग्रन्थिदेशे च वर्त्तमानो भव्योऽभव्यो वा सङ्ख्येयमसङ्ख्येयं वा कालं तिष्ठति, स च तत्र स्थितो द्रव्यश्रुतं भिन्नानि दश पूर्वाणि यावल्लभते जिनऋद्धिदर्शनात्स्वर्गसुखार्थित्वादेव दीक्षाग्रहणे तत्सम्भवात्, अत एव भिन्नदशपूर्वान्तं श्रुतं मिथ्याश्रुतमपि स्यात् मिथ्यात्विगृहीतत्वात्, यस्य च चतुर्दश पूर्वाणि यावत्पूर्णानि दश पूर्वाणि श्रुतं स्यात् तस्मिन्नियमात्सम्यक्त्वं शेषे किञ्चिदूनदशपूर्वधरादौ सम्यक्त्वस्य भजना, यदुक्तं कल्पभाष्ये-"चउदस दस य अभिन्ने नियमा सम्मं तु सेसए भयणा।" इति, तं च ग्रन्थिं कश्चिन्निशितकुठारधारयेव परिणामविशुद्ध्या भित्त्वा मिथ्यात्वस्थितेरन्तर्मुहूर्त्तमुदयक्षणादुपर्यतिक्रम्यापूर्वकरणानिवृत्तकरणविशुद्धिजनितसामर्थ्योऽन्तर्मुहूर्त्तकालप्रमाणं तत्प्रदेशवेद्यदलिकाभावरूपमन्तरकरणं करोति, करणत्रयक्रमश्च कल्पभाष्योक्तोऽयं-"जा गंठी ता पढमं गंठिं समइच्छओ भवे बीअं। अनियट्टीकरणं पुण सम्मत्तपुरक्खडे जीवे ॥ १॥" 'समइच्छउ'त्ति समतिक्रामतो भिन्दा-

राऽपि भवेत् परा । तदा ममापि स्याज्जातु, सर्वदर्शित्वसम्भवः ॥५९॥ तदङ्गाराधनैरेव, स्यात्तस्याश्च प्रकृष्टता । ध्यात्वेत्यभूत्सोऽर्हद्गुरुधर्मध्यानैकतानधीः ॥ ६० ॥ सम्यक्त्वभूषणं तीर्थसेवां कर्त्तुं च सोऽन्यदा । राज्ये ज्येष्ठ-सुतं न्यस्य, ययौ श्रीविमलाचलम् ॥ ६१ ॥ जिगीषोर्दुर्गवत्स्वार्थसिद्ध्यै सिद्ध्यर्थिनां हि यः । त्रैलोक्येऽपि परं तीर्थं, नित्योऽनन्तप्रभावभाग् ॥ ६२ ॥ तत्तीर्थसेवां कुर्वाणः, सर्वाङ्गीणां यथाविधि । त्रिर्जिनार्चाचैत्यचिन्ताद्यैः स्वं जन्माकृतार्थयत् ॥६३॥ सोऽन्यदाऽर्हन्महापूजां, सायमाधाय सुस्थिरः । इत्युच्चैर्भावयामास, सम्यग्दर्शनभा-वनाम् ॥ ६४ ॥ सर्वज्ञैः कोऽप्यहो धर्मः, स्वाख्यातः सुखसाधनः । कृच्छ्रं विनाऽपि संसारपारः प्राप्येत यद्ब-लात् ॥ ६५ ॥ परमात्मस्वरूपोऽर्हन्, परमाचारवान् गुरुः । धर्मश्च सर्वपरमः, काऽपि जैनमतस्थितिः ॥ ६६ ॥ ध्यानेनैवं विशुद्धेन, सिद्धेर्निःश्रेणिकामिव । क्षपकश्रेणिमारूढः, शक्तिर्जीवस्य काऽप्यहो ॥ ६७ ॥ तदा तस्य निशीथेऽपि, तमस्तोमविनाशकृत् । ज्ञानभानूदयो जज्ञे, कृच्छ्रप्राप्योऽप्यकृच्छ्रतः ॥ ६८ ॥ पुत्रः पित्रधिकोऽ-पीति, गृहित्वेऽप्यासकेवलः । राजर्षिर्देवदत्तार्षिवेषः सोऽर्च्यत निर्जरैः ॥ ६९ ॥ निस्तार्यः प्राग् निजज्ञातिरित्ययं सप्रियात्रयम् । जयं प्रियात्रयं पुत्रद्वयं प्राव्राजयज्जवात् ॥ ७० ॥ प्रपूर्य वर्षलक्षायुश्चिरमुर्व्यां विहारतः । सोऽ-ध्यास्त सिद्धिं सार्द्धं तैः, सद्दर्शनफलान्यहो ॥ ७१ ॥ आराधनेऽथ दृढताविषये फलस्य, प्रासावपीति विजयस्य जयस्य चोच्चैः । श्रुत्वा सुदर्शननिदर्शनमद्भुतं भो, भव्याः ! सुदर्शनविधौ विधिवद्यतध्वम् ॥ ७२ ॥

॥ इति सम्यक्त्वे जयविजयकथानकम् ॥

स्येव तदैव च। आसैर्वैद्वीपयाश्चक्रे, शुभे योगः शुभस्य हि ॥४३॥ देव एवमथावादीन्नरदेव! चिरं जय। विश्वेऽपि त्वत्समः कोऽस्तु, सात्त्विकैकशिरोमणिः? ॥४४॥ धन्यानामपि धन्यस्त्वं, श्लाघ्यः श्लाघायुजामपि। मान्यानामपि मान्यश्च, नान्यस्त्वत्तो जगत्यपि ॥ ४५ ॥ राजन्! महाविदेहेऽर्हद्वरः सुरपतेः पुरः । स्थाने ज्ञानेन जानंस्ते, धर्मे दार्ढ्यमवर्णयत् ॥ ४६ ॥ अधमस्त्वहमेवेह यस्तदश्रद्दधत्तव। क्षोभाय साधून् दुःशीलान्, सुशीलानप्यदीदृशम् ॥ ४७ ॥ नृक्षेत्रबाह्याम्बुधिवत्तथाऽप्यन्तः स्थिरे त्वयि। क्षिप्रं प्रापंचयं प्रोच्चैरेवं सर्पाद्युपप्लवम् ॥ ४८ ॥ मुनेर्व्यलीकादेकस्मादन्यैर्विपरिणम्यते। धर्मे विपर्यणंसीस्त्वं, पुनरेतावताऽपि न ॥ ४९ ॥ प्रियापुत्रकृतेऽप्यन्ये, कुकृत्यान्यपि कुर्वते। स्वल्पातिचारभीस्त्वं चातृणीयस्तान् स्वमप्यहो ॥ ५० ॥ वज्राग्निप्रायया राजन्!, माययाऽप्यनया मया। चेन्नाचक्रमिषे तर्हि, त्वामाक्रामतु कः परः? ॥ ५१ ॥ दुश्चेष्टितं तदेतन्मे, मर्षयामर्षवर्जितम् । सन्त एव यतः सर्वसहायां तद्गुणस्पृशः ॥ ५२ ॥ किञ्चिचादिश कृत्यं मे, भृत्यमन्यतया यथा । सद्यः सम्पादये राजन्!, राजापि व्याजहार तम् ॥५३॥ यतः सिद्ध्यन्त्यभीष्टार्थाः, स चेद्धर्मसुरद्रुमः। हृद्गृहे मम सुस्थैर्यमस्थात् कोऽर्थः परोऽस्तु तत्? ॥५४॥ किंतु त्वमेव मिथ्यात्वं, त्यक्त्वा सम्यक्त्वमाश्रय। सुमनः! सुमनस्त्वं ते, जायते येन सार्थकम् ॥ ५५ ॥ ओमिति प्रतिपेदानः, प्रपेदानः परां मुदम्। तमापृच्छ्य दिदेवाथ, त्रिदिवं दिविषद्वरः ॥५६॥ एवं निर्व्यूढसम्यक्त्वद्रढिमा प्रौढिमाश्रितः। सुचिरं भुक्तराज्यश्रीर्विजयोऽध्यायदन्यदा ॥ ५७ ॥ पङ्गोरिव धिगद्यापि, चरणोद्युक्तता न मे। तां विना च परपदप्राप्तिः स्यात्कथमात्मनः? ॥५८॥ यद्वा दर्शनशुद्धिश्चेत्, सुक-

प्रियामृत्युमश्राव्यत सुदुःश्रवम् ॥ २७ ॥ तदा त्वनुबभूवे या, भूधवेनातिदुःखिता। सा तयैवोपमेया स्याद्वोकुं शक्याऽमुनैव वा ॥ २८ ॥ पृथ्वीनाथं तथाऽवस्थं, स एवोपेत्य मान्त्रिकः। उन्मुद्रयन् कृपार्द्रत्वमिवोच्चैरित्यवोचत ॥ २९ ॥ अद्यापि स्वहितं हन्त, विचारज्ञ! विचारय। नागं नम यथा स्वास्थ्यं, सर्वेषां विदधेऽधुना ॥ ३० ॥ कम्प्रोऽपि दुःखवात्याभिर्निष्प्रकम्पः स्वकव्रते। प्राग्वदेव नृपोऽप्यूचे, क वा वाग्व्यत्ययः सताम्? ॥ ३१ ॥ पुनर्जगौ जाङ्गुलिकं, जगतीपतिपुङ्गवः। न सर्वथैतद्विषये, वाच्यं किञ्चित्त्वया मम ॥ ३२ ॥ त्वामेकं किन्तु पृच्छामि, यदि जानासि तद्वद। जीवितं पीडितोऽत्यन्तं, धर्तुं नाल्पमपि क्षमे ॥ ३३॥ एतज्जातीयदुष्टाहिदष्टस्तिष्ठेत् कियत्क्षणम्। सोऽप्याह नृप! षण्मासीमर्वाग् नायुःक्षयोऽस्य हि ॥ ३४ ॥ इयत्कालमिलापाल!, दुःखमत्यन्तदुस्सहम्। सहिष्यसे कथं हन्त, सुमेनेव दवस्त्वया ॥ ३५ ॥ धर्महेतोर्हि तद्दुःखं, सुखीयंस्तु महर्षिवत्। नृपोऽजल्पन्निर्विकल्पमनल्पसत्त्वतल्पगः ॥ ३६॥ षण्मासीं षड्युगीं वास्तु, दुःखं दुस्सहमप्यदः। धर्महेतुतया किन्तु, गुणायैव भविष्यति ॥ ३७ ॥ खण्डनायां तु धर्मस्यानन्तैरपि भवैर्नवैः। दुःखान्तो भविता नैव, गुणस्तत्र न कश्चन ॥ ३८ ॥ दुःखं च दुष्कृताज्जातं, तस्यैव क्षयतः क्षयेत्। सुकृतात्तत्क्षयश्च स्यात्तत्तस्मिन् सुदृढो न कः? ॥ ३९ ॥ इत्युच्चैर्वदमानेऽस्मिन्, पञ्च दिव्यानि जज्ञिरे। चेलोत्क्षेपः १ पुष्पवर्ष २, वसुधारा च ३ दुन्दुभिः ४ ॥४०॥ अहो सत्त्वमहो सत्त्वमिति दिव्या च वागिति ५। महिमा कोऽप्यहो अर्हद्धातृवद्दृढधर्मणः ॥४१॥ यमलम् ॥ राजापि जातसर्वाङ्गसौस्थ्यस्तत्क्षणमैक्षत। पुरः सुरवरं भास्वद्भास्वरं स्वरसश्रिया ॥४२॥ सौस्थ्येन पत्नीपुत्राणां, राज्या-

धर्मं, खण्डयाम्यल्पप्यहम् ॥ ११ ॥ तद्भो गारुडिकश्रेष्ठ !, शक्तिः काप्यस्ति ते यदि । जीवयैतांस्तदा नो चेद्व्रि-
चराशु यथारुचि ॥१२॥ व्यर्था वा प्रार्थनाऽप्येषा, कर्मायत्तं हि जीवितम् । मन्त्रैस्तन्त्रैश्च यन्त्रैश्च, तद्विना निष्फलै-
रलम् ॥१३॥ अथो गारुडिकः क्रुद्धोऽभिदधे वसुधेश ! धिक् । कदाग्रहग्रहग्रस्तहन्मामप्यवमन्यसे ॥१४॥ हितम-
प्यहितं यो हि, मन्यते तस्य दुर्धियः । व्याधितस्येव सद्वैद्यविद्विषः स्यात्कथं शुभम् ? ॥ १५ ॥ कदाग्रहविषद्रो-
स्तत्फलमाप्नुहि सम्प्रति । व्रजामो वयमप्येते, भोगिन्! कुरु यथेप्सितम् ॥ १६ ॥ इत्युक्त्वात्थितवान् गारु-
डिकश्चण्डरुचिः पुनः । तदोदियाय तत्सत्त्वप्रकर्षमिव वीक्षितुम् ॥ १७ ॥ निरुद्धमुक्तपानीयपूरवद्दूरतस्तराम् ।
महावेगः क्रुधाभोगी, भोगीशस्तमथाभ्यधात् ॥ १८ ॥ निःशङ्कचित्त उन्मत्त, इव रे सकलान्यपि । तृणायसि
न वै वेत्सि, दिव्यशक्तिं सुदुःसहाम् ॥ १९ ॥ मूढः सुदृढनिर्घातमत्यन्तास्फालनं विना । न प्रत्येतीति मौढ्यस्य,
स्वस्य पश्याधुना फलम् ॥ २० ॥ इत्युक्त्वा सोऽत्यजत्पात्रं, गात्रं जीव इव क्षणात् । अदन्दशीच्च निःशूकं, दन्द-
शूकवपुर्नृपम् ॥२१॥ दुःखौघोद्भववंशेन, तद्दंशेन नरेशितुः । प्रोच्चैः कालज्वरेणेव, द्राक् सर्वाङ्गमपीड्यत ॥ २२ ॥
शाटं २ स्फुटं तच्च, त्रोटं त्रोटं च सर्वतः । कृत्यामानमिवापसद्दहहा दुष्टचेष्टितम् ॥२३। शटत्त्रुटत्प्रतीकैश्च चक्र-
न्दोच्चैस्तथा नृपः । यथा श्रुत्वाऽपि तत्कैश्चिन्मृतमन्यैश्च मूर्च्छितम् ॥ २४ ॥ पीडितः पीडितेभ्योऽपि, दुःखिते-
भ्योऽपि दुःखितः । बीभत्सेभ्योऽपि बीभत्सस्तदाऽभूद्भूपतिर्भृशम् ॥ २५ ॥ सावस्था नरकावस्थां, भूपेन प्राग्भवे
क्वचित् । अनुभूतामतितमां, विस्मृतामप्यसस्मरत् ॥ २६ ॥ तदा क्षतोपरि क्षारक्षेपरूपं स भूपतिः । आप्तैः पुत्र-

धात्रीशं मान्त्रिकोऽप्यूचे, नृप ! चेन्नतिमात्रतः । अनर्थाच्छुट्यतेऽमुष्मात्, पर्याप्तं किं न नस्तदा ? ॥ ९६ ॥ मनो
विना प्रणामे च, न काचिन्नियमक्षितिः । प्राणिनां मन एवेह, प्रमाणं पुण्यपापयोः ॥ ९७ ॥ अप्याकारा नृप-
सुराभियोगाद्याः स्मृता व्रते । भूमीगृहमपि क्वापि, न भवेद्द्वारमन्तरा ॥ ९८ ॥ अंशमात्रा गुरुकृते, स्वीकृतस्या-
न्यथाकृतिः । गुणायैवाशनत्यागः, प्रत्यग्रज्वरिणामिव ॥ ९९ ॥ अत्रापि कश्चिद्दोषश्चेत्, प्रायश्चित्तात्तमप्यहो ।
निराकुर्याल्लङ्घनोत्थं, कार्श्यं पथ्यादनादिव ॥४००॥ उत्सर्गश्चापवादश्च, यतिधर्मेऽप्युभौ स्मृतौ । किं पुनः श्राद्ध-
धर्मे भोः !, तदेकान्तग्रहो मुधा ॥ १ ॥ किञ्च–स्याद्वाद एव सर्वत्र, युक्तः स्याद्वादवादिनाम् । तेषामेकान्तवा-
दस्तु, मिथ्यात्वमिति गीयते ॥ २ ॥ त्यक्त्वा तदाग्रहं राजन् !, नागराजं प्रणम्य च । प्रोज्जीवय प्रियापुत्रान्,
मुह्येत् कः स्वहिते सुधीः ? ॥ ३ ॥ युक्त्येत्युक्ते मान्त्रिकेणार्हन्मतज्ञेन विज्ञधीः । सत्त्वगौरवगौरश्रीर्जगाद
जगतीपतिः ॥ ४ ॥ वाच्यमेतद्धि निखिलं, विबलं प्रति चेतसा । न प्राणान्तेऽप्यतिचरेद्धर्मं धीरः पुनर्मनाक् ॥५॥
अत्यल्पादप्यतीचाराद्धर्मस्यासारतैव हि । अंह्रिकण्टकमात्रेण, पुमान् पङ्गूयते न किम् ? ॥६॥ यच्छुद्ध्यै क्रियते
प्रायश्चित्तं तत्त्याज्यमादितः । प्रक्षालनीयो यस्तस्य, पङ्कस्यास्पर्शनं वरम् ॥ ७ ॥ उत्सर्गमार्गेऽशक्तस्यापवादः
प्रतिपाद्यते । अपवादोऽपवादाय, शक्तस्य तु सुनिश्चितम् ॥८॥ स्याद्वादोऽपि न निर्दिष्टः, पापकृत्ये कृतात्मभिः ।
स्याद्वादस्यापि नैकान्तवादः स्याद्वादिनां मतः ॥ ९ ॥ भवे २ प्रियापुत्रसंयोगान् लब्धपूर्व्यहम् । न तु धर्मं
क्वचित्तं तत्त्यजेयं तत्कृते कथम् ? ॥ १० ॥ सर्वेभ्योऽपि प्रियाः प्राणास्तेऽपि यान्त्वधुनाऽपि हि । न पुनः स्वीकृतं

पूजय मां न चेत्। त्वां सकान्तासुतं नेता, कृतान्तातिथितामहम् ॥८०॥ साक्षादिवैवं नागेनाख्यातेऽपि क्षितिनायकः। व्रतक्षितिभियैयेष, नैव यावत्तदर्चनाम् ॥८१॥ तावद्विधाऽपि कालेन, व्यालेन नृपनन्दनः। ददंशे दुष्टदंशेन, सुमूर्च्छात्यन्तमाशु च ॥८२॥ युग्मम् ॥ तथावस्थे तथाऽप्युर्वीनेतुश्चेतसि तत्क्षणात्। पट्टदेव्यपि दुष्टाहिदष्टा पुत्रदशां दधौ ॥ ८३ ॥ एवं द्वावपरौ पुत्रौ, द्वे देव्यावपरे अपि । तथाऽभूवन्न तु क्ष्माभुग्मनोऽक्षुभ्यन्मनागपि ॥ ८४ ॥ मन्त्रतन्त्रौषधीजाते, जाते तत्र च निष्फले। राजादिलोकेऽस्तोकेन, शोकेन विनिपीडिते ॥ ८५ ॥ किं कर्त्तव्यविमूढेषु, प्रधानपुरुषेषु च । दैवादिष्ट इवागात् द्राक्, कोऽपि गारुडिकाग्रणीः ॥ ८६ ॥ यमलम् ॥ तमवेक्ष्यैव जाततज्जीविताशा नृपादयः । जहृषुः पुपुषुश्चैनं, स्वागतादिकसत्कृतैः ॥ ८७ ॥ सोऽपि प्राह महीनेतः!, एतेषां विषमं विषम् । असाध्यमिव किञ्चित्तु, प्रतिकुर्वे स्वशक्तितः ॥८८॥ इत्युक्त्वा कन्यकामेकां, पात्रीकृत्याभिमन्त्रितैः । अक्षतैरक्षतैराच्छोटयामास स यावता ॥ ८९ ॥ तावताऽवातरत्तत्र, दैवतं सोऽप्युवाच तत् । प्रसीद सीदत्तनुकानेतान्मुञ्च फणिप्रभो! ॥९०॥ युग्मम् ॥ तेनाप्यभाणि भूपोऽयं, सर्वदाऽपि कदाग्रही। अवजानाति जातिं नस्तददाक्षमिमान् रुषा ॥९१॥ सर्वथा तन्न मुञ्चे च, प्रत्युत क्ष्मापमप्यमुम्। मङ्क्षु दक्षयामि दक्षात्मन्!, दिव्या हि विषमा रुषः ॥ ९२ ॥ मान्त्रिकः स्माह सञ्जातमियताऽपि रुषः फलम् । प्रसादमथ कुर्वीथाः, प्रणामान्ताः सतां रुषः ॥ ९३ ॥ भोगी जगौ जगन्मान्य!, मान्यते केन ते न गीः?। न मां नमत्यपि परं, जात्वसौ शुष्ककाष्ठवत् ॥९४॥ तन्मे भवेत् प्रवृद्धस्य, क्रोधाग्नेः प्रशमः कथम्?। प्रत्यर्थिनोऽपि मुच्यन्ते, प्रणता एव नान्यथा॥९५॥

अस्मिन् पुरे रौद्रः, सर्पाणां कोऽप्युपद्रवः। नितान्तं भविता क्रुद्धकृतान्तक्रीडिताकृतिः ॥ ६५ ॥ नागेन्द्रमूर्तेः सुस्फूर्त्तेश्चैत्येऽत्रार्चनमादरात्। एक एव प्रतीकारस्तस्य व्याधेरिवौषधम् ॥ ६६ ॥ प्रातर्नैमित्तिकोऽप्येकः, प्राप्तः क्ष्मापतिपर्षदि। तथैव कथयामास, संवादः कोऽप्यहो द्वयोः ॥ ६७ ॥ नागराः सादराः सर्वे, ततस्तां नैकभेदया। पूजया पूजयामासुर्मृत्युभीः कस्य वा न हि ? ॥ ६८॥ राजा प्रजाभिः सर्वाभिः, प्रेर्यमाणोऽपि नो पुनः। सम्यक्त्वैकरतिस्तस्याः, पूजायां स्वमनोऽप्यदात् ॥ ६९ ॥ दध्यौ च शुद्धधीर्नूनं, कर्मायत्ते शुभाशुभे। तत्कः स्वधर्मं मलिनीकुर्यादैहिकशङ्कया ? ॥ ७० ॥ ततोऽभितोऽपि प्रोत्सर्पद्दर्पाः सर्पाः नृपालये। सर्पन्ति स्म करालास्याः, कलिकाले खला इव ॥ ७१ ॥ फुफूत्कारकृतः स्फारस्फटान् स्फुटयमानिव। व्यालोक्य राजलोकस्तान्, समस्तस्त्रस्तवांस्ततः ॥ ७२ ॥ ततः प्रयातः क्ष्माकान्तः, सान्तःपुरपरिच्छदः। सौधान्तरं सुधीस्तिष्ठेत्, कः सङ्क्लेशास्पदे पदे ? ॥ ७३ ॥ दुष्कर्माणीव तत्रापि, प्रादुरासंस्तथैव ते। जाते स्थानान्तरेऽप्येवं, व्यभाषीत्यखिलैर्नृपः ॥ ७४ ॥ धिग् धिक् कदाग्रहं राज्ञः, प्राज्ञस्यापि यतोऽमुना। अनल्पोऽल्पकृतेऽनर्थः, स्वस्यारेभे स्वशत्रुणा ॥ ७५ ॥ क्लेशशान्त्यै किमद्यापि, नागार्चा नाचरत्यसौ। पश्चादपि विना वैद्यं, व्याधिग्रस्तस्य का गतिः ? ॥ ७६ ॥ इत्यादि साक्षादप्युक्तो, मन्त्र्याद्यैर्नृपतिर्दृढः। नानर्च तां ततः क्रुद्धः, स्वप्ने नागो जगौ नृपम् ॥ ७७ ॥ रे रे मामवजानासि, न मे जानासि विक्रमम्। रुष्टः साक्षात्कृतान्तोऽस्मि, तुष्टः कल्पद्रुमः पुनः ॥ ७८ ॥ अन्वयव्यतिरेकाभ्यां, पश्यन्नपि फलं स्फुटम्। न मामर्चसि सम्यक्त्वकदाग्रहगृहीतहृत् ॥ ७९ ॥ अद्यापि प्रातरुत्थाय, स्वयं

हहा । ध्यायन्नेवं नृदेवोऽग्रे, गच्छन्नेकमवैक्षत ॥ ४९ ॥ परस्त्रीलम्पटं श्वेतपटं चौर्यपरं परम् । शौनिकायितमेकं च, तथैकं धीवरायितम् ॥ ५० ॥ युग्मम् ॥ भ्रष्टा निकृष्टाः सर्वेऽपि, ध्रुवमेते गणाद्वहिः । कर्षणीया गुरोः पार्श्वात्तूर्णं विशीर्णपर्णवत् ॥५१॥ चिन्तयन्नित्ययं यावन्निजं भवनमाययौ । तावत्स्वान्तःपुरात्तेषां, गुरुं निर्यान्तमैक्षत ॥ ५२ ॥ ततोऽत्युद्वेगमवनीधवः सावेगमावहन् । यथादृष्टमभाषिष्ट, पृष्टस्तेन कलावता ॥ ५३ ॥ सोऽप्युवाच वचोऽस्माकं, वेदवत्कथमन्यथा ? । धूर्तेष्विव तदेतेषु, मा भूद्विभ्रम्भवान् भवान् ॥ ५४ ॥ राजा मार्गानुगामित्वाद्व्यञ्जयन्नुचतां निजाम् । अथाऽयथादसम्भाव्यमेतेष्वेतदतीव भोः ! ॥ ५५ ॥ ईदृक्कुकृत्यमेतेभ्यस्तरणेरिव तामसम् । सोपपत्तिकतां याति, युगान्तेऽपि कथं त्वहो ? ॥ ५६ ॥ साक्षाद्दीक्षितमेतच्चातथ्यं वा तथ्यमेव वा । तथ्यत्वेऽपि हि सर्वेषु, युक्ताऽनास्था न साधुषु ॥ ५७ ॥ सार्थः कश्चिच्चौरधाटीरूपः प्रादर्शि तर्हि किम् । सार्थाः सर्वेऽप्यविश्वास्या, ह्येवं व्यवहृतेः क्षितिः ॥ ५८ ॥ चारित्रवन्तस्तत्पूज्या, एव सन्ति च ते ध्रुवम् । नन्वव्यक्तमतग्राहे, भवेन्निह्नवतैव भोः ! ॥ ५९ ॥ कलावानूचिवान् राजन् !, दृष्टिरागस्तवाप्यहो । तेषु व्यलीके दृष्टेऽपि, स्त्रियां कामीव रज्यसे ॥ ६० ॥ दृष्टिरागे च नो धर्मः, किन्तु तत्त्वस्य निर्णये । राज्ञोक्तं निरणैषं तत्सर्वज्ञोक्तं न संशयः ॥ ६१ ॥ तेनोदिता च गुरुता, यतीनामेव तां पुनः । मिथ्याकुर्वन् भवान् मिथ्यादृष्टिर्नालापमर्हति ॥ ६२ ॥ दम्भभूर्निष्फलारम्भस्तयोक्त्याऽसौ विलक्षहृत् । ययौ क्वापि नृपोऽप्यै(न्वै)षीन्मिथ्यादृक्त्वात् पुनर्न तम् ॥६३॥ अन्यदा तत्र धात्रीशमन्त्रीभ्यप्रभृतीन् जनान् । दिव्यः कोऽपि पुमानेत्य, स्वप्ने प्रत्येकमित्यवक्॥ ६४ ॥ अहो

तेऽत्रापि संशयः ॥ ३३ ॥ अथ तत्राययुर्गच्छयुजः केचिदुरूत्तमाः । नृपाद्यैस्तत्सपर्यातः, पर्यासं च जनुःफलम्,
॥ ३४ ॥ तद्गुणान् वर्णयन् क्षोणिरमणोऽभाणि तेन च । श्लाघाऽप्येषां परीक्ष्यैव, मणीनामिव युज्यते ॥३५॥ परी-
क्षणं च सर्वेषां, स्पष्टं स्यान्नष्टचर्यया । तत्ताद्विधौ यतस्वाशु, युक्तं कुर्याः परीक्ष्य च ॥ ३६ ॥ इत्युच्चैः प्रेरितः
पृथ्व्याः, पतिस्तस्यां तमश्रये । निर्ययौ नष्टचर्यार्थी, रामवच्छ्यामवेषभृत् ॥ ३७ ॥ महर्षिमेकमेकत्रापश्यच्च सह
वेश्यया । मद्यामिषास्वादसक्तं, सुव्यक्तं विटचेष्टितम् ॥ ३८ ॥ तं प्रेक्ष्य रोषमन्दाक्षनिर्वेदोद्वेगविभ्रमैः । धर्मैक-
भावोऽप्युर्वीभृदन्वभूद्भावसङ्करम् ॥ ३९ ॥ विमृश्य च विशेषज्ञस्तमभाषत भूपतिः । आः किमेतन्मुनेऽनर्हं,
निस्सीममसमञ्जसम् ? ॥४०॥ क्व क्रीडितं सुरेन्द्रस्य, क्व विष्ठाकीटकस्य च । क्व चरित्रं पवित्रं ते, क्व चेदं दुष्ट-
चेष्टितम् ॥४१॥ किं ज्ञानं दर्शनं किं वा, किं चारित्रं च किं तपः । को जपः का क्रिया का ह्रीः, का भीरेवं करोषि
यत् ॥ ४२ ॥ धिक्त्वां धिक् ते च दुर्बुद्धिं, धिक् ते वेषं च दाम्भिकम् । धिक् ते निःशङ्कचित्तत्वं, धिग् भवं
विषयांश्च धिक् ॥ ४३ ॥ अत्रापि च परत्रापि, भविता भवतः क्व नु । स्थानं ह्यऽनन्तदुःखानि, सोढा प्रौढान्यहो
कथम् ? ॥ ४४ ॥ निष्कलङ्कस्य धर्मस्य, कलङ्कोद्भावनाद्भवान् । अनन्तदुःखप्रभवं, ह्यनन्तं भ्रमिता भवम् ॥ ४५ ॥
तत्त्वज्ञ ! तस्मादेतस्माद्विरमाशु कुकर्मणः । किं तत्त्वं तेन विज्ञातं, यः कुकृत्ये प्रवर्त्तते ॥ ४६ ॥ एवं ब्रुवन्त-
मुर्वीशं, प्रत्यब्रवीद्व्रतिब्रुवः । हंहो तत्त्वार्थमज्ञात्वा, किं मामेवं विभाषसे ? ॥ ४७ ॥ रीतिरेवंविधैवास्ति, रहोऽन्य-
व्रतिनामपि । एतत्त्यक्तुं हि कः शक्तः ?, पश्यन् ज्ञास्यसि वा स्वयम् ॥४८॥ पतितः पतितानेवान्यानप्याख्यात्यहो

अथ च-प्राग्विदेहेऽन्यदाऽर्हन्तं, शक्रोऽप्राक्षीत् प्रभोऽधुना। अर्हद्धर्मैकदृढधीर्गृही कोऽप्यस्ति भारते ?॥१८॥अव्धौ लवणपृच्छावत्तत्पृच्छाऽत्र च का भवेत्। सम्बन्धो भारते मे च, तेन पृच्छा तदाश्रया ॥ १९ ॥ बभाषे भगवान् वज्रिन् !, स्वधर्मे वज्रवद्दृढम्। राजाऽऽस्ते विजयपुरे, साम्प्रतं विजयाह्वयः ॥२०॥ स सम्यक्त्वगुणाद्देवैरप्यकम्प्यः सुमेरुवत्। श्रुत्वेति मुदितः स्वर्गिवतंसः प्रशशंस तम्॥२१॥तथ्यामप्यन्यथा कर्त्तुं, मिथ्यादृक् कोऽपि तां गिरम्। निर्ययौ निर्जरोऽनास्था, धिक् सर्वज्ञवचस्यपि ॥ २२ ॥ प्राप्तोऽसौ विजयपुरे, जैनावधूतरूपभृत्। राजानं रञ्जयामास, कलाद्यभ्यासकौशलात् ॥ २३ ॥ वशीकृत इवोर्वीशोऽप्यनिशं तद्वशंवदः। गुरोरिव विनीतात्मा, तस्य चोक्तं समानयत्॥२४॥ कदाचिद्धर्मसंवादसादरं क्ष्मापुरन्दरम्। निगोदादिपदेऽप्युच्चैः, स सन्देहानदर्शयत्॥२५॥ तत्त्वप्रकाशकुशलः, क्ष्मापस्तान् युक्तिशुण्डया। तूर्णं तरूनिव करी, समूलमुदमूलयत् ॥ २६ ॥ ततोऽवधूतः क्ष्माकान्तमभाषत सुभाषितैः। सर्वज्ञैः कोऽप्यहो धर्मः, शर्मदः कर्ममर्महा ॥ २७ ॥ परमुर्वीश ! निर्वोढुं, सम्यक् शक्येत केन सः ?। खड्गधारागतिप्रख्यः, क्ष्मापोऽप्याख्यन्महर्षिभिः ॥२८॥ युग्मम् ॥ मूर्द्धानमवधूयैनमवधूतोऽभ्यधात्ततः। धर्माडम्बर एवैषामन्तः को वेद का स्थितिः ?॥२९॥ भूपः प्राह महाभाग !, व्यब्रवीः किमिदं हहा। विसंवादोऽर्हन्मुनीनां, न क्वाप्यर्हद्गिरामिव ॥ ३० ॥ सोऽपि प्राहाहमप्येषु, पूर्वमेवमवेदिषम्। अन्यथा दर्शनात् सम्प्रत्यन्यथा किं त्ववादिषम् ॥३१॥ देव एव स्वयं यद्वा, दक्षधीस्तान् परीक्षताम्। यतीन् कोऽपवदेद्दुर्धीराहर्तांस्तु विशेषतः ॥ ३२॥ क्ष्माभृदाख्यत् परीक्षा भोः !, सुनिर्णीतगुणस्य का। साऽप्यस्तु वा यथायोगं, यदि

सम्यक्त्वे दृगाथायां जयविजयकथा

दृता: । प्रवरं सर्वधर्मेभ्यः, सुकरं च शिवंकरम् ॥ २ ॥ श्रेणिकादिकवदेकसम्यग्दर्शनाज्जिनरमाऽपि न दूरे । पूर्वकोटितपसोऽप्यतितीव्राद्, ब्रह्मलोकगतिरेव विना तत् ॥ ३ ॥ श्रुत्वेति प्रत्यबुध्यन्त, भानुभामादयोऽखिलाः । प्रायं प्रपद्य महिषशुन्यौ तु स्वर्गते द्रुतम् ॥ ४ ॥ ताभ्यामभ्येत्य दिव्यर्द्धिदर्शनाद्भानुभामयोः । देवादितत्त्वत्रितयाऽऽराधनैकाग्रताऽभवत् ॥ ५ ॥ सौख्यलालसयोर्धर्म्यक्रियास्वलसयोस्तयोः । विष्णोरिवैकमभवज्जगज्जैत्रं सुदर्शनम् ॥६॥ तयोः प्रिये च प्रिययोर्द्वे द्वे सख्यौ च तद्गिरा । सम्यक् सम्यक्त्वमभजन्, कोऽपि सत्सङ्गतेर्गुणः ॥७॥ शङ्का सकृत्कुतीर्थोक्त्या, भानोस्तत्त्वत्रयेऽप्यभूत् । प्रोज्ज्वले कालुष्यमिवैतन्निन्दादि च ना(त्विहा) जनि ॥८॥ भानोर्भार्या कुलमदं, सुप्रौढकुलसम्भवा । चक्रेऽन्तरान्तरा स्त्रीणां, स्यान्मदः करिणां च यत् ॥९॥ आयुः समाप्य सौधर्म, प्राप्य च्युत्वा च ते क्रमात् । युवां प्रियाश्च युवयोस्तिस्रस्तिस्रोऽभवन्निमाः ॥ १० ॥ तत्त्वत्रयाराधनाद्वां, दिव्यवस्तुत्रयी तथा । ईदृक् प्रियात्रयी खण्डत्रयीराज्याद्यजायत ॥ ११ ॥ त्रिः शङ्कया दिव्यवस्तुनिर्गमापत्रपाद्यभूत् । जयस्य प्राक् प्रियायास्तन्मदान्नीचकुलादि च ॥१२॥ तेऽदः श्रुत्वा निजां जातिं, स्मृत्वा धृत्वा दृढात्मताम् । यतिधर्मैषिणः श्राद्धधर्ममाददिरे मुदा ॥१३॥ अथोर्व्या विजयोर्वीशः, सम्यक्त्वादिप्रवर्त्तनैः । एकातपत्रं चक्रेऽर्हद्धर्मं किं न नृपाज्ञया ? ॥ १४ ॥ चतुःश्रद्धानादिभेदैः, सप्तषष्ट्याऽस्य दर्शने । शुद्धिस्तथाऽभूत्स यथा, विषमेऽप्यस्खलन्न हि ॥ १५ ॥ नानाजिनार्चाचैत्याद्यैर्यात्राभिः सङ्घभक्तिभिः । सर्वमिथ्यात्वहानाच्च, स सम्यक्त्वमदीदिपत् ॥१६॥ विजयाद्यास्तस्य देव्यस्तिस्रस्तासां त्वमी क्रमात् । नन्दना नन्दनानन्दसुन्दराह्वास्त्रयोऽभवन् ॥१७॥

दुःखोत्कर्षेण मे वर्षशतं कल्पशतं त्वभूत् ॥८६॥ स्वप्नादिवृत्तान्तमथो, यथावद्विनिवेद्य सः। नृत्वेऽपि पुत्रयोश्चित्रं, सौमनस्यं परं व्यधात् ॥८७॥ सून्वोर्वृत्तान्मिथः प्रोक्तादत्युच्चैर्विस्मितः पिता। पुरे परैर्महैर्नीत्वा, तौ राज्याय न्यमन्त्रयत् ॥ ८८ ॥ विजयोक्त्या जये राज्यभारमारोप्य सप्रियः। चित्रं निर्वृतये तीव्रं, व्रतभारं बभार सः ॥ ८९ ॥ तद्राज्यचिन्तामायोज्य, नयधीरे महाशयः। नित्यं हरेर्हलीवास्थाद्विजयस्यान्तिके जयः ॥ ९० ॥ कुर्वन् दिग्विजयमतो, विजयः सजयो द्विधा। योगत्रयमिवर्षिः क्ष्माखण्डत्रयमसाधयत् ॥ ९१ ॥ तन्नाम्ना विजयपुरे, ख्याते कामपुरेऽथ सः। राज्यं चक्रे चिरं सेव्यो, नृदेवैर्वासुदेववत् ॥९२॥ धर्मसूनुभीमसेनचरित्रैरर्जुनश्च यः। जनार्दनरतिश्चित्रं, तथापि क्वापि नाजनि ॥९३॥ विहरन् जिनकल्पीव, केवलः केवलश्रिया। तत्र प्राप्तोऽथ तद्भ्राता, भेजे रविरिव त्विषा ॥९४॥ प्रणतः परमर्द्ध्याऽसौ, विजयेन जयेन च। सप्रियेणोपदेशान्ते, पृष्टप्राग्भवमित्यवक् ॥ ९५ ॥ विभूतिभ्राजितौ भूतभर्तृवद्भ्रातरावुभौ। भानुभामौ परौ प्रेम्णाऽभूतां भूतिलके पुरे ॥९६॥ पित्रोः श्राद्धदिनेऽन्येद्युः, परमान्नघिटालिनी। शुन्येका न्यपतद्गृहकटिस्ताभ्यां प्रकुट्टिता ॥ ९७ ॥ महिषस्तद्गृहे श्रान्तः, वहन्नम्बु क्षुधार्दितः। साश्रुरेत्य तयाऽऽलापं, स्वगिरोच्चैस्तदा व्यधात् ॥ ९८ ॥ साश्चर्येष्वथ सर्वेषु, तत्रागात् ज्ञानवान् मुनिः। पृष्टश्चाभ्यामभाषिष्ट, भो! भो! वां पितराविमौ ॥ ९९ ॥ प्राग् मिथ्यात्वात्ससभवेष्वेवं जातौ हतौ नृभिः। भवेऽष्टमेऽस्मिन्नकामनिर्जरातोऽधुना द्वयोः ॥ ३०० ॥ जाता जातिस्मृतिरथो, श्राद्धसमत्कृते ह्यदः। दशेयं नौ तु धिग्मौढ्यमित्येतौ प्राहतुर्मिथः ॥१॥ युग्मम् ॥ तत्यक्त्वा हन्त मिथ्यात्वं, सम्यक्त्वं श्रयता-

स्वकन्योद्वाहनहेतवे ॥७०॥ त्वामाह्वयति सप्रज्ञः, प्रज्ञप्तीवचसाऽञ्जसा । उत्कृष्टकन्या ह्युत्कृष्टवरस्यैवोचिता मता
॥७१॥ युग्मम् ॥ त्वामानेतुं विमानेन, मान्यं मामेष खेचरम् । प्रैषीत् सद्यः प्रसद्यैतां, प्रार्थनां तत्कृतार्थय ॥७२॥
अथो सहाग्र्यास इवोत्तरश्रेणिप्रभोः पुमान् । तथैव कन्योद्वाहार्थं, विजयाह्वयमाह्वयत् ॥७३॥ समं निमन्त्रणमहो,
प्राघूर्णस्येव भुक्तये । प्राक्पुण्यलभ्यप्रागल्भ्यसम्भवे किं भवेन्न वा ? ॥ ७४ ॥ ज्ञातोऽस्मीत्यथ स सत्यकुञ्जरूपः
स्वरूपभृत् । रामः सीतामिव प्रीत्योपयेमे प्राक् पतिंवराम् ॥७५॥ श्रेणिद्वयेशयोः कन्ये, अप्युपायंस्त स क्रमात् ।
वैजयन्तीं जयन्तीं च, रतिप्रीती इव स्मरः ॥ ७६ ॥ श्रेणिद्वयेऽपि श्वशुरोपरोधेन सगौरवम् । कियत्स्थित्या स
नित्यार्हच्चैत्यार्चातः कृतार्थभूत् ॥ ७७ ॥ भौतादिवत्प्रभूतानामुपहासाद्यसत्फलः । स्वप्नः सुबीजवत्तस्य, ह्युत्तरो-
त्तरसत्फलः ॥७८॥ खेटेन्द्रवत्खेटनानाविमानादिश्रियाऽथ सः । स त्रिप्रियः स्वपुर्यागात्, पौरक्षसोरुगौरवः ॥७९॥
उर्वीमुर्वीमथानुर्वीकुर्वन् सैन्यैः स साग्रजः । द्यां विद्याभृद्विमानैश्च, प्रतस्थे पितरं प्रति ॥ ८० ॥ दत्तान्यदैन्यै-
स्तत्सैन्यैरजन्यैरिव तत्पिता । विहस्तस्तं सन्निमित्तोत्साहितश्चाभ्यषेणयत् ॥ ८१ ॥ वाहिन्याः सङ्गमे युद्धतीर्थे
श्रद्धालुरुच्चकैः । सर्वान् निवार्य विजयः, सर्वैः सार्द्धमयुध्यत ॥ ८२ ॥ महौषध्याऽस्त्रालगनात्, सैन्यान् सर्वान्
पितुः स तु । छित्त्वाऽस्त्राण्यखिलान्यस्त्रैर्निरस्त्रान् स्त्रीरिव व्यधात् ॥ ८३ ॥ वीतास्त्र एव वप्ताऽपि, विशास्त्र इव
शास्त्रिकः । विलक्षः क्षमितोऽभ्येत्य, विजयेन जयेन च ॥ ८४ ॥ पुत्रौ सोऽप्युपलक्ष्योच्चैः, प्रेम्णाऽऽलिङ्ग्योल्लस-
न्मुदा । उत्कल्लोलाम्बुधेर्लीलां, व्यधाच्चिरमथाभ्यधात् ॥८५॥ वत्सौ ! तत्सार्थकान्योक्तिवाचिनौ वां वियोगतः ।

॥ ३८ ॥ रवेरिव विधुः सिद्धस्वार्थः श्रीविजयाज्जयः । ततो निर्गत्य खगतिर्गतो भोगापुरीं पुनः ॥ ३९ ॥
जजाप च स निष्पापवृत्तिस्तं मन्त्रमादृतः । सप्तमेऽह्नि नृपं नैमित्तिकस्तत्रेत्युवाच च ॥४०॥ बलादालानमुन्मूल्य,
पट्टहस्ती पुरीजनान् । मत्तोऽधुना धुनात्युच्चैश्चेन्महावायुवद् द्रुमान् ॥ ४१ ॥ तदा तव ध्रुवं भावि, पञ्चत्वं पञ्चमे-
ऽहनि । परलोकार्थपाथेयं, तद्यथाऽर्हमथाचर ॥ ४२ ॥ ततो वहन्ननुद्वेगसंवेगं सत्त्वभृन्नृपः । प्रादात्तस्मै तुष्टिदा-
नमिवोच्चैः शुभशंसिने ॥ ४३ ॥ जयाय तनयाभावाद्दत्त्वा राज्यं तदैव सः । सद्गुरोर्व्रतमादत्त, दानादानविदां-
वरः ॥४४॥ अचिराच्चिरकार्यस्य, चिकीर्श्चैकाग्र्यतोऽनिशम् । कायोत्सर्गात् पञ्चमेऽह्नि, प्रापोच्चैः पञ्चमां गतिम्
॥ ४५ ॥ तद्राज्यचिन्तां कृत्वाऽथ, जयः प्रति जयापुरीम् । प्रचचालाचलां चक्रे, चमूचक्रैश्चलाचलाम् ॥ ४६ ॥
अभ्यमित्र्यमिवाभ्येतमेतमेतन्नृपश्चरैः । जानन् जामातरं पुर्यामानयद्बहुमानतः ॥ ४७ ॥ स्वपुत्राणां कुपात्रत्वा-
त्तस्मै पात्राय सोऽप्यथ । राज्यमुत्सृज्य प्रव्रज्य, शिवसाम्राज्यभागभूत् ॥ ४८ ॥ प्राग्भवप्रेमदुर्मोचतया काम-
लतां च सः । द्वयोस्तृतीयां कृतवान्, राज्ञीं राज्ञो न किं भवेत् ? ॥ ४९ ॥ निकृतीनां कृती ढक्का, तां लक्कां निर-
कासयत् । स्वदेशतस्तोषरोषौ, महतां न हि निष्फलौ ॥५०॥ तत्राप्यसौ राजसूत्रमासूत्र्य स्वप्रियादियुक् । प्रेम्णा-
कृष्टो रश्मिनेव, गौरागाद्विजयान्तिके ॥ ५१ ॥ प्रियाभिस्तिसृभिस्ताभिः, लुभगेनेव शक्तिभिः । पराक्रमेणेव
नयो, जयेन विजयो व्यभात् ॥ ५२ ॥ भ्रात्रे चागतमात्रेण, प्रेम्णाऽमात्रेण तेन ते । ददे मुदोपदा मण्यौषध्यौ
दिव्यनिधी इव ॥ ५३ ॥ जयन्तीमपि रूपर्द्ध्या, जयन्ती विजयाह्वया । जयन्तीपुरीशपुत्री, स्वयंवरेऽवृणीत माम्

तिकः प्राग्वत्, खगतिर्गतवांस्ततः । प्राप्तुं तं मन्त्रमम्बु स्वबन्धुमम्बुधिमब्द्वत् ॥ २३ ॥ परीक्षार्थी परीक्षार्थमथा-
ष्टाङ्गनिमित्तवित् । भूत्वा भ्रातुः पुरः प्रातर्यातः स्वाख्यातवानिति ॥ २४ ॥ ज्ञानेन जाने भूजानेऽनुमानेनानुमेय-
वत् । वासप्रवासतद्दिव्यवस्त्वैश्वर्यार्जनादि ते ॥ २५ ॥ सङ्केतैश्चामुनाऽऽश्चर्यनिकेतैर्जल्पितैर्नृपः । चमत्कृतः स्मृत-
भ्रातृवियोगः साश्रुदृग् जगौ ॥ २६ ॥ क्वास्ते कथं भो ! मद्बन्धुः, कदा संगंस्यते च मे । सोऽप्याह सुरवत् स्वैरं,
विहरन् स सुखी भृशम् ॥ २७ ॥ सङ्गतिस्तु कथं तेन, सद्यः सम्पद्यतेऽत्र ते । वार्द्धिष्णुविधुनेवांशोर्दूरदूरविहा-
रिणा ॥ २८ ॥ यद्वा विद्योद्यमात्सोऽपि, सम्पद्येत सपद्यपि । दैववद्दिव्यशक्तीनां, नैव किञ्चिदगोचरः ॥ २९ ॥
किन्तु भ्रातुः सङ्गतिस्ते, नैच सङ्गतिमङ्गति । कथं ज्येष्ठः कनिष्ठस्य, सोढा सुप्रौढिमीदृशीम् ? ॥३०॥ वाणीमभा-
णीत्क्षोणीमान्, मा भाणीर्भद्र ! भेदकृत् । दित्सयैव हि राज्यस्य, संजिगांसोऽस्मि बन्धुना ॥३१॥ सोऽपि कोऽपि
निरीहेषु, रेखाभृत्स्नेहलेषु च । शिशोर्मे भोज्यवद्राज्यं, यः स्वासिश्याय्यमप्यदात् ॥३२॥ स साम्राज्यासिसमये,
मयाऽशोध्यत सर्वतः । तथाऽपि क्वापि न प्रापि, पापिनेव निधिर्गतः ॥ ३३ ॥ तत्सङ्गमावधि च्छत्रं, धारये नैव
वीजये । अराजवच्चामरे चेत्यग्रहीपमभिग्रहम् ॥ ३४ ॥ तत्काऽपि शक्तिश्चेत्ते तत्, सम्प्रत्येवार्यमानय । सोऽप्या-
ख्यदीक्षस्वाकर्षविद्यया कर्षयामि तम् ॥ ३५ ॥ वदन्नदः प्रमदभृत्तिरोभूय रयात् क्वचित् । जयः साक्षादभू-
दभ्रान्तर्भूतिर्भानुमानिव ॥ ३६ ॥ जयं जयवपुष्मन्तमिवावेक्ष्य व्यसिष्मयीत् । प्रामोमोदीन्मेदिनीमाननंसीच्च
संभ्रमात् ॥ ३७ ॥ ततः स्ववृत्तमुद्गीर्य, कार्यविद्विनिवार्य च । राज्यादानाग्रहं राज्यमन्त्रमस्माज्जयोऽग्रहीत्

द्दिव्यभोगिनीं भोगिनीं कनीम् ॥ ७ ॥ शतं मतङ्गजान् विश्वाद्भुतानश्वान् सहस्रशः । कृती वितीर्णवांश्चास्मै,
सौधागण्यधनाद्यपि ॥ ८ ॥ भोगिन्या सह भोगीन्द्रः, स नरेन्द्रमहाग्रहम् । अवाप्य चित्रं तत्रोच्चैश्चिरं स्वैरं व्य-
लालसीत् ॥ ९ ॥ मुदा कदाचिदश्वीयाद्याडम्बरपुरस्सरम् । क्ष्माकान्तमिव तं यान्तमाक्रीडं क्रीडनेच्छया ॥१०॥
प्रेक्ष्य साक्षेपमप्राक्षीत्, पद्माक्षीं तत्र कामपि । वास्तव्यां काऽप्यवास्तव्या, क एष सखि ! गच्छति ? ॥ ११ ॥
युग्मम् ॥ ढक्केव गाढशब्दा साऽप्यशब्दायत तां प्रति । तत्तदाश्चर्यनिर्माता, जामाताऽयं महीपतेः ॥ १२ ॥
त्रपाकृत्तन्निशम्यैष, सुमना व्यमनायत । परं परिभवस्थानमभिमानवतां ह्यदः ॥ १३ ॥ यतः—"उत्तमाः
स्वगुणैः ख्याता, मध्यमास्तु पितुर्गुणैः । अधमा मातुलैः ख्याताः, श्वशुरैरधमाधमाः ॥ १४ ॥" तत एव ततः
पश्चान्निवृत्तः स सुवृत्तहृत् । सौधं प्राप्तः प्रतप्तः सन्नेतच्चेतस्यचिन्तयत् ॥१५॥ न सर्वथाऽत्र मे स्थातुं, युक्तं नापि
जयापुरीम् । तद्भ्रातृविजयोपान्तं, यामि कामितमुच्चकैः ॥ १६ ॥ ममानर्जितराज्यस्य, प्राज्यराज्यजुषाऽमुना ।
संयोगः किंगुणो यद्वा, ग्रहस्येव विवस्वता ॥१७॥ तत्प्राज्यराज्यमर्जित्वा, जित्वाऽरीन् परमर्द्धिमान् । गन्ताऽस्मि
भ्रातुरभ्यर्णमेवं स्याद्गौरवं ध्रुवम् ॥१८॥ मद्धशप्राप्तराज्योऽपि, गुणैः प्राज्योऽपि सोऽन्यथा । मां न सन्मानयेज्जातु,
निध्या (धा) ने नहि नात्रकम् ॥१९॥ ध्यात्वेति राज्यमन्त्रं स, स्मरन्नप्यस्मरन्निव । सम्यग् न सस्मार विस्मारणात्तत्प्र
मादतः ॥ २० ॥ पदे पदे लीलया स्याद्गतप्रत्यागतं विदाम् । विदांवरस्याप्यस्यासीन्न तदा तत्कथञ्चन ॥ २१ ॥
हृत्खेदवेदनामेदस्व्यभूद्भ्रष्टपदः स तत् । धिक् प्राग्दुष्कर्मसोन्मादप्रमादमदिरान्धताम् ॥ २२ ॥ सोऽनन्यग-

गां राजा, नर्त्तकीवदनर्त्तयत्। भो भद्र! ते मया देया, कन्या काऽत्र विचारणा? ॥ ९२ ॥ प्राच्याः प्राणाः प्रतिछायाः, पुंसः सत्यैव गीर्ध्रुवम्। तत्तस्यै किं न कः कुर्याद्विशिष्य च महाशयः ॥ ९३ ॥ तदर्थमेव पित्राद्यैः, श्रीरामो वनवासकृत्। न न्यवारि हरिश्चन्द्रेणाप्यकारि कुकर्म तत् ॥९४॥ इत्थं प्रभाष्य वैभाष्यमनपेक्ष्य कनीं ददौ। यद्भविष्यः श्राग् भविष्यत्श्रिये तस्मै श्रियं तु सः ॥ ९५ ॥ कन्या कन्याजनन्याद्यैरप्यमानि तथैव तत्। अहो वचननिर्वाहमहोत्साहो महात्मनाम् ॥ ९६ ॥ तूर्णसम्पूर्णतत्तादृक्परीक्षः स सुपर्ववत्। रूपव्यक्तिं स्वशक्तिं च, व्यक्तीकर्त्तुमथाब्रवीत् ॥ ९७ ॥ एनामनेन रूपेण, भूप! रूपखनीं कनीम्। पाणौ कुर्वे कथं कुर्वे, तत्कथञ्चित्सुरूपताम् ॥ ९८ ॥ अभीष्टसाध्यसिद्धिश्च, साहसादेव देहिनाम्। येन निर्लक्षणोऽपि स्याद्द्वात्रिंशल्लक्षणाधिकः ॥९९॥ यतः—"अस्थिष्वर्थाः सुखं मांसे, त्वचि भोगाः स्त्रियोऽक्षिषु। गतौ यानं स्वरे चाज्ञा, सर्वं सत्त्वे प्रतिष्ठितम् ॥ २०० ॥" सत्त्वमादृत्य तज्जात्यहेमवद्वह्निसात्कृतम्। द्राग् नेष्येऽहं निजं देहं, निःसन्देहं परां श्रियम् ॥ १ ॥ इत्युक्त्वा सज्जिकां कृत्वा, सत्त्वाढ्यः सकलेष्वपि। पश्यत्सु विस्मयभयखेदोदयदयादिभिः ॥२॥ ज्वालाजटाले ज्वलने, स पपात पतङ्गवत्। तत्क्षणान्निर्ययौ चोच्चैर्दीप्रश्चित्रं पतङ्गवत् ॥ ३ ॥ युग्मम् ॥ माहात्म्येन महौषध्या, न दग्धः स्वल्पमप्ययम्। जज्ञे मणीमहिम्ना च, दिव्यप्राक्तनरूपभृत् ॥ ४॥ अथोच्चैर्विस्मितैः क्रूसस्मितैः क्षितिभृदादिभिः। सोऽनुयुक्तः सनिर्बन्धं, यथास्थितमचीकथत् ॥ ५ ॥ मन्त्रशक्त्युक्तितः किन्तु, महामणिमहौषधीम्। सुधीः संगोपयामास, तयो रक्षा तथैव हि ॥ ६ ॥ ततः प्रमोदमेदस्वी, मेदिनीमान् महामहैः। तेनोद्वाह्य व्यधा-

ऽनया । नान्यथा स्याद्विधिकृतं, व्याहृतं च महात्मनाम् ॥ ७६ ॥ कन्याखेदं जनन्यादेः, सादं ह्लादं च दुर्हृदाम् ।
अस्मै जनप्रवादं चावमन्येमां ददामि तत् ॥ ७७ ॥ विमृश्येति नृपोऽस्मै तां, यावद्यच्छति तावता । कुर्वन् स्वगर्व-
खर्वत्वं, खर्वस्त्वाख्याद् खर्वगीः ॥७८॥ महीन! ह्रीति हीनाङ्गदुर्दशायेदृशाय मे । किं हंसीं वायसायेव, ददास्येतां
विद्वांवर?॥ ७९ ॥ त्वया दत्ताऽपि वा कन्या, कथं मां स्वीकरिष्यति? । कथं वा लोकसांमत्यमत्यन्तानुचितं त्वदः
॥ ८० ॥ तदुक्तम्-"यद्यपि न भवति हानिः परकीयां चरति रासभे द्राक्षाम् । वस्तुविनाशं दृष्ट्वा तथाऽपि परि-
खिद्यते चेतः ॥ ८१ ॥" तदियं दीयमानाऽपि, त्वया नादीयते मया । स्वोत्तरीयानुसारेण, ननु पादप्रसारणम्
॥ ८२ ॥ करीरनिम्बादिरतेर्द्राक्षावणाविदूरगात् । उष्ट्रादपि निकृष्टोऽसौ, स्वानुरूपं न वेत्ति यः ॥ ८३ ॥ श्लेष्मादि-
संश्लेषजुषश्चन्दनादिविनिर्मुखः (र्गतेः) । मक्षिकातोऽपि स क्षुद्रः, स्वानुरूपं न वेत्ति यः ॥८४॥ आदाने वदने दाने,
निदाने सदनेऽदने । आसने शयने यानेऽप्युत्थाने स्थापनेऽर्थने ॥ ८५ ॥ ध्याने विधाने सन्धाने, योधने बोधने
धने । हाने मानेऽभिमाने च, समाह्वाने विवाहने ॥८६॥ उत्पाटने विघटने, घटने खेटनेऽटने । पाटने कुट्टने ज्ञाने,
विज्ञाने सेवने वने ॥ ८७ ॥ पठने पाठने गाने, कोपने गोपनेऽसने । एवमादिषु सर्वत्र, यः एवं वेद विवेद सः
॥ ८८ ॥ कलापकं । सङ्ग्रहस्त्वेवम्-स्वगृहेऽन्यगृहे वाऽपि, कृत्स्नकृत्येषु कृत्यवित् । स्वप्रतिष्ठाऽर्हताशक्त्याद्यनुरूपं
प्रवर्त्तते ॥ ८९ ॥ इत्थं तस्मिन्नुत्तमत्वाविसंवादिनि वादिनि । चमच्चरीक्रियन्ते स्म, सर्वेऽप्युर्वीश्वरादयः ॥ ९० ॥
गुणानुरागिणः स्वल्पास्तेभ्योऽपि गुणिनस्ततः । गुणिनो गुणरक्ताश्च, तेभ्यः स्वागुणवीक्षिणः ॥९१॥ स्वास्यरङ्गेऽथ

यसे जगत् । किन्तु काप्याशु लब्धासि पाप! पापफलं ध्रुवम् ॥६०॥ शृण्वन्नेवेति तां क्षोणौ, क्षिप्त्वैष क्षुद्रदारुवत् । जीवनाशं ननाश द्राग्, ध्रुवं दोपः प्रकम्पते ॥६१॥ समर्थोऽपि कृतार्थः सन्, गतार्थप्रासितो जयः । तत्पृष्ठे नान्वधाविष्ट, पापः पापेन पच्यताम् ॥६२॥ प्रवासारण्यवासाद्यमुग्रौपधमिवासयी । क्लेशेऽपि स्वार्थसिद्ध्या सोऽन्वमोमोदिष्ट दिष्टवान् ॥ ६३ ॥ विनोदात्त्वन्यदा भूत्वा, निकामश्यामवामनः । भोगावतीवद्भोगाढ्यां, सोऽगाद्भोगापुरीं पुरीम् ॥६४॥ नभोगविसुवद्भूत्वा, सुभोगस्तत्र भूविभूः । देवी भोगवती विश्वसुभगा भोगिनी कनी ॥६५॥ स क्षुद्राभिरिव क्षौद्रं, क्षुद्राङ्गः कौतुकाञ्जनैः । परीतः परितोऽश्रौषीत्, पटहोद्घोपणामिमाम् ॥६६॥ दुष्टाहिदष्टा जीव्येत, कनी येनावनीशितुः । तां दत्तेऽस्मै नृपः साश्वसहस्रं च शतं गजान् ॥६७॥ ततः कलीकिल इवोत्कलिकां नाटयन्नयम् । स्पृष्टवान् पटहं हास्यं, विस्मयं च जने पुनः ॥ ६८ ॥ कन्यादिलाभे भो! कार्षीर्मुधा वामन ! मा मनः । मुक्ता कनीयं वैद्याद्यैर्युक्ता नात्र प्रतिश्रुतिः ॥ ६९ ॥ न्यवार्यतार्यैरित्येप, प्रैर्यतार्येतरैः पुनः । उपैक्ष्यत च मध्यस्थैरहो त्रैधं जगत्स्थितिः ॥ ७० ॥ ततः कौतूहलानल्पजल्पलोकानुकूलगीः । जगाम वामनोऽक्षामशक्तिर्धाम क्षमाभुजः ॥ ७१ ॥ अहो आहोपुरुषिकेत्यादिवादिष्वथो नृपु । नत्वा नृपं नृपादिष्टः, स कन्याग्रे निविष्टवान् ॥ ७२ ॥ मेधाव्येष महौषध्या, प्राग्वदुसप्रयुक्तया । तां जवाज्जीवयामास, न हि तादृग् विसंवदेत् ॥ ७३ ॥ सर्वे सविस्मयाह्लादं, विषादं च तदा दधुः । कन्याया जीवनात्तस्य, तादृग्रूपनिरूपणात् ॥ ७४ ॥ आदानीये गुणैः कन्यादानीयेऽस्मिन्नरोत्तमे । किं नाम वामनत्वादि, धिग् दैवं रत्नदूषकम् ॥ ७५ ॥ किंवाऽधुना निष्फलया, चिन्तया लतया-

माणर्द्धिर्महतामप्यहो स्थितिः ॥ ४४ ॥ वियोगोद्विग्नचिन्ताब्धिमग्नराजसुतोदितात् । तादृग्जामातृवृत्तान्तात्,
क्रान्तात्मा क्ष्माभृदप्यभूत् ॥४५॥ व्यसनाद्विनिवर्त्तेत, जात्वयं मम लज्जया । ध्यात्वेत्यमात्यमाहूत्यै, प्राहिणोत्तस्य
पार्थिवः ॥ ४६ ॥ तस्या धाम्नो द्वारमेत्यामात्यस्तं यावदाह्वयत् । तावदाविर्भवद्व्रीडापीडार्त्तः सोऽभ्यचिन्तयत्
॥४७॥ हाऽहं राज्ञाऽपि विज्ञातः, स्यास्तुरत्र विटादिवत् । कथं स्वास्यं दर्शयामि?, यामि तद्दूरतः क्वचित् ॥ ४८ ॥
ततस्तार्क्ष्य इवोत्प्लुत्य, द्राग् निर्गत्य च तद्गृहात् । स्वं रूपं च परावर्त्त्य, निरगान्नगराद्बहिः ॥ ४९ ॥ नैवात्र कश्चिद्द्र-
ष्टेति, खे खेचर इवोच्चकैः । मणिप्रभावादुत्प्लुत्याप्यगाद्दूरतरं क्वचित् ॥५०॥ तत्रावधूतरूपेणारण्ये शून्ये भ्रमन्नयम् ।
नष्टवस्त्वाप्तिपिशुनं, शकुनं प्राप्य पिप्रिये ॥ ५१ ॥ यावद्दध्यौ च लब्धाऽस्मि, कथं चेह महौषधीम् । तावत्तस्या-
मिलत् प्रीत्येवान्योऽवधूतरूपभृत् ॥ ५२ ॥ जयस्तेनाप्तवत् पृष्टः, स्पष्टयित्वा महौषधीम् । किंगुणेयं सोऽपि तां
स्वामुपलक्ष्य मुदाऽवदत् ॥ ५३ ॥ सत्यं चेद्वक्षि तत्तेऽस्या, गुणाम्नायौ गृणाम्यहो । ब्रूहि क्वेयं त्वया लब्धा, लुब्धा-
त्मा सोऽप्यथाभ्यधात् ॥ ५४ ॥ पुर्यामेकस्यामेकस्माद्, भो महात्मन्! महात्मनः । महोद्यमान्महाविद्यामिवास्मि
प्रापिवानिमाम् ॥ ५५ ॥ गरं गारुडशक्त्येवानया गुप्तप्रयुक्तया । स तत्क्षणात् क्षिणोति स्म, महादोषमहाग्रहम्
॥ ५६ ॥ मत्प्रयुक्ता तु कं हेतुं, दोषहन्नालपतोऽप्यसौ । तदस्यां चेत्त्वमाम्नासी, तदाम्नायगुणान् भण ॥ ५७ ॥ स्तेनं
ततस्तं स स्पष्टं, निष्टङ्क्याचष्ट रुष्टहृत् । रे अनार्य! हृतं चौर्याद्दिव्यवस्तु फलेत् कथम्? ॥ ५८ ॥ अत्रामुत्राप्य-
नर्थाय, क्रौर्यभृच्चौर्यमङ्गिनाम् । विश्वासघातजातस्य, तस्य किं ब्रूमहे तुलाम् ॥५९॥ धूर्त्त! धूर्त्ततयैवं मामिव वञ्च-

॥ १३ ॥

ददौ किञ्चिन्महामणिः ॥२८॥ भवेद्भाग्यवतामेव, दिव्यवस्त्वप्यभीष्टकृत्। कुतो वा दुर्नयेऽभीष्टं ?, किन्तु पाप्मैव पाप्मिनः ॥२९॥ ततो धिक्कारमक्कायाः, कामं कामलतादयः। व्यधुस्तामभ्यधुश्चायाप्यसौ तस्यैव दीयताम् ॥३०॥ किं चैवं राजमान्यत्वाद्राजलीलां बभाज यः। साक्षात्कल्पद्रुममपि तं, हा! गृहान्निरकासयः ॥३१॥ ताभिरित्याद्युपालब्धाऽधिकलुब्धा च कुट्टिनी। किञ्चिद्विचिन्त्य तद्रत्नं, गृहीत्वाऽगाज्जयान्तिके ॥३२॥ दम्भेन दम्भिनी दुःखार्द्रतां चोन्मुद्रयन्त्यवग्। हा वत्स! किं विमुच्यास्मान्नैव सम्भालयस्यपि ॥३३॥ यद्वा प्राप्तः प्रौढिमानं, मानं राज्ञः परं श्रितः। स्वर्गं गत इवाङ्गीव, स्मरस्यपि कथं नु नः ? ॥३४॥ विस्मारकस्याप्यस्माकं, स्मरामस्तव नो कथम् ?। पद्मिन्यः पद्मिनीप्राणनाथेनैव विकस्वराः॥ ३५ ॥ त्वद्वियोगाग्निसन्तप्ता सुता कामलता लता। वत्स! जीवनदेनोच्चैर्निर्वाप्या भवतैव चेत् ॥ ३६ ॥ किञ्च किञ्चिद्वस्त्वपूर्वं, लेभेऽस्माभिर्गृहान्तरे। किंसत्कमिति नो विद्मस्तुभ्यं दद्मः प्रियात्मने ॥ ३७ ॥ गृहाणानुगृहाणास्मान्, स्वगृहागमनेन च। प्रार्थनाव्यर्थनायां हि, सतां न कौशलं किल ॥ ३८ ॥ जल्पित्वेत्यर्पयामास, सा तस्मै तं महामणिम्। नष्टं पुण्यमिव स्पष्टमहो कपटपाटवम् ॥३९॥ तदाह–"पक्षिणां वायसो धूर्त्तः, श्वापदेषु च जम्बुकः। नरेषु द्यूतकारश्च, नारीषु गणिका पुनः" ॥ ४० ॥ अक्काकपटतत्पुत्रीस्मृतितद्रत्नलाभतः। तदा कोपौत्सुक्यहर्षैः, सोऽन्वभूद्भावसङ्करम् ॥ ४१ ॥ क्षणोऽधुना न कोपस्येत्यतः कोपं स गोपयन्। प्रीतिं प्रकटयन्नेष्यामीत्युक्त्वा, विससर्ज ताम् ॥ ४२ ॥ सोऽपि कामलतां ध्यायन्, विन्ध्योर्वीमिव वारणः। द्रागेवागात्तद्गृहे धिग्, व्यसनं दुरपासनम् ॥ ४३ ॥ प्राग्वत्तस्थौ च तत्रैव, तदासक्तः कियद्दिनीम्। तन्मणीपूर्य-

तस्मै तां स्वर्णकोटीं च, यच्छेत् क्ष्माभृदथो जयः। हृष्टस्तच्छ्रवणात् स्पृष्टपटहं क्ष्मापधाम्न्यगात् ॥१३॥ राज्ञाऽनुज्ञात-
मात्रश्चामात्रधीर्मन्त्रवादिवत्। शौचावगुण्ठनजापाद्याडम्बरपुरस्सरम् ॥ १४ ॥ महौषधीभाविताम्भश्छटाच्छोट-
नया स्यात्। राज्ञः कन्यां पटूचक्रे, किं न दिव्यौषधीबलात्? ॥ १५ ॥ युग्मम् ॥ लोकोत्तराकृतिकलाऽनुमितैत-
त्कुलादिकः। सुविस्मितः प्रमुदितस्तस्मै क्ष्मादयितस्ततः ॥१६॥ स्वकनीमवनीं वीक्षाप्राप्तां नागकनीमिव। ददौ-
कनककोटीं च, नान्यथा भाषितं सताम् ॥ १७ ॥ युग्मम् ॥ महीनेता महोत्साहे, विवाहे विहिते तयोः। यौतके
कौतुकेनोच्चैः, सर्वं सौधादिकं ददे ॥ १८ ॥ तत्र तस्थौ सुखं सैष, दोगुन्दुक इवामरः। ध्यायन्नुपायं सन्मत्या,
प्रत्यानेतुं महामणिम् ॥ १९ ॥ अथ च-राजाङ्गजादोषपिष्ट्यै, प्रयुक्तां गुप्तमप्यहो। कश्चित्कथञ्चिद्बुबुधे, धूर्त्तात्मा
तां महौषधीम् ॥२०॥ तां जिघृक्षुः कृतक्षत्रवेष एष विशेषतः। जयमावर्जयद्व्याजाद्विनयाद्यैः सुभृत्यवत् ॥२१॥
सैवं विश्वास्य तं गुप्तां, गृहान्तस्तां गृहीतवान्। हृष्टहृन्नष्टवांश्च द्राक्, धिग् विश्वासमनर्थदम् ॥ २२ ॥ तदुक्तम्-
"जीर्णे भोजनमात्रेयः, कपिलः प्राणिनां दयाम्। बृहस्पतिरविश्वासं, पाञ्चालः स्त्रीषु मार्दवम् ॥ २३ ॥ कन्यादि-
लाभान्तरितत्वेऽप्यनन्तरिताऽमुना। अमानि हानिः सा प्रायः, सुखं दुःखे निमज्जति ॥ २४ ॥" कन्यादिलाभः
को वाऽस्योर्वीशसूनोर्महात्मनः। दिव्यर्द्धिवस्तुहानिस्तु, दुःखाकृन्नोच्चकैः कथम्? ॥२५॥ दत्ते दैवेन दैवेनापहृते ते
तु वस्तुनी। दैवेनैव प्रापणीये, मात्राधिक्यबलादपि ॥२६॥ तत्किं वृथा कथनयाऽन्यस्य दर्शितदैन्यया। इत्यन्तरेव
दध्रेऽसौ, दुःखमौर्वमिवाम्बुधिः ॥२७॥ इतश्च-अभ्यर्च्य याचितोऽप्युच्चैर्जयं निर्वास्य वेश्यया। सामान्यमणिवन्नैव,

द्याचनार्थं तमर्चितुम् । ग्रन्थावुद्ग्रथिते तेन, खेदोऽप्युद्ग्रथितः पृथुः ॥९७॥ हा हतोऽस्मि हतोऽस्म्युच्चैः, पापया नूनमक्कया । नो चेत्कुतश्चन्द्रहासमध्यमेवमपायिषि ॥ ९८ ॥ चन्द्रहासप्रयोगाच्च, शिरश्छेदोऽपि संभवेत् । इयद्यापि मे स्तोकमोकः किं चास्म्यधिष्ठितः ॥ ९९ ॥ न स्यादस्या गृहे दास्याः, किं वा दास्यावहे नृणाम् । हा! किं कर्त्तास्मि धर्त्तास्मि, दुःखान्यथ दरिद्रवत् ॥ १०० ॥ अप्येवं दह्यमानोऽन्तरन्तर्लग्नाग्निवृक्षवत् । सोऽस्थात् कामलतासक्त्या, तथैव व्यसनान्यहो ! ॥ १ ॥ निर्धनस्याथ तस्याक्का, विसर्जनकृते सुताम् । सुतरां प्रैरयत्तासामसौ धर्मोऽनुपाधिजः ॥२॥ यतः–"विभवो वीतसज्ज्ञानां, वैदग्ध्यं कुलयोषिताम् । दाक्षिण्यं वणिजां प्रेमवेश्यानाममृतं विषम् ॥ ३ ॥ सा पुनस्तद्गुणाकृष्टा, विप्रकृष्टा विकर्मतः । प्रेम्णा प्रकृष्टाऽभाषिष्ट, निकृष्टामभि मातरम् ॥४॥ मातरेतेन नः पुण्यैः, समेतेन विदेशतः । प्रत्ता हेम्नः कोटिकोट्यस्तदसौ त्यज्यते कथम् ? ॥ ५ ॥ इत्युक्ताऽप्यविविक्ताऽक्का, तत्त्यत्कारमकारयत् । दासीसकाशतो वेश्यावश्यानां ही विडम्बना ॥ ६ ॥ ततोऽभिमानात्तत्स्थानान्निर्गतो दुर्गतो यथा । हीविषादाद्युपगतो, गतोऽसौ शून्यवेश्मनि ॥ ७ ॥ इतः सखीभिः सहिता, दुहिता तत्पुरेशितुः । रन्तुमन्तःसरिद्यावन्मरालीवदवातरत् ॥ ८ ॥ तावत्तत्रैव दुर्दैवभवाद्दुष्प्रेतदोषतः । छिन्ना लतेव न्यपतत्, सा मृतेव विचेतना ॥९॥ तज्ज्ञात्वा खेदभृत् क्ष्माभृत्, प्रतीकारानकारयत् । तां नीत्वा धाम्नि विविधान्, स्नेहलानामियं स्थितिः ॥१०॥ टङ्कटङ्कनवद्व्यर्थे, न त्वस्याः कोऽप्यभूद्गुणः । मान्त्रिकादिमहिम्नो हि, हिमानी दोषदुष्टता ॥ ११ ॥ ततोऽत्यन्तार्त्तिमान् भूमान्, पटहेनेत्यघोषयत् । यो गुणी प्रगुणीकुर्याद्राजकन्यां कथञ्चन ॥१२॥

॥ ८१ ॥ जयो विजयराज्याख्या, कृतार्थः प्रस्थितस्ततः । तदानीं नामिलत्तस्य, राज्यसङ्कोचशङ्कया ॥ ८२ ॥
महिम्ना तन्मणेः क्ष्मायां, खे च खेचरलीलया । बम्भ्रम्यति स स स्वैरं, कौतुकी किल नालसः ॥ ८३ ॥ नाम्ना
समानामन्येद्युः, प्रययौ स जयापुरीम् । हैमहर्म्यसमृद्ध्या या, लङ्काशङ्कामकारयत् ॥ ८५ ॥ जैत्रमल्लस्तत्र भूमान्,
जैत्रदेव्यादयः प्रियाः । पुत्राः शतं जगज्जैत्रश्रीजैत्रश्रीश्च पुत्रिका ॥ ८५ ॥ साक्षात् कामलता कामलता नाम
पणाङ्गना । तत्रास्ति सोऽस्यामासक्तस्तत्सौधे तस्थिवांश्चिरम् ॥ ८६ ॥ विनोपायं धनोत्पत्तिरीप्सिताऽस्य कथं
न्विति । वत्से ! कथञ्चित्पृच्छेति, तां लुब्धाऽक्काऽन्यदाऽवदत् ॥८७॥ सा प्राज्ञा प्राह किं मातः!, तुच्छया पृच्छ-
याऽनया । किं मण्डकार्थक्लेशेन, मण्डकैर्हि प्रयोजनम् ॥ ८८ ॥ इत्याद्युक्ताऽपि लोभार्त्ता, तत्पृच्छार्थकदाग्रहम् ।
अक्का कथञ्चिन्नामुञ्चद्दुष्टग्रहगृहीतवत् ॥ ८९ ॥ ततस्तया जयाह्वानः, सोपरोधमपृच्छ्यत । प्रेमभङ्गभिया सोऽपि,
यथास्थितमवोचत ॥ ९० ॥ न कस्यापि प्रकाश्यं स्याद्गुह्यं स्त्रीणां विशेषतः । तस्यै तथाऽपि स प्रोचे, स्त्रीवशाः
किं न कुर्वते ? ॥९१॥ मातुः प्ररूपयामाहे ( से ), तत्स्वरूपं ततस्तया । हृष्टा दुष्टाशया साऽपि, तन्मणिग्रहणा-
शया ॥ ९२ ॥ ततः कपटिनी नीतिकुट्टिनी कुट्टिनी रहः । दुग्धं लुब्धा बिडालीवान्वेषीद्विष्वग्महामणिम् ॥९३॥
अन्यत्रादर्शनात्तं तत्पार्श्वे संभाव्य दम्भिनी । तं चन्द्रहासमदिरां, दधिदम्भादपाययत् ॥ ९४ ॥ ततो शुसां-
शुकग्रन्थेर्मूर्च्छालस्यास्य साऽग्रहीत् । तं तत्तुल्योपलं न्यस्य, खातपूरितरीतिवित् ॥९५॥ क्रमाच्च सावधानेऽस्मि-
न्, स्थाने जानति तं मणिम् । स्थाने विषादस्यातोऽपि, न विषादस्तदाऽजनि ॥ ९६ ॥ दिनान्तरे किं तु किञ्चि-

धातोश्च नोपाधिर्यत्परस्मै पदार्पणम् । आत्मने पददानं तु, तेषामौपाधिकं पुनः ॥६६॥ इतश्च—मन्त्र्याद्यैस्तत्र निष्पुत्रधात्रीपतिमृतेः प्रगे । अध्यवास्यन्त हस्त्यश्वच्छत्रभृङ्गारचामराः ॥ ६७ ॥ पुरान्तर्भ्रान्तवन्तस्ते, राज्यार्हानासितस्ततः । पुराद्वहिर्यातवन्तः, क्रमाच्च विजयान्तिकम् ॥ ६८ ॥ तत्पुण्यप्रेरित इव, प्रावृषेण्याम्बुवाहवत् । गजोऽथ गर्जितं चक्रे, हयो हर्षाच्च हेषितम् ॥ ६९ ॥ सभृङ्गारश्च भृङ्गारः, स्वयं भक्तिवशाद्ददौ । दैवतस्येव तस्यार्घं, किं न दिव्यानुभावतः ? ॥ ७० ॥ त्रियोगजानि प्राक्पुण्यानीवास्योर्द्धं च पार्श्वयोः । व्यजृम्भन्त सितच्छत्रमवीज्येतां च चामरे ॥ ७१ ॥ उन्नतस्योन्नतं स्थानमेवोचितमितीव तम् । द्विपोऽध्यारोपयत् स्कन्धे, प्रणेमुश्च प्रजाव्रजाः ॥७२॥ राज्यार्हराजासिद्धष्यत्प्रजाजयजयारवैः । पञ्चशब्दोत्थशब्दैश्च, शब्दाद्वैतमभूत्तदा ॥७३॥ इमं गुणैः सातिशयं, विजयं नाम दुर्मदी । मद्दत्तराज्यं राजन्यं, राजानं यो न मन्यते ॥७४॥ तं निग्रहीष्ये देव्येति, व्योम्न्युक्ते शक्रवत्सुरैः । भीतैः स मेने सामन्तैः, श्राक्समेतैः समन्ततः ॥७५॥ युग्मम् । सचिवादीनथावादीद्विजयो व्यञ्जयन् ज्ञताम् । ममाग्रजोऽत्र क्वाप्यस्ति, संशोध्यानीयतां द्रुतम् ॥७६॥ राज्यं च दीयतां तस्मै, राज्यार्हायाखिलैर्गुणैः । सति ज्येष्ठे कनिष्ठेन, राज्यं ग्राह्यं कथं मया ? ॥ ७७ ॥ तेऽप्याहुस्तद्विनीतत्वनीत्यौचित्यचमत्कृताः । देव! देवतया दत्तं, राज्यं स्यात्कथमन्यथा ? ॥ ७८ ॥ स्वामी त्वमेव नस्तस्मात्, पावयैतत्पुरं प्रभो ! । इत्युक्त्यैव समं हस्ती, प्रतस्थे तत्पुरं प्रति ॥ ७९ ॥ अनुल्लङ्घ्यं दिव्यकृत्यमित्याश्चर्यावहैर्महैः । प्रविवेश पुरं सोऽथ, तत्कीर्तिश्च दिगन्तरम् ॥ ८० ॥ सोत्सवं वसुधाधीशसौधे सिंहासनस्थिते । सामन्तमन्त्रिभिश्चक्रेऽभिषेकोऽस्यार्द्धचक्रिवत्

विनयी द्विधा। राज्यं भ्रातः! तवैवार्ह, तव सेवा च मे पुनः ॥५१॥ सौमित्रेरिव मे राज्याज्ज्यायःसेवा विशि-
ष्यते। तदार्येणैव जाप्योऽयमार्यश्चैवास्तु राज्यभृत् ॥ ५१ ॥ दित्संस्तस्यैव राज्यर्द्धि, सोऽप्यजल्पदनल्पमुत्।
द्वयोरप्यावयो राज्ये, न्याय्ये न्याय्येतरत् किमु? ॥५२॥ तद्वावपि जपावस्तामित्युक्त्वा तत्प्रतीतये। जपन्निवाभू-
दजपन्नप्यसौ स्नेहधीरहो! ॥ ५३ ॥ ज्येष्ठवाक्यात् कनिष्ठस्तज्जपन्निष्ठस्ततोऽजनि। लघुर्वृद्धानुगामी स्यादिति
सत्यापयन्निव ॥ ५४ ॥ अथो जगद्व्यथोद्युक्ततमःसंहारकारणम्। साक्षादभूज्जगच्चक्षुः, श्रीगुरुर्गौरवास्पदम् ॥५५॥
पुरतः प्रस्थितौ ध्वान्ताव्यथितौ पथि तौ ततः। प्रेक्ष्यानुजं निजं श्रान्तं, क्रमाच्चाचिन्तयज्जयः ॥ ५६ ॥ कोऽयं
मुधिकया कायक्लेशः क्लेशसहोचितः। को नाम सुखसामग्र्यां, प्रेक्षाभाग् दुःखभाग् भवेत्? ॥ ५७ ॥ ध्यात्वेत्य-
भ्यर्च्य सोऽभ्यर्थ्य, तं मणिं तत्प्रभावतः। खगवत् खगतिः स्वैरं, विचचार कुमारयुक् ॥ ५८ ॥ इत्थं तद्दत्तदत्ते-
ष्टभोज्यभोग्यादिभिश्च तौ। जातौ सर्वत्र सर्वाङ्गसुखिनौ सुकृतान्यहो! ॥५९॥ नानाश्चर्यालोकनोत्कौ, कृतार्थौ
तीर्थवन्दनैः। क्रमाद्दूरतरं देशं, तौ दस्राविव जग्मतुः ॥ ६० ॥ प्रातः प्राप्तौ ससमेऽह्नि, क्रमात्कामपुरं पुरम्।
ऋद्ध्या स्पर्द्धादिव दिवं, चैत्याग्रैर्यन्निरीक्षते ॥६१॥ श्रान्तश्चोपवने प्रोच्चैः, फलिताम्रतरोरधः। तस्थौ प्रोच्चैः फला-
र्थीव, ज्यायसोऽनुज्ञयाऽनुजः ॥६२॥ राज्यमद्य ध्रुवं प्राप्ता, ससाहं मन्त्रजापतः। कुतोऽप्ययं मयि ज्येष्ठे, स्थिते-
ऽत्र न तु लास्यति ॥६३॥ प्रसह्य मह्यमेवायं, किन्तु दास्यति नीतिवित्। अस्य पार्श्वस्थता नैवोचिता तन्मे मुने-
रिव ॥ ६४ ॥ चिन्तयित्वेति चतुरस्तरसा निरगात्ततः। जयः किञ्चिन्मिषं कृत्वाऽस्पृहता महतामहो! ॥६५॥ सतां

प्रवृद्धिः ॥३६॥ सिंहद्वारे लिखित्वेदं, सिंहवत्साहसान्वितौ । सायं सुगुप्तं निष्क्रान्तौ, द्राग् जीवाविव तौ पुरात् ॥ ३७ ॥ मणिप्रदीपैः शान्त्यर्हच्चैत्ये नित्यप्रकाशिनि । पुराद्बहिर्जिनं नत्वा, ताविति स्तुतिमूचतुः ॥ ३७ ॥ नित्यानन्दपदप्रयाणसरणी श्रेयोऽवनीसारणी, संसारार्णवतारणैकतरणी विश्वर्द्धिविस्तारणी । पुण्याङ्कूरभरप्ररोहधरणी व्यामोहसंहारिणी, प्रीत्यै कस्य न तेऽखिलार्त्तिहरणी मूर्त्तिर्मनोहारिणी ? ॥ ३९ ॥ ततस्तौ प्रस्थितौ दूरे, श्रान्तौ विश्रान्तये स्थितौ । वटाधः क्वापि सुष्वापानुजो जाग्रत्यथाग्रजे ॥ ४० ॥ यक्षिणी यक्षमाचख्यौ, तदा तद्वटवासिनी । एतौ द्वावतिथी नाथाऽऽतिथेयं पृथुमर्हतः ॥ ४१ ॥ योऽपि सोऽप्यतिथिः पूज्यः, सर्वेषामपि सर्वथा । शुभैर्नः किं पुनः प्रासाविमौ त्रिजगदुत्तमौ ॥ ४२ ॥ आख्यद् यक्षोऽपि दक्षोक्त्या, साधु साध्वभ्यधाः प्रिये ! । दिव्यवस्तुत्रयं दत्त्वा, कर्त्ताऽस्म्यातिथ्यमेतयोः ॥ ४३ ॥ महामन्त्रस्तत्र पाठसिद्धः शुद्ध्या ध्रुवं स्मृतः । सप्तकृत्वः सप्तमेऽह्नि, प्राज्यसाम्राज्यऋद्धिदः ॥ ४४ ॥ इष्टाकृतिकृतिर्व्योमगतिर्विषपराहतिः । इष्टर्द्धिभोज्याद्यासिश्चास्मात्प्रार्थितान्महामणेः ॥ ४५ ॥ महौषधीयं शस्त्राग्निव्यालभूतादिदोषहृत् । प्रिये ! त्रयीव भुवनत्रयीसारमियं त्रयी ॥ ४६ ॥ जयाय श्रावयित्वेदं, प्रददे प्रमदेन सः । चित्रकृत्तत्त्रयं भाग्यभाजां किं नाम दुर्लभम् ? ॥ ४७ ॥ माहात्म्येन महौषध्या, निश्चिन्वन्ननुपद्रवम् । जयोऽपि सुष्वाप सुखं, मुदितोऽथाकुतोभयः ? ॥४८॥ निद्राव्यपगमे ब्राह्मयमुहूर्ते हितवत्सलः । जनकस्तनयायेव, विजयाय जयाह्वयः ॥ ४९ ॥ यक्षातिथेयीवृत्तान्तं, व्याहृत्य विधिपूर्वकम् । राज्यमन्त्रमदाद्राज्यमस्यैवास्त्विति चिन्तयन् ॥ ५० ॥ युग्मम् । वर्जयन् विजयो व्याजं, व्याजह्रे

सद्यः कथञ्चिन्निश्चित्य, चेतस्तदेतदेतयोः ।
छेत्तुं न युज्यते । पुत्रौ किं पुनरीदृक्षौ, सदृक्षौ कल्पवृक्षयोः ! ॥२२॥ सद्यः कथञ्चिन्निश्चित्य, चेतस्तदेतदेतयोः । प्रवेशं वार-
कुर्वे नियन्त्रणामात्रमियताऽपि न मे भयम् ॥२३॥ ध्यात्वेति धाम्नि धात्रीशः, शङ्कमानः कुमारयोः । तौ नन्तुमागतौ दौवा-
यामास, ह्यविश्वासः श्रियः पदम् ॥ २४ ॥ अथ श्रीस्थानकास्थानस्थायिनं तायिनं भुवः । पश्चान्निवृत्तौ कर्तुं च, प्रवृत्तौ मन्त्रमित्यथ
रिकेण द्वारि वारितौ ॥ २५ ॥ इयताऽप्युच्चकैर्दूनौ, मौनेनैव तदैव तौ । पश्चान्निवृत्तौ कर्तुं च, प्रवृत्तौ मन्त्रमित्यथ ॥ २७ ॥ यतः—
॥ २६ ॥ विनाऽपराधाद्यभिधामेव यद्यावयोरपि । राज्ञाऽवज्ञा विधीयेत, तन्न स्थातुमिहोचितम् ॥ २८ ॥" तदवश्यं
"मा जीवन् यः परावज्ञादुःखदग्धोऽपि जीवति । तस्याजननिरेवास्तु, जननीक्लेशकारिणः ॥ २९ ॥ देशान्तरदिदृक्षाऽपि,
प्रयास्यावः, स्वैरं देशान्तरं परम् । कः स्यात् परवशो दैववशो जानन् शुभाशुभे ॥ ३० ॥ यतः—"त्रयः स्थानं न मुञ्चन्ति, काकाः
पूर्यतामेवमावयोः । भूजानिरपि जानातु, स्वसून्वोरभिमानिताम् ॥३१ ॥" किञ्चित्प्रपञ्चितं चैतद्विमातुर्दुर्मते-
कापुरुषा मृगाः । अपमाने त्रयो यान्ति, सिंहाः सत्पुरुषा गजाः ॥ ३२ ॥ किन्तु निर्दम्भसंरम्भ, उपालम्भः प्रभोरपि । ज्ञाप्यः
ध्रुवम् । युक्तं चास्या न तु पितुरीदृग् राजाऽथवैष वै ॥३२॥ किन्तु निर्दम्भसंरम्भ, उपालम्भः प्रभोरपि । ज्ञाप्यः
कोऽपीति तौ युक्त्याऽन्योक्ती लिलिखतुः क्रमात् ॥ ३३ ॥ ते चैते द्वे पद्यत्रयेण—तुलेऽवलेपं वहसे वृथैव, सम-
प्रमाणं निखिलान्नयेऽहम् । गुरूनधस्तादगुरून् यदुच्चान्, करोष्यशेषान् कुदृषत्समांश्च ॥ ३४ ॥ रत्नानि रत्नाकर
माऽवमंस्था, महोर्मिभिर्यद्यपि ते बहूनि । हानिस्तवैवेह गुणैस्त्वमानि, भावीनि भूवल्लभमौलिभाञ्जि ॥३५॥ न
चैष दोषस्तव किन्तु कस्याप्यन्यस्य यः क्षोभकरस्तवापि । गुणोऽथवाऽयं कथमन्यथाऽस्तु, तेषां गुणैः स्वैर्महिम-

विजयश्च द्वितीयाया, नाम्ना धाम्ना जगज्जयन् ॥ ६ ॥ दिव्यरूपाद्युरुगुणैः, समं सम्यक्त्वमेतयोः । बाल्येऽपि प्रागभवात् प्रादुरास कर्पासरङ्गवत् ॥ ७ ॥ तयोस्तुल्याकृतिवयोविद्याशीलगुणश्रियोः । ऐक्यप्रख्यमभूत्सख्यमक्षिभ्यामिव शिक्षितम् ॥ ७ ॥ यतः–"पाण्योरुपकृतिं सत्त्वं, स्त्रिया भग्नशुनो बलम् । जिह्वाया दक्षतामक्ष्णोः, सखितां शिक्षयेत् सुधीः ॥९॥" पुत्रः प्रकृत्या दुर्मत्याः, श्रीमत्या अप्यथाभवत् । नयधीर्नयधीराह्वः, पङ्किलोर्व्या इवाम्बुजः ॥ १० ॥ परभागं प्रजारागं, प्रेक्ष्य सापत्नयोः परम् । ईर्ष्यालुरीर्ष्यादुर्वीक्षा, श्रीमतीति व्यचिन्तयत् ॥ ११ ॥ मिथःसङ्गतयोः सर्वमतयोरेतयोः सतोः । राज्याशाऽपि क्व मे सूनोर्दासीसूनोरिव ध्रुवम् ॥ १२ ॥ तत्किञ्चिदायतिहितं, करोमीत्यथ तत्कृते । सा परिव्राजिकामेकामावर्जयद्नार्जवाम् ॥ १३ ॥ सिद्धच्छेदकशक्त्याऽथ, श्रीमत्युक्त्या नृपस्य सा । अन्तःस्वप्नं ददौ स्वप्नं, राज्याधिष्ठायिकाख्यया ॥१४॥ हत्वा त्वामचिराद्राजन् !, राज्यमेतौ जिघृक्षतः । दुर्जयौ जयविजयौ, दैत्याविव नवोत्थितौ ॥१५॥ तदुच्छेद्याविमौ विन्द्याः, सपद्यात्मभुवावपि । दुष्टव्रणाविव घृणा, का चिन्त्या स्वकघातके ? ॥१६॥ प्राच्यप्राज्यानुरागेण, तव राज्यादिदेव्यहम् । हिता हितावहं वच्मि, यथोचितमथो कुरु ॥१७॥ स्वप्नतोऽस्माद्धतस्वप्नः, श्रीमत्याऽभ्येत्य भूपतिः । ज्ञसस्तथैव स्वस्वप्नोपलम्भो दम्भिभधीरहो ! ॥ १८ ॥ तत्संवादोद्भवभूरिविषादो मेदिनीश्वरः । सतामुचितया चित्ते, चिन्तयामास चिन्तया ॥१९॥ सत्तमत्वसमेताभ्यामेताभ्यामेतकत्कथम् । संभवेत् पुष्पदन्ताभ्यामिवान्धतमसोद्गमः ? ॥२०॥ अस्वप्रदत्तस्वप्नश्च, नैव मिथ्याऽऽप्तवाक्यवत् । तत्किं कर्ताऽस्मि हा हंत !, सुतौ हन्तास्मि वा कथम् ? ॥२१॥ विषवृक्षोऽपि संवर्द्ध्य, स्वयं

वा सम्यक्त्वम्, उक्तञ्च–"अरिहं देवो गुरुणो सुसाहुणो जिणमयं मह पमाणं। इच्चाइ सुहो भावो सम्मत्तं बिंति जगगुरुणो ॥१॥" सम्यक्त्वं चार्हद्धर्मस्य मूलभूतं, यतो द्विविधत्रिविधेनेत्यादिप्रतिपत्त्या श्राद्धद्वादशव्रतीं सम्यक्त्वोत्तरगुणरूपभेदद्वययुतामाश्रित्य त्रयोदश कोटिशतानि चतुरशीतिकोट्यो द्वादश लक्षाः सप्तविंशतिःसहस्राणि द्वे शते च द्व्युत्तरे भङ्गाः स्युः, एषु च केवलं सम्यक्त्वं प्रथमो भङ्गः, सम्यक्त्वं विना च नैकस्यापि भङ्गस्य सम्भवः, अत एवोक्तम्–"मूलं दारं पइट्ठाणं, आहारो भायणं निही। दुच्छक्कस्साविं धम्मस्स, सम्मत्तं परिकित्तियं ॥ १ ॥" एतत्फलं चैवमाहुः–"अंतोमुहुत्तमित्तंपि फासिअं जेहिं हुज्ज सम्मत्तं । तेसिं अवड्ढपुग्गलपरिअट्टो चेव संसारो ॥ १ ॥ सम्मदिट्ठी जीवो गच्छइ निअमा विमाणवासीसु । जइ न विगयसम्मत्तो अहव न बद्धाउओ पुव्विं ॥ २ ॥ जं सक्कइ तं कीरइ जं च न सक्कइ तयंमि सद्दहणा । सद्दहमाणो जीवो वच्चइ अयरामरं ठाणं ॥३॥" सम्यक्त्वे जयविजयनृपकथा, सा चेयम्–अत्राभूद्भरते भूरिभूतिभिर्भरितेऽभितः । स्वःस्पर्द्धिऋद्धिभिर्विश्वानन्दि नन्दिपुरं पुरम् ॥१॥ दौःस्थ्यदौर्भाग्यदुर्भिक्षदुःखक्षयभयादयः । [ दौःस्थ्यादीनामेव यत्र, सर्वसम्पत्पदेऽभवत् ] सर्वसम्पत्पदे यत्र, दौःस्थ्यादिष्विव जज्ञिरे ॥२॥ अमात्रशात्रवत्रासी, तत्रासीद्धर्मनामभृत् । क्ष्माभृद्धर्मनयैश्वर्यसम्पदां प्रियमेलकः ॥ ३ ॥ यज्जैत्रयात्रासु चमूसमुत्थितै, रजोभरैः सप्रसरैः पुरःसरैः । विभाव्य भाव्यर्थमिवादितोऽप्यलं, मालिन्यमानीयत विद्विषां मुखे ॥ ४ ॥ मुख्याऽमुष्याऽग्रमहिषी, विदुषीभूयमीयुषी । श्रीकान्ताऽन्या च श्रीदत्ता, श्रीमती च तृतीयका ॥५॥ जज्ञे मान्यः सुमनसामाद्यायास्तनयो जयः ।

न्तारो–दुर्भिक्षारण्यादौ सर्वथा निर्वाहाभावः ६, एवंविधेऽभियोगे तथा 'नियोगे' श्रेष्ठिमन्त्रिपदादिरूपेऽधिकारे च सति शेषं प्राग्वत्, एवं दर्शनातिचारमाश्रित्येयं गाथा व्याख्याता, यद्वा सामान्येनैव व्याख्यायते–यथाऽनाभोगेन गृहाट्टादिष्वागमननिर्गमनस्थानादिना योऽतिचारः, प्रयोजने सत्यप्यसावधानतया गमनागमनादेः पञ्चेन्द्रियादिवधहेतुकत्वस्यापि सम्भवेन श्राद्धानां निषिद्धत्वात्, तथा राजाद्यभियोगे सति स्वनियमखण्डनादौ नियोगे च पापमये योऽतिचारः, शेषं तथैव, ज्ञानातिचारमाश्रित्य व्याकृतायाः पाश्चात्यगाथाया अप्येवं सामान्येन व्याख्या संभवतीति पञ्चमगाथार्थः ॥ ५ ॥ सम्प्रति सम्यक्त्वातिचारपञ्चकं प्रतिक्रामति—

संका १ कंख २ विगिंछा ३ पसंस ४ तह संथवो कुलिंगीसु ५ ।
सम्मत्तस्सइयारे पडिक्कमे देसिअं सव्वं ॥ ६ ॥

'संका कंखे'ति तत्र दर्शनमोहनीयकर्मोपशमादिसमुत्थोऽर्हदुक्तजीवादितत्त्वसम्यक्श्रद्धानरूपः शुभ आत्मपरिणामः सम्यक्त्वं, यदाहुः सिद्धपञ्चाशिकासूत्रवृत्तिसिद्धप्राभृतवृत्तिधर्मरत्नवृत्तिकर्मग्रन्थसूत्रवृत्तिदिनकृत्यवृत्तिप्रभृतिग्रन्थग्रथनकलानर्त्तकीनाट्याचार्याः पूज्यश्रीदेवेन्द्रसूरिवर्याः "जिअ १ अजिअ २ पुन्न ३ पावा ४ सव ५ संवर ६ बंध ७ मुक्ख ८ निज्जरणा ९ । जेणं सद्दहइ तयं सम्मं खइगाइबहुभेअं ॥१॥" अन्यत्रापि–"जीवाइनवपयत्थे जो जाणइ तस्स होइ सम्मत्तं । भावेण सद्दहंते अयाणमाणेवि सम्मत्तं ॥ १ ॥" तत्त्वत्रयाध्यवसायो

मिथ्यात्विचैत्यादौ गमनादि गाथा५

यत्वाच्च, उवाच च—"जं न लहइ सम्मत्तं लद्धूणवि जं न एइ संवेगं । विसयसुहेसु अ रज्जइ सो दोसो रागदोसाणं ॥ १ ॥" इत्यादि, तथा—"रागद्वेषौ यदि स्यातां, तपसा किं प्रयोजनम् ? । तावेव यदि न स्यातां, तपसा किं प्रयोजनम् ? ॥ १ ॥" शेषं 'तं निंदे' इत्यादि प्राग्वदिति चतुर्थगाथार्थः ॥ ४ ॥ अथ दर्शनातिचारं प्रतिक्रामति—

**आगमणे निग्गमणे ठाणे चंकमणे अणाभोगे । अभिओगे अ निओगे पडिक्कमे देसिअं सव्वं ॥ ५ ॥**

'आगमणे' इति आगमने मिथ्यादृष्टिरथयात्रादेः सन्दर्शनार्थं कुतूहलेन आ—समन्ताद्गमने, एवं तदर्थमेव स्वगृहादेर्निर्गमने, तथा 'स्थाने' मिथ्यादृष्टिदेवगृहादावूर्ध्वमवस्थाने, 'चङ्क्रमणे' तत्रैवेतस्ततः परिभ्रमणे उपलक्षणत्वान्निषदनशयनादौ च, यद्बद्धमिति पूर्वगाथातोऽनुवर्त्तते, निषिद्धं च श्राद्धानां कुतीर्थगमनादि, यतः—"वेसागिहेसु गमणं जहा विरुद्धं महाकुलवहूणं । जाणाहि तहा सावय ! सुसावगाणं कुतित्थेसु ॥ १ ॥" आगमनादि च क सति ?—'अनाभोगे' अनुपयोगे प्रमादवशात्सम्यक्त्वोपयोगाभावे इत्यर्थः, तदुपयोगे सति कुतीर्थगमनादौ त्वनाचार एव नातिचारः, तथा 'अभियोगे' राजाभियोगादिबलात्कारे, राजाभियोगादयश्च षट्, तत्र राजाभियोगो—राजपारवश्यं १ गणाभियोगः—स्वजनादिसमुदायवश्यता २ बलाभियोगो—राजगणव्यतिरिक्तस्य बलवतः पारतन्त्र्यं ३ देवाभियोगो—दुष्टदेववशता ४ गुरुनिग्रहो—गुरुबलात्कारः, गुरवश्च मातापितृभर्त्रादयः, यदाह—"माता पिता कलाचार्य, एतेषां ज्ञातयस्तथा । वृद्धा धर्मोपदेष्टारो, गुरुवर्गः सतां मतः ॥१॥" इति ५, वृत्तिका-

हणार्थं श्रीआर्यरक्षितप्रयुक्तमायेव, यतः—"अमाय्येव हि भावेन, माय्येव तु भवेत् कचित् । पश्येत्स्वपरयोर्यत्र, सानुबन्धं हितोदयम् ॥१॥" अप्रशस्तो लोभो धनधान्यादौ मूर्छा, यतः—"वंचइ मित्तकलत्तं नाविक्खइ पिअरमाइ सयणे अ । मारेई बंधवेवि हु पुरिसो जो होइ धणलुद्धो ॥१॥" प्रशस्तश्च ज्ञानदर्शनचारित्रविनयवैयावृत्यशिष्यसङ्ग्रहादौ नानाश्रुतार्थसंग्राहकोमास्वातिवाचकादिवत्, चतुष्कषायप्रतिभेदादि पञ्चत्रिंशगाथायां वक्ष्यते, योगेष्वप्यप्रशस्तं मन आर्त्तरौद्रध्यानयोः प्रशस्तं तु धर्मशुक्लध्यानयोर्वागप्रशस्ता चौरोऽयं जारोऽयमित्यादिपापमयी प्रशस्ता तु धर्ममयी देवगुरुगुणवर्णनादौ कायोऽप्रशस्तो विषयद्यूताद्यासेवाकृत् प्रशस्तस्तु धर्मकृत्योद्युक्तः, तथा रागेण कामरागस्नेहरागदृष्टिरागाणामन्यतरेण, तत्र कामरागः स्त्र्यादौ श्रीजम्बूजीवस्य भ्रातृदाक्षिण्यात्तव्रतस्य भवदेवस्येवार्द्धमण्डितस्ववध्वां स्नेहरागः स्वजनधनादौ बोटिकमतप्रवर्त्तकशिवभूताविव भगिन्युत्तरायाः दृष्टौशाक्यादिकुदर्शने रागो दृष्टिरागः, स च सतामपि दुष्परित्यागः, प्रभावतीदेवकृच्छ्रबोधिततापसभक्तोदायननृपस्येव, तथा चाहुः श्रीहेमाचार्याः—"कामरागस्नेहरागावीषत्करनिवारणौ । दृष्टिरागस्तु पापीयान्, दुरुच्छेदः सतामपि ॥१॥" तथा द्वेषेण—अप्रीतिरूपेण गोष्ठामाहिलादिवत्, वाशब्दौ विकल्पार्थौ, रागद्वेषावपि प्रशस्तावप्रशस्तौ च, तत्राप्रशस्तो रागः स्त्र्यादौ प्रशस्तोऽर्हदादौ श्रीगौतमादेरिव, उक्तञ्च—"अरिहंतेसु अ रागो रागो साहूसु बंभयारीसु । एस पसत्थो रागो अज्ज सरागाण साहूणं ॥ १ ॥" द्वेषोऽप्रशस्तो द्विषदादौ प्रशस्तो दुष्कर्मप्रमादादौ तत्क्षयार्थोद्यतश्रीवीरादेरिव, रागद्वेषयोश्च कषायेष्वन्तर्भावेऽपि पृथगुपादानं विशेषतोऽनर्थहेतुत्वाद्भृशं दुर्ज-

खण्डशः कृतः, द्वितीयस्त्वचपलः सुचिरं तथैव स्थितस्तावद्यावत्तौ बहु स्थित्वा श्रान्तौ गतौ, ततः स दिगवलोकं कृत्वोत्प्लुत्य सद्यो ह्रदे प्राप्तः सुखी जातः, पञ्चाङ्गगोपककूर्मवत् पञ्चेन्द्रियगोप्ता सुखी स्यादित्याद्युपनयः, तथा कषायेषु क्रोधोऽप्रशस्तकलहादौ यतः—"दूमेइ जणं तावेइ निअतणुं नेइ दुग्गइं घिद्धि। कोवो जलणो व्व जए कमणत्थं जं न पावेइ?॥ १ ॥" प्रशस्तश्च दुर्विनीतपरिजनशिक्षायां यथा श्रीकालिकसूरेः प्रमत्तशिष्याणां सुप्तानां त्यागरूपः तेतलिसुतसन्निबोधार्थपोट्टिलादेवदर्शितनृपक्रोधवद्वा, यतः—"लालिज्जंते दोसा ताडिज्जंते गुणा बहू हुंति। गयवसभतुरंगाण व तो होज्ज सुसिक्खपरिवारो ॥ १ ॥" अप्रशस्तो मानो नमनार्हेष्वपि गुर्वादिष्वनम्रता सर्वानिष्टताहेतुः, यतः—"नासेइ सुअं विणयं च दूसए हणइ धम्मकामत्थे। गयगिरिसिंगलग्गो नरो न रोएइ पिउणोवि ॥ १ ॥" प्रशस्तस्तु सत्प्रतिज्ञाया आजन्मनिर्वाहो मन्त्र्युदयननिर्यापनार्थकारितयातिवेषवण्ठादिवत्, यतः—"लज्जां गुणौघजननीं जननीमिवार्यामत्यन्तशुद्धहृदयामनुवर्त्तमानाः। तेजस्विनः सुखमसूनपि संत्यजन्ति, सत्यस्थितिव्यसनिनो न पुनः प्रतिज्ञाम् ॥ १ ॥" आपत्स्वदीनवृत्तिता च हरिश्चन्द्रादेरिव, यतः—"विपद्युच्चैः स्थेयं पदमनुविधेयं च महतां, प्रिया न्याय्या वृत्तिर्मलिनमसुभङ्गेऽप्यसुकरम्। असन्तो नाभ्यर्थ्याः सुहृदपि न याच्यः कृशधनः, सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम्?॥ १ ॥" अप्रशस्ता माया यद्द्रव्यादिकाङ्क्षया परवञ्चना वणिजामिन्द्रजालिकादीनां वा, प्रशस्ता तु व्याधानां मृगापलपने व्याधिमतां कटुकौषधादिपाने दीक्षोपस्थितस्य विघ्नकरपित्रादीनां पुरः क्षुतशो मया दृष्टोऽल्पायुष्कसूचक इत्यादिका स्वपरहितहेतुः स्वपितुः सम्यग्यत्याचारग्र-

प्रशस्तं यदर्हत्पूजायां कुसुमकुङ्कुमकर्पूरादीनां सुगन्धितेतरपरीक्षायां गुरुग्लानादीनां च पथ्यौषधादौ साधूनां च संसक्तभक्तपानजिज्ञासायामुपयुज्यते अप्रशस्तं तु सुगन्धदुर्गन्धयो रागद्वेषकृत्, जिह्वेन्द्रियं प्रशस्तं यत्पञ्चविधे स्वाध्याये देवगुरुस्तुतिपरानुशिष्ट्यादौ गुर्वादिभक्त्या भक्तपानपरीक्षादौ चोपयोगि अप्रशस्तं स्त्र्यादिचतुर्विधविकथापापशास्त्रपरतस्यादौ रक्तद्विष्टतयेष्टानिष्टाहारादौ च यद् व्याप्रियते, स्पर्शनेन्द्रियं प्रशस्तं यज्जिनस्नपनादौ गुरुग्लानादिवैयावृत्त्ये चोपयोगवत् अप्रशस्तं तु स्त्र्याद्यालिङ्गनादौ व्यापारवत्, एकैकमपि चेन्द्रियं मृगादेरिवेह प्रेत्य च महाऽनर्थहेतुः किं पुनः समुदितानि तानि, उक्तञ्च—"कुरङ्गमातङ्गपतङ्गभृंगा, मीना हताः पञ्चभिरेव पञ्च। एकः प्रमादी स कथं न हन्यात्?, यः सेवते पञ्चभिरेव पञ्च ॥१॥" मनोनिग्रहभावनायामपि—"इंदिअधुत्ताण अहो तिलतुसमित्तंपि देसु मा पसरं। अह दिन्नो तो नीओ जत्थ खणो कोडिवरिससमो ॥१॥" इन्द्रियोपरि ज्ञाताधर्मकथाङ्गसूत्रोक्तः कूर्मदृष्टान्तः, तथा च तद्गाथे—"विसएसु इंदिआइं रुंभंता रागदोसनिम्मुक्का। पावन्ति निव्वुइसुहं कुम्मुव्व मयंगदहसुक्खं ॥ १ ॥ अवरे उ अणत्थपरंपराउ पावंति पावकम्मवसा। संसारसागरगया गोमाउअगसिअकुम्मुव्व ॥ २ ॥" यथा वाणारस्यां गङ्गायां मृदङ्गतीरह्रदे गुप्तेन्द्रियागुप्तेन्द्रियौ कूर्मौ वसतः, तौ स्थलचारिकीटकाद्यामिषार्थिनौ बहिर्निर्गतौ दुष्टशृगालाभ्यां दृष्टौ भीतौ चतुष्पदीं ग्रीवां च करोटिमध्ये सङ्गोप्य निश्चेष्टौ निर्जीवाविव स्थितौ, जम्बुकाभ्यामसकृल्लोलनोत्पातनाधःपातनपादघातादिभिरपि किञ्चिद्विप्रकर्त्तुमशक्ताभ्यां किञ्चिद्दूरे गत्वा रहः स्थितम्, अगुप्तेन्द्रियश्चापलत्यादेकं पादं यावद्ग्रीवां कर्षस्ताभ्यां

'जं बद्धं'ति 'यद्बद्धं' यत्कृतमशुभं कर्म्म प्रस्तावात् ज्ञानातीचारभूतं, कैः ?–'इन्द्रियैः' श्रोत्रादिभिः पश्चभिः, कषायैः क्रोधादिभिश्चतुर्भिः उपलक्षणत्वाद् योगैश्च–मनोवाक्कायलक्षणैस्त्रिभिः, नन्विन्द्रियादिभिर्दर्शनाद्यतिचारभूतमपि कर्म बध्यते, अनिवृत्त्यन्तगुणस्थानावधि प्रतिसमयं सर्वजीवानां ससाष्टकर्मबन्धकत्वात्, तथा च भगवद्वचः–"जीवे अट्ठविहबंधए वा आउवज्जसत्तविहबंधए वा" इति, ततः किमित्यत्र ज्ञानातिचारभूतमित्येवोक्तम् ?, उच्यते, अत्र सर्वातिचारप्रतिक्रमणे प्रथमं ज्ञानातिचारस्य प्रस्तावायातत्वात् ज्ञानातिचारभूतमिति व्याख्यातं, सम्यग्ज्ञानाभावेनैव च जीवः कर्माणि बध्नाति, यतः सम्यग्ज्ञाने सत्यशुभकर्मकरणमेव न युज्यते, यदुक्तम्–"तज्ज्ञानमेव न भवति यस्मिन्नुदिते विभाति रागगणः। तमसः कुतोऽस्ति शक्तिर्दिनकरकिरणाग्रतः स्थातुम् ? ॥ १ ॥ वट्टंति वसे नो जस्स इंदियाइं कसायवग्गो अ। निच्छयओ अन्नाणी नाणासत्थे सुणंतोवि ॥ २ ॥" ज्ञानातिचारता चात्र किमेतदीयेन ज्ञानेन यदेवमिन्द्रियैर्जितः कषायैश्च, तथा–"नूणं जिणाण धम्मोवि एरिसो देवया गुरुजणोवि। कहमन्नहेरिसो सो न सालिबीआओ वल्लकणो ॥ १ ॥" इत्यादिलोकापवादेन ज्ञानाशातनाकारित्वात्, इन्द्रियादिभिश्च कीदृशैर्बद्धम् ? इत्याह–'अप्रशस्तैः' अशोभनैः, इन्द्रियकषाययोगा हि प्रशस्ता अप्रशस्ताश्च स्युः, तत्रेन्द्रियेषु श्रवणेन्द्रियं प्रशस्तं देवगुरुगुणगुर्वनुशिष्टिधर्मदेशनाश्रवणादौ शुभाध्यवसायहेतुत्वेन यदुपयुज्यते अप्रशस्तं च यदिष्टानिष्टेषु शब्देषु रागद्वेषहेतुः स्यात्, चक्षुः प्रशस्तं यद्देवगुरुसङ्घशास्त्रधर्मस्थानावलोकादिना पवित्री स्यात् यच्च कामिन्यङ्गोपाङ्गाद्यालोकने व्याप्रियते तदप्रशस्तं, घ्राणं

एव नेत्याह—'बहुविधे' निःशूकतयाऽनेकप्रकारे इत्यर्थः, 'कारावणे' अन्यपार्श्वाद्विधापने 'करणे' स्वयंविधाने चशब्दादनुमतावपि, श्रावकेण हि परिमितपरिग्रहारम्भेणैव भाव्यमन्यथाऽधिकलोभाकुलतया बहुजीववधमृषाभाषणादत्तादानादिसम्भवे सर्वव्रतातिचारभावात्, ततो बहुविधे परिग्रहे आरम्भे च करणकारणानुमतिषु यो मेऽतिचारस्तमिति पूर्वगाथोक्तमनुवर्त्तते, सर्व सूक्ष्मबादरभेदं, 'देसिअं'ति आर्षत्वादकारलोपे दैवसिकम्, एवं स्वस्वप्रतिक्रमणे रात्रिकं पाक्षिकं चातुर्मासिकं सांवत्सरिकमपि प्रतिक्रमामि—शुभभावेनापुनःकरणतया तस्मादतिचारात्प्रातिकूल्येन व्रजामि, तस्मान्निवर्त्तेऽहमित्यर्थः, परिग्रहारम्भाश्च नरकादिमहादुःखहेतवः, तदुक्तं श्रीपञ्चमाङ्गे—"कहन्नं भंते ! जीवा नेरइअत्ताए कम्मं पगरंति ?, गोअमा ! महारंभयाए महापरिग्गहयाए कुणिमाहारेणं पंचिंदियवहेण"मिति, अन्यत्रापि—"धणसंचओ अ विउलो आरंभपरिग्गहो अ विच्छिण्णो । नेइ अवस्सं मणुसं नरगं व तिरिक्खजोणिं वा ॥ १ ॥" अत्र दृष्टान्तो यथा—"सुभूमब्रह्मदत्ताद्याः, सप्तमीं पृथिवीं गताः । महापरिग्रहारम्भैर्मम्मणाद्यास्तु दुःखिनः ॥ १ ॥ महापरिग्रहारम्भपरित्यागेन निर्वृताः । अष्टौ भरतसगरशान्तिकुन्थ्वादिचक्रिणः ॥ २ ॥" इति तृतीयगाथार्थः ॥ ३ ॥ अथ विशेषेणाशेषानप्यतिचारान् प्रतिक्रमितुमिच्छुः पूर्व ज्ञानातिचारं प्रतिक्रामति—

जं बद्धमिंदिएहिं चउहिं कसाएहिं अप्पसत्थेहिं । रागेण व दोसेण व तं निंदे तं च गरिहामि ॥ ४ ॥

ङ्कित १ निष्काङ्क्षित २ अजुगुप्सा ३ अमूढदृष्टि ४ उपबृंहण ५ स्थिरीकरण ६ वात्सल्य ७ प्रभावना ८ भेदभि-
न्नेऽष्टविधे, अथवा ज्ञाने दर्शने च ज्ञानदेवगुर्वाद्याशातनाज्ञानदेवगुरुसाधारणद्रव्यविनाशोपेक्षादिना वा, तथा
'चरित्रे' पञ्चसमितिगुप्तित्रयलक्षणेऽष्टभेदेऽनुपयोगरूपः, चशब्दात्संलेखनायां पञ्चधा वक्ष्यमाण इह षड्बाह्या-
न्तरभेदाद्द्वादशविधे तपआचारे यथाशक्त्यनाराधनलक्षणे मनोवाक्कायैस्त्रिविधे वीर्याचारे स्वशक्तिगोपनरूपश्च
योऽतिचारः, एवं चतुर्विंशशतातिचारमध्ये यः सूक्ष्मः–अनाभोगादनुपलक्ष्यो बादरो व्यक्तः, वाशब्दावन्यो-
ऽन्यापेक्षार्थौ तं 'निन्दामि' 'हा दुट्ठु कय' मित्यादिपश्चात्तापेनात्मसमक्षं तं च 'गर्हे' गुरुसमक्षं । ज्ञानाद्याचारप-
ञ्चकविशेषव्याख्यादि मत्कृतश्राद्धविधिप्रकरणवृत्तेरवधार्यमिति द्वितीयगाथार्थः ॥ २ ॥ प्रायः समस्तव्रताति-
चारा अपि परिग्रहारम्भेभ्यः प्रादुर्भवन्त्यतः सामान्येन तत्प्रतिक्रमणमाह—

दुविहे परिग्गहंमी सावज्जे बहुविहे अ आरंभे । कारावणे अ करणे पडिक्कमे देसिअं सव्वं ॥ ३ ॥

'दुविहे' इति द्विविधे 'परिग्रहे' सचित्ताचित्तरूपे बाह्याभ्यन्तररूपे वा तत्र बाह्यपरिग्रहो धनधान्यादिः
आभ्यन्तरस्तु मिथ्यात्वाविरत्यादिः, तथा 'आरम्भे' कृषिवाणिज्यादिलक्षणे, न तु जिनार्चातीर्थयात्रारथयात्राऽऽ-
डम्बराद्युद्देशेन प्रभावनाहेतौ परिग्रहे, चैत्यसङ्घवात्सल्याद्युद्देशेन आरम्भे च सत्यपि न तस्य प्रतिक्रमणमित्याह–
'सावद्ये' स्वकुटुम्बाद्यर्थं सपापे इत्यर्थः, सावद्यमपि कियन्तं परिग्रहं कियन्तमारम्भं च विना गृहिणां निर्वाह

मकातिमुक्तकादयो मिथ्यादुष्कृतनिन्दादौ च मृगावतीचन्दनादयः प्राप्ततत्कालकेवला दृष्टान्ताः, यद्वा 'अइआरस्से'त्यत्र कर्मणि षष्ठी ततः श्रावकधर्मातिचारं प्रतिक्रमितुं-मिथ्यादुष्कृतनिन्दादिना विशोधयितुमिच्छामीति योगः, इच्छामीत्यनेन भावपूर्वकत्वमाह, तं विना सम्यक्क्रियाणामपि पूर्णफलाभावात्, आह च-"क्रियाशून्यस्य यो भावो, भावशून्या च या क्रिया। अनयोरन्तरं दृष्टं, भानुखद्योतयोरिव ॥ १ ॥" इति प्रथमगाथार्थः ॥ १ ॥ अथ सामान्येन सर्वव्रतातिचाराणां ज्ञानाद्यतिचाराणां च प्रतिक्रमणार्थमाह—

जो मे वयाइआरो नाणे तह दंसणे चरित्ते अ। सुहुमो व बायरो वा तं निंदे तं च गरिहामि ॥२॥

'जो मे' इत्यादि, यो 'मे' मम 'व्रतातिचारः' अणुव्रतादिमालिन्यरूपः पञ्चसप्ततिसङ्ख्यः सञ्जात इति शेषः, तत्रैकादशव्रतानां पञ्च पञ्च सप्तमव्रतस्य तु विंशतिः एवं पञ्चसप्ततिर्व्रतातिचाराः, अतिक्रमादि चातिचारे एवान्तर्भवति, तत्र व्रतभङ्गाय केनचिन्निमन्त्रणे कृतेऽप्रतिषेधादावतिक्रमः १, गमनादिव्यापारे तु व्यतिक्रमः २, क्रोधाद्वधबन्धादावतिचारः ३, जीवहिंसादौ त्वनाचारः ४, यदुक्तमाधाकर्मोद्दिश्य-"आहाकम्मामंतण पडिसुणमाणे अइक्कमो होइ । पयभेआइ वइक्कम गहिए तइएयरो गलिए ॥ १ ॥" तथा ज्ञाने-ज्ञानाचारे काल १ विनय २ बहुमान ३ उपधान ४ अनिह्नवन ५ व्यञ्जन ६ अर्थ ७ तदुभय ८ भेदादष्टप्रकारे वितथाचरणेन ज्ञाने मत्यादिपञ्चभेदे अश्रद्धानादिना, तथा दर्शने सम्यक्त्वशङ्कादीनां पञ्चानामासेवनाद्वारेण, अथवा दर्शने निःश-

खित्तोवहिमग्गणासु अविसाई। सुत्तत्थतदुभयविऊ गणवच्छो एरिसो होई ॥ ७ ॥" 'उद्धावण'त्ति गच्छका-
र्योत्पत्तौ उत्-प्राबल्येन धावना-आत्मानुग्रहबुद्ध्या तत्करणे प्रवृत्तिरित्यर्थः, शीघ्रं च तत्कार्यस्य निष्पादनं
प्रधावनं, शेषं सुगमं, अनेनापि व्याख्यानेन पञ्चपरमेष्ठिनमस्कारः कृतो भवति, एवं पूर्वार्द्धेन विघ्नव्रातोपशान्तये
कृतपञ्चनमस्कारमङ्गल उत्तरार्द्धेनाभिधेयमभिधत्ते-'इच्छामि' अभिलषामि 'प्रतिक्रमितुं' निवर्त्तितुं, कस्मात् ?-
'श्रावकधर्मातिचारात्' तत्र शृणोतीति श्रावकः, उक्तञ्च-"संपत्तदंसणाई पइदियहं जइजणा सुणेई अ।
सामायारिं परमं जो खलु तं सावगं बिंति ॥ १ ॥" "श्रद्धालुतां श्राति जिनेन्द्रशासने, धनानि पात्रेषु वपत्य-
नारतम्। कृन्तत्यपुण्यानि सुसाधुसेवनादतोऽपि तं श्रावकमाहुरुत्तमाः ॥ १ ॥" इति निरुक्ताद्वा श्रावकस्तस्य
धर्मो-ज्ञानदर्शनादिरूपस्तस्यातिचारो-मालिन्यं तस्मात्, अत्र जातावेकवचनं यथा यवः सम्पन्न इत्यादौ,
पञ्चम्यर्थे च षष्ठी, ततो ज्ञानाचार १ दर्शनाचार २ चारित्राचार ३ तपाचार ४ वीर्याचार ५ पञ्चकस्य चतुर्विंश-
त्यधिकशतसङ्ख्येभ्योऽतीचारेभ्यो निवर्त्तितुमिच्छामीत्यर्थः, प्रतिक्रमणशब्दोऽत्र निवृत्त्यर्थः, यतः-"स्वस्थाना-
द्यत्परस्थानं, प्रमादस्य वशाद्गतः। तत्रैव क्रमणं भूयः, प्रतिक्रमणमुच्यते ॥ १ ॥" तत्र जीवस्य स्वस्थानं धर्मः
परस्थानमतिचाराः "अइआरा जाणिअव्वा न समायरिअव्वा" इति वचनात्, प्रतिक्रमणमिथ्यादुष्कृतनिन्दा-
दयश्चैकार्थाः, यदाहुः-"पडिकमणं १ पडिअरणा २ पडिहरणा ३ वारणा ४ निअत्ती अ ५। निन्दा ६ गरिहा ७
सोही ८ पडिकमणं अठ्ठहा होइ ॥ १ ॥" 'पडिअरण'त्ति प्रतिचरणं-ज्ञानाद्यासेवनं प्रतिक्रमणे ईर्यापथप्रतिक्रा-

लिङ्गे सिद्धा अन्यलिङ्गसिद्धाः, एते चान्यलिङ्गे सत्यपि भावतः सम्यक्त्वचारित्रादिप्रतिपत्त्या केवलज्ञानोत्पत्तौ तत्क्षणं सिद्धत्वलाभे द्रष्टव्याः, अन्यथा स्वस्य दीर्घायुर्दर्शने तेऽपि साधुलिङ्गमेव प्रतिपद्यन्ते १२, एवं गृहिलिङ्गसिद्धा अपि मरुदेवीपुण्याढ्यनृपादयो ज्ञेयाः १३, एकस्मिन् समये एकैकजीवसिद्धावेकसिद्धाः १४, एकसमये द्व्यादीनामष्टशतान्तानां सिद्धावनेकसिद्धाः १५ इति पञ्चदश सिद्धभेदाः, तथा धर्माचार्यान्–सम्यग्धर्म्मदायकान् गुरून् नास्तिकप्रदेशिनृपस्य केशिगणेन्द्रमिव, यदुक्तं–"जो जेण सुद्धधम्मंमि ठाविओ संजएण गिहिणा वा। सो चेव तस्स जायइ धम्मगुरू धम्मदाणाओ ॥१॥" तथा 'सर्वसाधून्' आचार्योपाध्यायप्रवर्त्तकस्थविरगणावच्छेदकादिभेदभिन्नान् मुनीन्, आचार्यादीनां स्वरूपं चैवमाहुः–"सुत्तत्थविऊ लक्खणजुत्तो गच्छस्स मेढिभूओ अ। गणतत्तिविप्पमुक्को अत्थं भासे (वाए)इ आयरिओ ॥ १ ॥ एगग्गया य झाणे वुड्ढी तित्थयरअणुगिई गुरूया। आणाथिज्जं इअ गुरु कयरिणमुक्खो न वाएइ ॥ २ ॥ सम्मत्तनाणसंजमजुत्तो सुत्तत्थतदुभयविहिन्नू। आयरिअठाणजुग्गो सुत्तं वाएउवज्झाओ ॥ ३ ॥ सुत्तत्थेसु थिरत्तं रिणमुक्खो आयईअपडिबंधो। पाडिच्छामोहजओ सुत्तं वाएउवज्झाओ ॥ ४ ॥" 'आयइ'त्ति आयत्यां आचार्यपदाध्यासे अप्रतिबन्धः–अत्यन्ताभ्यस्ततया सूत्रस्यानुवर्त्तनं स्यात्, 'पाडिच्छ'त्ति प्रतीच्छकाः–सूत्रवाचनादानेऽनुगृहीताः स्युः "तवसंजमजोगेसुं जो जुग्गो तत्थ तं पवत्तेई। असहं च निअत्तेई गणतत्तिल्लो पवत्तीओ ॥ ५ ॥ थिरकरणा पुण थेरो पवत्तिवावारिएसु अत्थेसु। जो जत्थ सीअइ जई संतबलो तं थिरं कुणइ ॥ ६ ॥ उद्धावणापहावण-

'वंदित्तु सव्वे'त्यादि 'वन्दित्वा' नत्वा सर्वेभ्यो हिता इति 'सर्वाण्णो वे'ति णप्रत्यये सार्वाः—तीर्थङ्कराः श्रीऋषभादयः सिद्ध्यन्ति स्म—कृत्स्नकर्मक्षयात्कृतकृत्या भवन्ति स्मेति सिद्धाः श्रीमरुदेवीपुण्डरीकादयः सार्वाश्च सिद्धाश्च सार्वसिद्धास्तान्, तथा 'धर्माचार्यान्' श्रुतधर्मचारित्रधर्माचारसमाचरणप्रवणान् चशब्दादुपाध्यायान्—श्रुताध्यापकान्, तथा 'सर्वसाधून्' जिनस्थविरकल्पिकाद्यनेकभेदभिन्नान् मोक्षमार्गसाधकान् मुनीन्, चशब्दः समुच्चये, वन्दित्वेत्यत्र 'वदुङ् स्तुत्यभिवादनयोः' इत्यर्थद्वयाभिधायी धातुः, तत्राभिवादनं—कायेन प्रणतिः स्तुतिश्च वाचा, अनयोश्च मनःपूर्वकत्वात्त्रिधाऽपि नमस्कारः कृतो भवति, अथवैवं व्याख्या—वन्दित्वा 'सर्वसिद्धान्' तीर्थकरातीर्थकरादिपञ्चदशभेदभिन्नान्, तत्र तीर्थकरसिद्धाः—ऋषभादयः १, अतीर्थकरसिद्धाः पुण्डरीकगौतमादयः २, तीर्थे—जिनप्रवचने तदाधारत्वाच्चतुर्विधसङ्घे वा सति सिद्धास्तीर्थसिद्धाः ३, अतीर्थे—तीर्थाभावे सुविधिप्रभृतीनां तीर्थकृतां सप्तस्वन्तरेषु धर्मव्यवच्छेदेऽपि सति केचिज्जातिस्मरणादिना सिद्धा अतीर्थसिद्धा मरुदेव्यादयो वा अतीर्थसिद्धास्तदा तीर्थस्यानुत्पन्नत्वात् ४, स्वयं—आत्मना वैराग्यहेतुकं बाह्यनिमित्तमन्तरेणैव जातिस्मरणादिना बुद्धाः सन्तः सिद्धाः स्वयम्बुद्धसिद्धाः ५, वृषभादिबाह्यनिमित्तेन बुद्धाः सन्तः सिद्धाः प्रत्येकबुद्धसिद्धाः करकण्ड्वादयः ६, बुद्धैः—आचार्यादिभिर्बोधिताः सन्तः सिद्धाः बुद्धबोधितसिद्धाः ७, पुंलिङ्गसिद्धाः ८, प्रत्येकबुद्धवर्जिताः केचित् स्त्रीलिङ्गसिद्धाः ९, तीर्थकरप्रत्येकबुद्धवर्जिताः केचिन्नपुंसकलिङ्गसिद्धाः १०, 'स्वलिङ्गसिद्धाः' स्वलिङ्गे रजोहरणादिरूपे साधुलिङ्गे सिद्धाः स्वलिङ्गसिद्धाः ११, अन्यलिङ्गे चरकपरिव्राजकादि-

रजोहरणमुखवस्त्रिकादिग्रहणं, शेषयुक्तिविस्तरस्तु पूज्यश्रीकुलमण्डनसूरिश्रीगुणरत्नसूरिपादप्रणीतश्रीसिद्धान्तालापकविचारसङ्ग्रहादवगन्तव्यः, तदेवं सामायिककरणाय गृहीतरजोहरणमुखपोतिकः सुश्रावकः 'गोअमा! अपडिक्कंताए इरिआवहिआए न कप्पइ चेव किंचि चिइचंदणसज्झायज्झाणाइअं काउं' इत्यादिश्रीमहानिशीथवचनात् 'ईर्यापथप्रतिक्रमणमकृत्वा न किञ्चिदन्यत्कुर्यात् तदशुद्धतापत्ते'रिति हारिभद्रदशवैकालिकवृत्तिवचनाच्च पूर्वमीर्यापथिकीं प्रतिक्रम्य सम्यग्विधिना गुर्वादिसाक्षिकं सामायिकं निर्माय निर्मायतया षड्विधावश्यकलक्षणं प्रतिक्रमणं कुर्वाणः "काऊण वामजाणुं हिट्ठा उड्ढं च दाहिणं जाणुं। सुत्तं भणंति सम्मं" इति यतिदिनचर्यायां, 'तत्र निविष्टस्य विधिभूम्यामेकामूरुं व्यवस्थाप्य द्वितीयामुत्क्षिप्य तिष्ठे'दिति श्रीआचाराङ्गपञ्चमाध्ययनचतुर्थोद्देशकवृत्तौ च, यथोक्तविधिनोपविश्य मङ्गलार्थं प्रथमं नमस्कारं भणति, ततः समभावस्थितेनैव प्रतिक्रमितव्यमिति ज्ञापनार्थं "करेमि भंते! सामाइयं" मित्यादि, ततश्च सामान्येन दैवसिकातिचारप्रतिक्रमणाय "इच्छामि पडिक्कमिउं जो मे देवसिओ अइआरो" इत्यादि, तदनन्तरं विशेषतो दैवसिकातिचारप्रतिक्रमणार्थं प्रतिक्रमणसूत्रमस्खलितादिगुणोपेतं पठति, तस्य च सर्वातिचारविशोधकत्वेन विशिष्टश्रेयोभूतत्वादविघ्नेन परिसमाप्त्यर्थं स्वाभीष्टपञ्चपरमेष्ठिनमस्काररूपं मङ्गलमभिधेयं च सूत्रकृत् प्रथमगाथया प्राह—

वंदित्तु सव्वसिद्धे धम्मायरिए अ सव्वसाहू अ। इच्छामि पडिक्कमिउं सावगधम्माइआरस्स ॥ १ ॥

ठविज्ज सक्खं गुरुअभावे ॥ १ ॥ अक्खे वराडए वा कट्ठे पुत्थे व चित्तकम्मे वा । सब्भावमसब्भावं गुरुठवणा इत्तराऽऽवकहा ॥ २ ॥" अनयोर्व्याख्या–गुरुगुणाः षट्त्रिंशत् तैर्युक्तं गुरुं अथवाऽक्षादीन् अथवा ज्ञानादित्रयं तदुपकरणादि स्थापयेत् साक्षाद्गुर्वभावे, 'अक्षाः' प्रतीताः, 'वराटकाः' कपर्दाः 'काष्ठं' दण्डिकादि 'पुस्तं' लेप्यादिकर्म चित्रकर्म वा–गुरुमूर्त्यादिरूपं एवं सद्भावेऽसद्भावे च गुरुस्थापना 'इत्वरा' कियत्काला काष्ठादौ 'यावत्कथिका' यावद्द्रव्यभाविनी स्थापनाचार्यादौ, तदेवं गुरोरभावे सामायिककर्त्रा श्रावकेण यथोक्तविधिना स्थापनाचार्यस्थापनाऽवश्यं विधेयेति सिद्धं, सामायिकं च कुर्वाणेन रजोहरणमुखवस्त्रिकादि धर्मोपकरणं ग्राह्यं, तथैवागमे प्रोक्तत्वात्, तद्यथाऽनुयोगद्वारसूत्रे–"से किं तं लोउत्तारियं भावावस्सयं ?, २ जन्नं समणो वा समणी वा सावओ वा साविया वा तच्चित्ते तम्मणे तल्लेसे तदज्झवसाणे तदट्ठोवउत्ते तदप्पियकरणे अण्णत्थ कत्थइ मणे अकुव्वमाणे उभओ कालं आवस्सयं करेती" ति, अत्र 'तदप्पियकरणे' इति पदस्य चूर्णिर्यथा–"तस्साहणे जाणि सरीररओहरणमुहणंतगाइआणि द्व्वाणि ताणि किरिआकरणत्तणओ अप्पियाणी" ति, तस्यैव पदस्य हारिभद्री हैमी च वृत्तिर्यथा–'तदर्पितकरणः' करणानि तत्साधकतमानि देहरजोहरणमुखवस्त्रिकादीनि तस्मिन्–आवश्यके यथोचितव्यापारनियोगेनार्पितानि–नियुक्तानि येन स तथा, सम्यग्यथास्थानन्यस्तोपकरण इत्यर्थ इति, आवश्यकचूर्णौ च सामायिकाधिकारे यथा–"साहूणं सगासाओ रयहरणं निसिज्जं वा मग्गइ अह घरे तो से उवग्गहिअं रयहरणं अत्थि तस्स असति पुत्तस्स अंतेणं" इति, ततः सिद्धं श्राद्धस्य

विधेया, सर्वस्यापि धर्मानुष्ठानस्यैवमेवागमेऽभिहितत्वात्, शून्यानुष्ठानस्य च फलशून्यत्वापत्तेः, यदाहुः श्रीजिनभद्रगणिक्षमाश्रमणपादाः श्रीविशेषावश्यके–"गुरुविरहंमि य ठवणा गुरूवएसोवदंसणत्थं च । जिणविरहम्मि व जिणबिंबसेवणामन्तणं सहलं ॥१॥ रन्नो व परुक्खस्सवि जह सेवा मंतदेवयाए वा। तह चेव परुक्खस्सवि गुरुणो सेवा विणयहेऊ ॥ २ ॥" अथ यतिसामायिकप्रस्तावे भदन्तशब्दव्याख्यानं भाष्यकृता "गुरुविरह" मित्यादि साधुमाश्रित्योक्तं न श्रावकमिति कथं श्रावकस्य स्थापनाचार्यस्थापना युक्तिमती ? इति चेत्तर्हि प्रष्टव्योऽत्र भवान्–किं श्रावकः सामायिकदण्डकमुच्चारयन् भदन्तशब्दं भणति न वा ?, भणति चेत्तर्हि साधुवत्साक्षाद्गुरोरभावे सोऽपि स्थापनाचार्यं स्थापयत्येव, अन्यथा भदन्तशब्दोच्चारणस्य सामायिककरणाद्यादेशमार्गणस्य च व्यर्थत्वप्रसक्तेः, न भणतीति पक्षस्त्वसङ्गत एव, भदन्तशब्दवर्जसामायिकस्याहंतैवोच्चारणीयत्वात्, किञ्च–यान्येव स्थापनाक्षराणि साधुमुद्दिश्यागमे प्रतिपादितानि तान्येव श्राद्धमाश्रित्यापि प्रतिपत्तव्यानि, यथा श्रीआवश्यकनिर्युक्तौ–"किइकम्मकरो हवइ साहू" इति साधूद्देशेनोक्तमपि वन्दनकादि श्राद्धेनापि क्रियते, अन्यत्रापि सर्वत्र सिद्धान्ते यद्धर्मानुष्ठानादि साधूद्देशेनोक्तं तद्यथार्हं श्राद्धस्यापि सर्वं प्रतिपत्तव्यं, न हि श्राद्धमाश्रित्य क्वाप्यागमे प्रायः पृथगक्षराणि लभ्यन्ते, ततः श्राद्धस्यापि स्थापनाचार्यस्थापना आगमोक्तैवेति स्वीकर्त्तव्यं, तत्स्थापनाऽप्यागमानुसारेणाक्षादावेवोचिता न पुनर्निकटोपटङ्किपटकटकुड्यादावपि यत्र तत्र अनुचितत्वात्, उक्तञ्च चिरन्तनाचार्यैः–"गुरुगुणजुत्तं तु गुरुं ठाविज्जा अह व तत्थ अक्खाई । अहवा नाणाइतिअं

श्रेष्ठिदेवचन्द्र-लालभाई-जैनपुस्तकोद्धारे—

श्रीमद्रत्नशेखरसूरिवर्यविवृतं

# श्राद्धप्रतिक्रमणसूत्रं वन्दित्तुइत्यपराभिधानं।

अर्हं

जयति सततोदयश्रीः श्रीवीरजिनेश्वरोऽभिनवभानुः। कुवलयबोधं विदधाति गवां विलासा विभोर्यस्य ॥ १ ॥
श्रुतजलजलधीन् बहुविधलब्धीन् प्रणिदध्महे गणधरेन्द्रान्। श्रुतदेवतां च विश्रुतगुणैर्गरिष्ठान्निजगुरूंश्च ॥ २ ॥
श्रीसोमसुन्दरगुरुप्रवराः प्रथितास्तपागणप्रभवः। प्रतिगौतमतः सम्प्रति जयन्ति निष्प्रतिममहिमभृतः ॥ ३ ॥
तेषां विनेयवृषभा भाग्यभुवो भुवनसुन्दराचार्याः। व्याख्यानदीपिकाद्यैर्ग्रन्थैर्ये निजयशोऽग्रथ्नन् ॥ ४ ॥
तेषामेषोऽन्तिषदन्तिमः किमप्याद्धाति सुखबोधाम्। वृत्तिं स्वपरहितार्थं गृहिप्रतिक्रमणसूत्रस्य ॥ ५ ॥
वीथिं ग्रन्थकृतामहमिच्छन् मन्दोऽपि नोपहास्यः स्याम्। खद्योतोऽपि द्युतिमत्पङ्क्तौ प्रविशन् निवार्यः किम्? ॥६॥

इह तावत्कृतसामायिकेन प्रतिक्रमणमनुष्ठेयं, सामायिककर्त्रा च साक्षाद्गुरोरभावे स्थापनाचार्यस्थापना पूर्व

| उपयुक्तवाक्यानि | पत्राङ्काः |
|---|---|
| सहावो हि सुदुच्चओ, .... .... | ( ५५/१ १६) |
| स्मरेत् प्रभुमभीष्टं वा, न यः स सुजनः कथम् ?। | ( १७९/२ ) |
| स्वस्थानरक्षिणः पक्षिणोऽपि हि, ... | ( १३८/१ ) |
| सातिचारादप्यनुष्ठानादभ्यासतः कालेन निरतिचारमनुष्ठानं भवति । अभ्यासो हि कौशलमावहति । | ( १५०/२ ) |
| साधयते दुःसाध्यं सबलैरबलाऽपि मध्यगता । | ( ४९/२ ५ ) |
| सामन्नं सयललोयाणं, .... .... | ( ५९/२ ८५) |
| स्वामिद्रोहो महापापम् . .... .... | ( ५७/२ ४२) |
| स्थानान्तरविशेषेण, यद् भाग्यानि फलन्त्यपि । | ( १०३/२ ३३) |
| सात्त्विककष्टात्तुष्टे, सुरे किमिष्टं न शिष्टानाम् ?। | ( ५६/१ ८५) |
| स्थिरीस्यात्तादृशं वस्तु, तादृशस्य करे कथम् ?। | ( १६२/२ ) |
| सिद्धे कार्ये समं फलम्, .... .... | ( १३५/१ ) |

| उपयुक्तवाक्यानि | पत्राङ्काः |
|---|---|
| स्त्रीवशाः किं न कुर्वते ?, .... .... | ( १२/१ ) |
| स्तोकादपि स्तोकतर दद्यात्, .... .... | ( १०७/१ ४५) |
| स्वीकारः परनीव्यास्तु, पराभवपद परम् । वित्ताय यः परचित्तावर्जी धिक् तं नराधमम् ॥ १ ॥ | ( १७८/२ ) |
| सुप्पाडोसो अक्खयकोसोव सुदुल्लहो पायं । | ( ३५/२५ ) |
| सुबुद्धिविसयं जं तं, दुबुद्धी कह भन्नए ? । | ( ५७/१ ५१ ) |
| सुपात्रदानकृत्यं हि, सत्यकारः सुखश्रियाः । | ( १८५/२ ) |
| सूत्रं सूचनकृत्, .... .... | ( ६१/१ ) |
| स्पृहैव महतां विलम्बोऽर्थे, .... .... | ( ५१/१ ७२ ) |
| सकुचत्यवमे तुच्छाः, प्रसरन्ति महाशयाः । | ( १२६/१ ८५ ) |
| स्नेहग्रहिला महिलास्तदपि वदन्त्येव यत्तदपि । | ( ४०/१ २७ ) |

ह

| उपयुक्तवाक्यानि | पत्राङ्काः |
|---|---|
| हरिप्रियायाः प्रसादतः किं सुदुष्प्रापम् ? । | ( ५६/१ ५४ ) |

| उपयुक्तवाक्यानि | पत्राङ्काः |
|---|---|
| श्रेयस्कामेन न क्वापि, जातु त्याज्यः सुसन्निधिः । | ( १७१/४ ) |
| श्रीप्राप्तिवृद्धिस्थैर्यादि, धर्मादेव हि देहिनाम् । | ( १०५/२ ३२ ) |
| शाला वरं शून्या न चौरयुक्, .... | ( १४७/१ १५ ) |
| शिशुरेवार्हति पाशुक्रीडां भुक्तिश्च पितृलक्ष्म्याः । | ( १७५/२ ) |
| शिलाऽपि तप्रकाधारा न किं तरति वारिणि ?। | ( १७१/२ ) |
| शीलेन निष्कलङ्केन, किं किं वा दुर्लभं नृणाम् ? । | ( १४६/१ ८७ ) |
| शुद्धा हि बुद्धिः किल कामधेनुः, .... | ( ९०/२ ४० ) |
| श्रेयसि न सुधीश्चिरयेत्, .... .... | ( ६५/२ ३२ ) |
| **स** | |
| सच्चं किं वा न साहए?, .... .... | ( ७०/१ ५२ ) |
| सच्चंकारो गुरुत्तणो, .... .... | ( ५७/१ ४९ ) |
| सतां प्रज्ञोन्मेषः पुनरयमसीमो विजयते, | ( ९०/१ २१ ) |
| सतां तुच्छेऽप्यहो कृपा, .... .... | ( १६५/१ ) |

| उपयुक्तवाक्यानि | पत्राङ्काः |
|---|---|
| सतां हि शिष्टैरादिष्टं, वटबीजायते हृदि । | ( १७८/१ ) |
| सति वित्ते कः क्लेशप्रवेशकृत् स्ववपुषा विज्ञः ? । | ( ४५/० ९५ ) |
| सन्तो ह्यर्थितार्थकृतः, .... .... | ( ५६/१ ७० ) |
| सन्तो हि सन्तोषजुषः, .... .... | ( १४५/२ ९९ ) |
| समर्घं बहु वस्तु हि, .... .... | ( १७८/१ ) |
| सत्यपि सुकृते कर्मणि दुर्नीतिरेवान्तरे श्रियं हरति । | ( ५४/२ ४४ ) |
| सत्याधारमसत्यं सत्यं प्रत्येति सत्यमेव जनः । | ( ५२/१ ८३ ) |
| समुचितमनुचितकृत्याचरणात् प्राणप्रहाणमपि । | ( ४९/० ९२ ) |
| सयणो दुज्जणो विदेसिओ लोहहओ तहा । गहिलो विम्हिरो भीरू, सक्खी नूनं न किज्जए ॥१॥ | ( ५९/२ २७ ) |
| सर्वं सत्त्वे प्रतिष्ठितम्, .... .... | ( १५/२ ३०० ) |
| सर्वशून्यं दरिद्रता, .... .... | ( ७७/२ ४४ ) |
| सर्वं सत्ये प्रतिष्ठितम्, .... .... | ( ५२/२ ३ ) |

| उपयुक्तवाक्यानि | पत्राङ्काः |
| --- | --- |
| व्याधिविषद्रुमदुष्या, यथाकथञ्चिल्लघूच्छेद्याः । | (५७/२ ४१) |
| वित्तार्थिनां हि वित्तानि, न निर्विंदन्ति कर्हिचित् । | (९८/२) |
| विज्जा निच्छयसारा, सुहाइं संतोससाराइं । | (१२९/२ १) |
| विद्या राज्यञ्च दीयते, योग्यायैवेति हि स्थितिः । | (१४७ ...) |
| विद्याभ्यसनं न्यायः, श्रियामायुः प्रकीर्तितम् । | (५४/२ ४६) |
| विद्विषां खलु विद्विष्यः, सर्वथाऽपि कदर्थ्यते । | (१७०) |
| विना नीवी न वाणिज्यम्, .... | (१७८/२) |
| विना न वैराग्यमभयं हि, .... | (१७३/१) |
| विपदोऽभिभवन्त्यविक्रमम्, .... | (१५१/२) |
| विपक्षरक्षादक्षास्तु, त्रिजगत्यपि दुर्लभाः । | (१४५/२ ७४) |
| विशेषज्ञा हि साधवः, .... .... | (१७७/१) |
| विषस्य विषयाणाञ्च, दृश्यते महदन्तरम् । | (९७/२ ३३) |
| विषवृक्षोऽपि सवर्ध्य, स्वयं छेत्तुमसाम्प्रतम् । | (६/२ २२) |

| उपयुक्तवाक्यानि | पत्राङ्काः |
| --- | --- |
| विसमेऽन्नोऽवि तायव्वो, .... .... | (५७/२ ५५) |
| विसमं विसं हुयासो, पासो सप्पो हु परअत्थो । | (७७/१ २७) |
| विसस्स वज्जित्तु विसं, पायसो नत्थि ओसहं । | (१५२/१) |
| विहलं जो अवलंबइ आवइपडिअं च जो समुद्धरइ । | |
| सरणागयं च रक्खइ तिसु तेसु अलंकिया पुहवी ॥१॥ | (७७/२ ३२) |
| विहलुद्धरण हि मह पुण्णं, .... | (७७/२ ३१) |
| विज्ञोक्ते का विचारणा ?, .... .... | (१४३/२ १०) |
| वेश्यावश्यानां हि विडम्बना, .... | (९/२ ५) |
| वैयाघ्रं सम्प्रेपणमथ चौरं प्राहरिककर्म । | (४९/२ १४) |
| **श.** | |
| शक्त्या न भोक्तुं भूपाम्राश्चेद् द्रष्टुमपि तर्हि किम् ?। | (१६०/१) |
| शक्रोऽपि कुपितं कर्म, नैव सान्त्वयितुं पटुः । | (१४५/२ ९६) |
| शत्रोरपि परित्राणे धीरहो धीरचेतसः .... | (१४५/२ ७२) |

| उपयुक्तवाक्यानि | पत्राङ्काः |
|---|---|
| **ल.** | |
| लाति राज्याशायां भिक्षाकमालं कः ?, .... | ( ४४/० ५५ ) |
| लाभेच्छोर्मूलमपि नष्टम्, .... .... | ( ६६/१ ५८ ) |
| लोएवि वेहो कट्ठेहि, वंके वंको समे समो। | ( ६७/१ ५४ ) |
| लोकः पूजितपूजकः, .... .... | ( १४७/१ ९३ ) |
| लोकः प्रवाहपतितः, प्रायस्तत्त्वबहिर्मुखः। | ( १७८/१ ) |
| लोकः प्रकटवाक् यतः, .... .... | ( १६५/२ ) |
| लोभः सर्वविनाशी. .... .... | ( ४८/२ ८५ ) |
| लोलाऽतिलोला तु वयस्त्रयेऽपि, रसे च वाक्ये च कृतप्रसक्तिः। .... .... | ( १२५/१ ५८ ) |
| लोहसमुद्दे वुड्डंति हु तरणनिउणावि। | ( ५३/२ २९ ) |
| लोहिस्सइ लोहगिहं, दिओ कहं न बहुरयणेहि ?। | ( ७४/२ ४४ ) |

| उपयुक्तवाक्यानि | पत्राङ्काः |
|---|---|
| **व.** | |
| वज्जं पडेउ सज्जं ह्याइ आसापिसाईए। | ( ७५/२ ९ ) |
| वणिआणं वणिज्जंमि, माहणाणं मुहंमि अ। खत्तियाणं सिरी खग्गे, कारूणं सिप्पकम्मसु ॥ १ ॥ | ( ५५/२ २२ ) |
| वणिग्वराणां वाणिज्यवैदग्धी कामधुक् ध्रुवम्। | ( १७५/२ ) |
| वणिगसि सत्यं हि नित्यभीरुमनाः। .... | ( ९३/२ २५ ) |
| व्रतभङ्गोऽतिदुःखाय, प्राणा जन्मनि जन्मनि। | ( १७२/२ ) |
| ववहारे पुण सुद्धी गिहिधम्मे दुक्करा भणिआ। | ( ७८/२ ४९ ) |
| व्यतीत्य हि गुणान्सर्वान्, स्वभावो मूर्ध्नि वर्त्तते। | ( ५५/१ १७ ) |
| व्यसनं दुरपासनम्, .... .... | ( ९३/२ ४३ ) |
| वाचं कोऽत्येति दैवतीम्?, .... .... | ( १६५/२ ) |
| व्याजे स्याद् द्विगुणं वित्तम्, .... .... | ( ७१/१ ) |
| वाणिज्यनैपुणं प्रायः, साधनं हि धनार्जने। | ( १६१/१ ) |

पत्राङ्काः

मुनीन्द्रा ह्यवनीन्द्रादेर्न बिभ्यत्यभियोगतः । (१०७/२ ५५)
मूर्द्धन्या धन्यानां त एव ये घ्नन्ति जातु नहि जन्तून्। (४३/० २३)
मूल्यं हि महसा मणेः, .... .... (१०४/१ ४४)
मोहलोहमहापूरो, तारयाणवि दुत्तरो । .... (५९/२ २५)
मौनं सर्वार्थसाधकम्, .... .... (१४१/१ ३९)

**य.**

यः स्वं वेद विवेद सः, .... .... (१५/१ ८८)
यस्त्यज्यते प्राक् सुलभं पुरस्तात्, .... (१२५/० ८८)
यथाशक्ति विधीयते, .... .... (१६५/२)
यथा तथा कथं तादृक्, वस्तु विज्ञः प्रकाशयेत् ? । (१८३/२)
यद्यथा चिन्त्यतेऽन्यस्मै, तत्तथा स्वयमाप्यते । (१८३/२)
यस्मिन् रुष्टे भयं नास्ति, तुष्टे नास्ति धनागमः ।
निग्रहानुग्रहौ न स्तः, स जातः किं करिष्यति ? ॥१॥ (५६/१ ९७)



पत्राङ्काः

यान्ति विलयं मनोरथा भाग्यहीनानाम् । (१०५/१ ८१)
यो ननु धनस्य दाता, स एव संरक्षिताऽपि खलु । (१६६/२)
योऽपि सोऽप्यधिपः पूज्यः, .... (१०/२ ४२)
यो वा यतः स्याद्विवशः स तेन, विडम्ब्यतेऽत्रापि न
सशयोऽत्र । .... .... (१२४/२ ४३)
यो येन नीतः परमां समृद्धिमाराधनीयो ह्यमुना स
एव । .... .... .... (१३१/१ १५)
यौवनं जरया ग्रस्तं, शरीरं व्याधिपीडितम् । मृत्युरा-
काङ्क्षति प्राणांस्तृष्णैका निरुपद्रवा ॥ १ ॥ (७५/२ १०)

**र.**

रन्नो आणा अलंघणिज्जा, .... .... (७६/१ ९६)
राजार्पितं प्रजानां हि, प्रमाणं दिव्यवस्त्वपि । (१८५/२)
राज्य प्राज्यधनाढ्यं विद्युद्विद्योतमिव विन्द्याः । (६०/१ ५०१)

| उपयुक्तवाक्यानि | पत्राङ्काः |
| --- | --- |
| पावो पावं न किं कुज्जा ?, .... .... | (२१/१ ५६) |
| प्राज्ञो मान्यो न कस्य वा ?, .... .... | (१२२/२ ११) |
| प्रीयते द्वेष्टि चेष्टस्य, साधके बाधके न कः ? । | (१५१/२) |
| पुण्यैरसम्भाव्यमिहास्ति किं वा ?, .... | (१२५/१ ८९) |
| पुत्रशोकात् को वा न दूयते ?, .... | (१३५/२) |
| पुत्तो हि पिउणो तुल्लो, .... .... | (६२/२ ५) |
| पुत्तं महत्तं पावतु पिआ, .... .... | (५७/१ ५८) |
| पुन्नस्स सव्वहावि जओ पावस्स खओ । | (८१/२ ६१) |
| पुरतः सम्पत्प्राप्तौ विपदः प्राप्तौ पुनर्भवेत् पश्चात् । | (५७/१ २७) |
| पुव्वभवब्भासाओ लब्भइ असुअं अदिट्ठंपि । | (९३/१ १७) |
| पूरणैरेव खन्यते, .... .... .... | (७३/१ ७) |
| पृथिव्यां प्रवरं हि दानम्, .... .... | (३५२/२) |
| प्रेमस्थाने हि किं गोप्यम् ?, .... .... | (५१/१ ४५) |

| उपयुक्तवाक्यानि | पत्राङ्काः |
| --- | --- |
| पोपकाः स्वकुलस्यैते, काककायस्थकुर्कुटाः । स्वकुलं घ्नन्ति चत्वारो, वणिक् श्वानो गजा द्विजाः ॥१॥ | (८०/१ १२) |
| **फ.** | |
| फलेऽनुभूतेऽद्भुतमत्र वा किमु ?, .... | (१३१/१ १३) |
| **ब.** | |
| बहूपरोधेन विशिष्टवस्तुमहे महान्तोऽपि हि सानुबन्धाः । | (१३०/२ ३) |
| बालः पयसा दग्धो दध्यपि फूत्कृत्य खलु पिबति । | (११०/१ १) |
| बुद्धिर्ज्ञानेन शुध्यति, .... .... | (३१/१ २) |
| बुभ्वां क्षमन्ते क्षत्रियाः कथम् ? । .... | (१८३/१) |
| **भ.** | |
| भक्खंति किसिवला पुव्विं, .... .... | (८१/२ ८) |
| भर्तृफलं भृत्यकृत्यं यत्, .... .... | (५६/२ ३०) |
| भवेद् भाग्यवतामेव, दिव्यवस्त्वप्यभीष्टकृत् । | (१३/२) |

| उपक्तवाक्यानि | पत्राङ्काः |
|---|---|
| नेतुरेवाखिलं फलम् । .... .... | (५६/२ ४) |
| **प.** | |
| पच्चक्खेवि अ दिट्ठे जुत्ताजुत्तं वियारिज्जा । | (८१/२ ५३) |
| पयसश्चिन्तनमोतोः, .... .... | (४९/२ १५) |
| परवित्तगहणमणओ, अणओ अदविणदविणखयजणओ । को वा दुन्नयकारी सुपुरिससद्दं समीहेत ? ॥१॥ | (१६०/२) |
| परकीयैव पुत्रिका, .... .... | (१३७/१ १९) |
| परवृद्धिषु बद्धमत्सराणां, किमिव ह्यस्ति दुरात्मनामलङ्घ्यम् ? । .... .... | (८०/१ १४) |
| परस्य चिन्त्यते यादृक्, तादृक् स्वयमवाप्यते। | (१५०/२) |
| परहितपरता हि सत्प्रकृतिः, .... .... | (४८/१ ७२) |
| प्रतिपन्नविधौ विधुरेऽप्यधीरतां यान्ति नहि धीराः । | (४३/१ २४) |
| प्रमादो नरकायनम्, .... .... | (१३९/१ १२) |

| उपयुक्तवाक्यानि | पत्राङ्काः |
|---|---|
| प्रसरीसरीति दुर्गन्धवहुग्रं ह्यार्द्रमपि पापम्। | (५३/२ २७) |
| प्रक्षीयते तद् दुरितं न यावत्तावद् व्यथाऽपैति कथं तदुत्था ?। .... .... .... | (१२५/१ ५५) |
| पतिते घातं क्षते लवणपातम् । .... | (९६/१ ३०) |
| प्राक्पुण्ययोगात् किमु दुर्लभं वा ?, .... | (१२६/१ ९५) |
| प्राक्पुण्यलभ्यप्रागल्भ्यसम्भवे किं भवेन्न वा ?। | (१८ ७४) |
| प्राच्याः प्राणाः प्रतिष्ठायाः, पुंसः सत्यैव गीर्ध्रुवम् । | (६५/१ ९३) |
| प्राणान्तेऽपि प्रतिपन्नमन्यथा कथमिवास्तु सताम् ? । | (६५/२ २५) |
| प्रार्थनाव्यर्थनायां हि, सतां न कौशलं किल । | (१३/२ ३८) |
| प्रार्थितसमर्थनं खलु मूलप्राणाः सुगुणतायाः । | (४९/३ ९३) |
| पापः पापेन पच्यताम्, .... .... | (१४/२ ६२) |
| प्राप्तमपूर्वं सर्वं प्रेमपदे किल निवेद्यमेकपदे । | (९१/१ ७७) |
| प्राप्ते विलम्बोऽर्हति नैव दातुः, .... | (१३०/२ ४) |

| उपयुक्तवाक्यानि | पत्राङ्काः |
| --- | --- |
| नमोऽर्थेभ्यः पृथक्त्वं ये, भ्रातृणामपि कुर्वते । | ( १७०/१ ) |
| नय एव सर्वसम्पन्मूलमलङ्कारश्च नृणाम् । | ( ५४/२ ४५ ) |
| नयनिरओवि नरेसो कि कुज्जा दुज्जणा जहि पहाणा[2] । | ( ८१/२ ५५ ) |
| न यतो भाति विना काञ्चनं रत्नम्, .... | ( ५०/१ २८ ) |
| नयअज्जिअदविणाणं दाणं अप्पंपि होइ सयमाणं । | ( ११/२ ९४ ) |
| नयेन चालङ्क्रियते नरेन्द्रता, .... .... | ( ५७/२ ४७ ) |
| न विमृश्यमतिप्रेम्णि, .... .... | ( १७८/२ ) |
| नव्यानुरक्तकृत्य कष्टमपीष्टं भवेदमृततोऽपि । | ( ४४ ८६ ) |
| न स्वय ख्यापितगुणो, गुणवानिति कथ्यते । | ( १६९/१ ० ) |
| न हि सुतरत्नानि सुलभानि । .... .... | ( १६६/१ ) |
| न हि महिला य विसुद्धसीला य । .... | ( ९२/१ ८२ ) |
| नाकण्ठपूर्णं हि झलज्झलायते, .... .... | ( ११३/१ १० ) |
| नाणं पच्चयसार, .... .... .... | ( १५९/२ ) |

| उपयुक्तवाक्यानि | पत्राङ्काः |
| --- | --- |
| नादत्तं लभ्यते क्वापि, .... .... | ( १३७/२ ) |
| नान्यथा स्याद् विधिकृतम्, .... .... | ( १५/१ ७६ ) |
| नान्यथा भाषितं सताम्, .... .... | ( १३/१ १७ ) |
| न्यायात् पथः प्रविचलन्ति पदं न धीराः .... | ( ६९/२ ३८ ) |
| न्याय्ये पथि पथिकानां, यद्वा सममेव विषममपि । | ( ४५/२ ३० ) |
| निघममघा नरवइपासेहि बुहुव्व रविपासे । | ( ९२/१ ७८ ) |
| निजार्थनाशी हि मूढतमः, .... .... | ( ४६/२ २४ ) |
| नित्यं जीवन्मरणात् श्रेयस्करणं सकृन्मरणम् । | ( ४४ ७४ ) |
| निर्भाग्यस्य कथं सिध्येत् कोटीश्वरमनोरथाः ? । | ( २०५ ८० ) |
| निवइअभावे कज्जं कुणंति अहिगारिणो चेव । | ( १५४/२ ) |
| निश्चा(धा)ने नहि नात्रकम्, .... .... | ( १६/१ १९ ) |
| निष्ठेयं खलु महता परकृत्यकृते स्वकृत्यहतिः । | ( ५२/१ १८ ) |
| निस्सूगाणं नराण हि, वितरा अपि किंकरा । | ( ६५/२ ४ ) |

| उपयुक्तवाक्यानि | पत्राङ्काः |
|---|---|
| धर्मकर्मसमारम्भसंकल्पोऽपि न निष्फलः । .... | (१२५/२) |
| धर्माद्धनं धनत एव समस्तकामाः,.... .... | (१७७) |
| धम्माओ जायए धम्मो, .... .... | (९९/१ ७९) |
| धर्मिष्टगेहे ह्यपधर्मणोऽपि, धर्मिष्टता स्यादतिशायिनी। | (१२३/२ २९) |
| धिक्कामान्धान् स्वगोप्यभिदः, .... .... | (५०/२ ३३) |
| धिक् पराधीनतादग्धान्, .... .... | (१०७/२ ५१) |
| धिक् सेवकत्रुवं तं यः प्रभुकृत्ये बिभेति वत मृतितः। | (५१/२ ६८) |
| धिगस्तु जिह्वामजितां भुजंगीम्, .... .... | (१२५/१ ५७) |
| धिगहो चरितं स्त्रियः, .... .... | (१४५/१ ५५) |
| धिग् विश्वासमनर्थदम्, .... .... | (१३/१ २२) |
| धिग् दैवं रत्नदूषकम्, .... .... | (१४/२ ७२) |
| धिद्धी कामिणं कामिणिसुहाणं, .... | (९४/२ ५१) |
| धिद्धी असइचरिआइं, .... .... | (१५४/१) |

| उपयुक्तवाक्यानि | पत्राङ्काः |
|---|---|
| धिया पुमर्थं समर्थयति, .... .... | (५७/१ २७) |
| धुत्तो घट्ठोत्ति नचामि, .... .... | (७५ ६७) |
| ध्रुवं दोषः प्रकम्पते, .... .... | (१४/२ ६१) |
| धूर्तो धृष्टो हि मौनभाक्, .... .... | (१४३/२ ४) |
| धैर्यमेव परित्राणं, न युक्तमनुशोचनम् । .... | (१३१/१ ७४) |

**न.**

| उपयुक्तवाक्यानि | पत्राङ्काः |
|---|---|
| न कस्यापि प्रकाश्यं स्याद्, गुह्यं स्त्रीणां विशेषतः । | (१२/१ ९१) |
| न च विज्ञानस्य सम्भवत्यवधिः, .... | (८९/१ ९९) |
| न च शकुनानां वचनं कचिन्मृषा स्याद् विशिष्य च शिवायाः। .... .... .... | (८७/१ ४१) |
| न दुःखं पञ्चभिः सह, .... .... | (१४३/२ ५) |
| न नीरं न तीरं द्वयमपि विनष्टं विधिवशात्, | (४४ ७०) |
| नन्नहा संतभासिअं, .... .... | (६५/१ ८४) |

| उपयुक्तवाक्यानि | पत्राङ्कः |
| --- | --- |
| दिव्यवस्तूनां स्वेच्छया हि गतिस्थिती । .... | (१६४/१) |
| दिव्यनरे वदति यतः कुतस्तमां स्याद् विसंवादः ?। | (५६/२ ८) |
| दुर्जनदूषितमनसां पुंसां स्वजनेऽपि नास्ति विश्वासः। | (११७/१ १) |
| दुट्ठस्स दुट्ठमित्तो उ विसिट्ठस्स विसिट्ठओ । .... | (१६१/२) |
| दुःसम्भवा हि मनसा, विशुद्धिः शीलशीलने । | (१४६/३ १८) |
| दुष्टाः कष्टफलं स्पष्टं, दृष्टं विना न मन्वते । | (१४५/२ ७१) |
| दुष्टशिक्षा शिष्टरक्षा, रीतिर्नीतिविदां खलु । | (१८३/१) |
| दुष्टोऽपि स किं कुर्यात्? यत्र सुमन्त्री सुमन्त्रपरः । | (५७/२ ४०) |
| दुष्टा अपि किं कुर्युश्छलं विना निष्फलारम्भाः । | (५२/१ ८५) |
| दुष्टः सुतोऽपि निर्वास्यः, .... .... | (१५२/१) |
| दुष्टाशयश्च जीवन्नहिवन्न हि जातु मुञ्चति प्रकृतिम् । | (५५/२ ७४) |
| दुर्लभत्वं च यन्नार्याः, कामिनः सा परा रतिः । | (१३/१ १०) |
| दुहजलहिनिवडियाणं धुवं पवहणं सुवयणंपि । | (८१/२ ५२) |

| उपयुक्तवाक्यानि | पत्राङ्कः |
| --- | --- |
| द्रुह्यन्ति मुधा मूढा मिथः फलं स्वस्य कर्मवशमिह यत्। | (५१/१ ५१) |
| द्यूतादिव्यसनवशाच्चौर्यं चौर्याच्च जीवनाशोऽपि । | |
| दृढायुषि मृतिः कुतः ?, .... .... | (१०२/२ ४२) |
| दृष्टफलेऽलसः कः ?। .... .... | (१२५/१ ७१) |
| दैवेऽनुकूले किं न सिध्यति ? .... .... | (१८३/१) |
| दोहेसु मित्तदोहो ठवणीमोसो असेसमोसेसु । कूडेसु सक्खिकूडं कवडेसुं णिस्ससियकवडं ॥१॥ | (७७/१ २८) |

**ध.**

| | |
| --- | --- |
| धनधर्मौ हि कश्चिरयेत्?, .... .... | (१५७/१) |
| धनानामर्जनेनैव, प्रतिष्ठां प्राप्नुयात् पुमान् । .... | (१७८/१) |
| धन्यास्तु धर्मे रताः। .... .... .... | (५१/३ ७७) |
| धर्मो धनाद्यैर्व्यभिचारवन्ध्यो, बीजं फलस्येव हि मुख्यहेतुः। | (१७७/१) |
| धर्मविघ्नेन श्रेयसामपि विघ्नभावात् । .... | (१७१/१) |

| उपयुक्तवाक्यानि | पत्राङ्काः |
|---|---|
| **च.** | |
| चरइ पुरे धुत्तो इव ठिई हि एसा नरेसाणं । | ( १५८/२ ) |
| चित्तोत्साहो हि नृणां, निवन्धनं साध्यसंसिद्धेः । | ( ४६/१ १४ ) |
| चित्तं वित्तं पत्त तिन्निवि केसिचि धन्नाणं । | ( १६६/२ ) |
| **छ.** | |
| छुहिओ पावं न कि कुणई ? .... | ( ११/२ १ ) |
| छेकाना छेकता सैव, यत् कार्य समयोचितम् । | ( १४४/१ २१ ) |
| छेदे हि नागवल्या दूरेऽपि दलानि शुष्यन्ति । | ( ५९/१ ८२ ) |
| **ज.** | |
| जघन्यतो दशगुणमृणं घातादि वा पुरः । | |
| जनकार्जिता विभूतिर्भगिनीः .... .... | ( ७११/१ ) |
| जणवाए पुण जाए मरेइ नउ मन्नएवि तयं | ( ७४/१ ३१ ) |
| जमिकसि चेव दक्खिन्नं .... .... | ( १५२/१ ) |

| उपयुक्तवाक्यानि | पत्राङ्काः |
|---|---|
| जयणा य धम्मजणणी,.... .... .... | ( १३५/१ ) |
| जहिं बहुमाणो पुवि तं सुलहं होइ बीइ भवे । | ( १५६/१ ) |
| जीवन् भद्राण्यवाप्नोति, जीवन् पुण्यं करोति च । | ( ४७/१ ३६ ) |
| जीवितं सर्वधर्माणां, भावना भवनाशकृत् । | ( १७७/२ ) |
| जुज्जइ दुट्ठाण जं सिक्खा, .... .... | ( ९०/१ १६ ) |
| जैनधर्मस्तु दुर्लभः, .... .... | ( ११३/१ ) |
| जं कूडकवडं सव्वं, पयडं नरय इमं । .... | ( ६६/१ १५ ) |
| जं चिंतिअ परंमि अ घरंमि त आगयं इहयं । | ( ९०/२ २४ ) |
| ज धम्मकम्मजोगो थोवतरो साइसलिलं व । | ( १५५/२ ) |
| जं धम्मनिअमभंसे भवइ अणंतं खु भवदुक्खं । | ( १५६/१ ) |
| **झ.** | |
| झायइ दइवं किंचिमवि अन्नं. .... .... | ( १३/२ १६ ) |

| उपयुक्तवाक्यानि | पत्राङ्काः |
| --- | --- |
| केलिर्विधेया सह बालयाऽपि, .... .... | ( १२७/१ ९ ) |
| को वा न माणणिज्जो विसमं कज्जं पवज्जंतो¹। | ( १५२/१ ) |
| को वा न दुःखी दुःखे महात्मनाम्² .... | ( १३९/२ ८६ ) |
| को वेद दैवगतिम्? .... .... .. | ( ४८/१ ७० ) |
| कौतुकी किल नालसः, .... .... | ( १२/१ ) |
| **ख.** | |
| खचरेन्द्रा इन्द्रा इव नायान्ति यथा तथा कचन। | ( ४१/१ २०२ ) |
| खातपूरितनीतितः .... .... .... | ( २०२/१ १७ ) |
| खण्डितः खण्डितं पुनः। .... .... | ( १४०/१९ ) |
| **ग.** | |
| गतशोची स्वश्लाघी, स्वार्थभ्रशी च यन्मूर्खः | ( ४५/० ७८ ) |
| गहिलो धूलिं हेलिइ, पक्खिवइ भरेइ पुण अप्पं। | ( ९८/२ ६३ ) |
| गुणिनः समीपवर्त्ती पूज्यो लोके गुणविहीनोऽपि। | ( १७७/१ ) |

| उपयुक्तवाक्यानि | पत्राङ्काः |
| --- | --- |
| गुणेष्वेवादरः कार्यः, किमाटोपैः प्रयोजनम्²। विक्रीयन्ते न घण्टाभिर्गावः क्षीरविवर्जिताः ॥ १ ॥ | ( ६२/२ ११ ) |
| गुणैर्विना कः खलु मान्यते ज्ञैः?, .... | ( १२४/१ ३१ ) |
| गुणैरेव महत्त्वं स्यान्नाङ्गेन वयसाऽपि वा। .... | ( ९०/२ ४२ ) |
| गुणोवि दोसाय कम्मवसा .... .... | ( ६९/१ ९२ ) |
| गुरौ सत्येव निश्चिन्ताः शिष्या भृत्याः सुताः स्नुषाः। | ( १०२/२ ३ ) |
| गृहवासः कारावासः, .... .... | ( १७९/१ ) |
| गृह्णन्ति निर्वहन्ति च ते केचित् पश्चपाः पुरुषाः। | ( ४३/० २८ ) |
| गृहिणोऽपि स्पृहारोधे, धनं लेष्टुर्मुनेरिव.... | ( १२५/२ ३३ ) |
| गृहेशानुसारिणी हि गृहव्यवस्था. .... | ( ११७/१ ) |
| गौरवाय गुणा एव, न तु ज्ञातेयडम्बरः। | ( १२४/१ ३२ ) |
| **घ.** | |
| घृणा का ( चिन्त्या ) स्वकघातके? .... | ( ९/२ १६ ) |

| उपयुक्तवाक्यानि | पत्राङ्काः |
|---|---|
| कामिजनकामधेनौ यामिन्यां .... .... | (५०/१ २२) |
| कार्यं कार्य साक्षात् समीक्ष्य सुपरीक्ष्य तद्दक्षैः। | (५७/२ ३५) |
| काले दिण्णस्स पहेणयस्स अग्घो न तीरए काउं | (१४९/२ ५९) |
| का वा सिद्धी न बुद्धीए? .... .... | (७५/२ ७) |
| कालविक्षेपोऽप्यशुभे शुभसम्पदे। | (१४२/२) |
| कार्यार्थिना हि खलु कारणमेषणीयम्। .... | (१७७/२) |
| किं अभक्खं पणंगणासंगयाणं वा? .... | (१५१/२) |
| किं केशरी बालमृगीं जिगीषुः? .... | (१२७/१ ७) |
| किं नेह कज्जं सिज्झेइ दव्वओ? .... | (६५/२ ६) |
| किं न दिव्यौषधीबलात्? .... .... | (१३/१ १५) |
| किमसज्झं दिव्वसत्तीए? .... .... | (१५७/१) |
| किमशुचिसङ्गं कुरुते न केतकी सौरभसमृद्ध्यै?। | (५०/१ २७) |

| उपयुक्तवाक्यानि | पत्राङ्काः |
|---|---|
| किमनूह्यं समर्थानां? किमगम्यं महाधियाम्?। किमपथ्यं दृढाग्नीनां, किमसाध्यं महौजसाम्? ॥ १ ॥ | (१६४/२) |
| किमिव दवीयोऽथवोद्यमिनाम्? .... .... | (४७/१ ४) |
| कि व न कज्जविऊणं संपज्जइ उचिअकज्जाओ? | (१५२/१) |
| किं वा न दाणाओ? .... .... .... | (१५२/२) |
| किं वा पुन्नेहि दुस्सज्झं? .... .... | (१५६/१) |
| किवागफलंपि व पावं पढममेव अइमहुरं। .... | (१५४/२) |
| कि वा कवडाणमगोअरो? .... .... | (६४/१ ४९) |
| किं वा पच्छा सुबुद्धीए? .... .... | (८७/२ ५५) |
| कि वा किच्चमकिच्चं पच्चक्खमसच्चवाईणं? .... | (८८/२ ८१) |
| कुतो वा दुर्नयेऽभीष्टम्? .... .... | (१३/२ २९) |
| कूटसाक्षी सुहृद्द्रोही, कृतघ्नो दीर्घरोषणः। चत्वारः कर्मचाण्डालाः, पञ्चमो जातिसम्भवः॥ १ ॥ | (६१/१) |

| उपयुक्तवाक्यानि | पत्राङ्काः |
|---|---|
| इष्टस्य हि शुभा शुद्धिः .... .... | (१६०/२) |
| **उ.** | |
| उचिअं कह लंघए ? .... .... | (६६/२ ३३) |
| उचिअवयणं हि चितारयणं व न किं च विअरेइ ? | (१५८/२) |
| उच्छिष्टान्नं च रुक्षञ्च, कः सुधीर्भोक्तुमिच्छति ? । | (११९/१) |
| उच्छिज्जंति न केणावि, कमलस्सवि कंटया । | (७०/१ ४९) |
| उच्छृंखलाः खला इव विद्यायतिशायिशक्तयः प्रायः. | (११२/१) |
| उत्कृष्टकन्या ह्युत्कृष्टवरस्यैवोचिता मता । | (१८/१ ७१) |
| उदयत्येव सुराद्रेरस्तं गत्वाऽपि दिननाथः | (१४/२ १७) |
| उदयश्रीरपि भास्वति भास्वति सति भजति न मृगाङ्कम् । | (५०/१ ३०) |
| उद्धारयनिक्खेवयसाराणि जओ वणिज्जाणि । | (८१/२ ४९) |
| उपकृतिरेव खलानां, दोषस्य महीयसो भवति हेतुः | (५३/२ १७) |
| उविच्च वयभंगंमि पायच्छित्तं तु किं भवे ? । | (५८/१ ९२) |

| उपयुक्तवाक्यानि | पत्राङ्काः |
|---|---|
| **ए.** | |
| एकैव गतिर्महतां स्वीकृतकरणं हि मरणं वा । | (४७/२ ५०) |
| एगंतसुहावहा जयणा. .... .... .... | (११५/२) |
| **क.** | |
| कढिओ खलु निवरसो अइकडुओ चेव जाएइ | (१५१/२) |
| क्रयविक्रये च लुण्टति तथापि लोके वणिक् साधुः । | (७४/१ ३४) |
| करचलुअपाणिएणवि अवसरदिन्नेण मुच्छिअं जिअइ । | (१२३/१२ १) |
| कलंकसंकावि हा दुसहा .... .... | (९८/१ ६६) |
| कल्पवृक्षाणां स्थानं किं नन्दनाद्विना ? .... | (१६५/१) |
| कह दुद्धे पूअरया ? कह पीऊसे विसलवा य ? | (१८/१ ५७) |
| कामान्धा वञ्चनार्हा यत्, .... .... | (४९/२ १५) |
| कामाग्निकृत्त्रियामा श्यामा प्रच्छन्नकर्मकृताम् । | (४३/० ४१) |
| कामिनां सुखवध्यता,.... .... .... | (१४३/२ ७) |

# श्राद्धप्रतिक्रमणान्तर्गतोपयुक्तवाक्यानि ॥

| उपयुक्तवाक्यानि | पत्राङ्काः |
|---|---|
| **अ.** | |
| अगणिज्जा जाईओ जए मणीणं दुमाणं व. .... | (१५९/१) |
| अज्जा हि बहुसज्जा. .... .... .... | (९०/२) |
| अणवट्ठिअचित्ताणं कह सुट्ठाणेवि बहुअठिई. .... | (९८/२ ८४) |
| अणुभूयफलं को वा न परहिअत्थी विसेसेइ? | (१८७/१) |
| अतिपातेष्वपि फलदं फलदेष्वपि धर्मसंयुक्तम् ॥ | (१५१/१) |
| अतुच्छतां स्वच्छताश्चाख्यान्ति सल्लक्षणान्यपि.... | (१४४/१ १८) |
| अत्युग्रपुण्यपापानामिहैव फलमाप्यते ॥ .... | (१४०/१ ७) |
| अत्यौत्सुक्यं श्रेयः प्राप्तमपि त्रासयत्यचिरात्. .... | (५०/२ ३६) |
| अनन्यसाध्यं हि नः साध्यम्. .... .... | (५३/१ १२) |
| अनुन्नऽणत्थकरणे किमन्तरं दुट्ठसिट्ठाणं ॥ .... | (८०/१ १७) |
| अन्यद् ध्यातं जातं तु धिगिहान्यत् । .... | (५१/१ ५७) |
| अन्यकृते कष्टकृतां विपदपि संपद्यते सम्पत् ॥ | (५४/१ ३१) |
| अनिषिद्धमनुमतं स्यात्. .... .... | (५०/१ २१) |
| अनुचितचिन्तनमपि हा दवदहनः स्नेहवनदहने । | (४८/२ ८८) |
| अपरिच्छिअकज्जस्स उ पडिकज्जं चेव पडियारो। | (८९/१ ४) |
| अप्रियस्य च पथ्यस्य, वक्ता श्रोता च दुर्लभः । | (४६/१ ९) |
| अपत्यमुन्मार्गगतं पितॄणां दोषाय गोपस्य यथेह गावः। | (१२/२ २७) |
| अपरिक्खिअ कयकज्जं सिद्धंपि न सज्जणा पसंसंति। | (१५७/१) |
| अप्पहिअं कायव्वं. .... .... .... | (१३७/१) |

## लौकिकन्यायाः

| | श्लोकः | पत्राङ्काः |
|---|---|---|
| खद्योतोऽपि द्युतिमत्पङ्क्तौ प्रविशन् निवार्यः किम् ? ॥ | ६ | १ |
| स्वोत्तरीयानुसारेण ननु पादप्रसारणम् । | ८२ | १५/१ |
| मनसा हि मानितं यत्तदेव विश्वे प्रशस्यम् । | १० | |
| निजार्थनाशी हि मूढतमः । | २४ | ४६/१ |
| भव्यं बहुजीवनतो हि बहु दृष्टम् । | १८ | ५६/१ |
| लोएवि वेहो कट्ठेहिं, वंके वंको समे समो । | ५३ | ६७/१ |
| न सन्त्यनपत्यस्य लोकाः, श्वानो यक्षाः, विप्रा देवाः, काका: पितामहाः, बर्हिणां पक्षवातेन गर्भः ॥ | ० | ११३/१ |
| पतिते घातं क्षते लवणपातम् ॥ | ३ | ९५/१ |

## उपयुक्तानि पद्यानि

| उपयुक्तानि पद्यानि | पत्राङ्काः |
|---|---|
| यन्नेष्यते मनुष्यैस्तत्प्रायः प्राप्यते प्रचुरमचिरात् । यत्त्विष्यते तदीपन्न कचिदपि वैपरीत्यमहो ॥ १ ॥ | ११०–५१ |
| क्षेत्रं रक्षति चञ्चा सौधं लोलत्पटी कणान् रक्षा । दन्तात्तृणं प्राणान्नरेण किं निरुपकारेण [?] ॥ १ ॥ | ११३ |
| समर्थोऽप्यसमर्थोऽसौ, विविक्तोऽप्यविविक्तहृत् । स्वशक्त्या दुःस्थधर्मिष्ठोद्धारमारचयेन्न यः ॥ १ ॥ | ११३ |
| उद्यमे नास्ति दारिद्र्यं, जपतो नास्ति पातकम् । मौनेन कलहो नास्ति, नास्ति जागरतो भयम् । | ( १३८ ४४ ) |
| प्रवीणता वणिज्यासु, त्यक्तक्रम उपक्रमः । न निर्वेदश्च कुत्रापि, त्रयः प्रतिभुवः श्रियः ॥ १ ॥ | १७५ |
| लक्ष्मीर्वसति वाणिज्ये, किंचिदस्ति च कर्षणे । अस्ति नास्ति च सेवायां, भिक्षायां न कदाचन ॥ १ ॥ | १७५ |
| परानुगामी परवक्त्रदर्शी, परान्नभोजी परचित्तरञ्जी । परप्रवादी परवित्तजीवी, सर्वेऽप्यमी स्युर्गुणिनोऽपि निन्द्याः ॥१॥ | १७८ |
| अनर्जित्वा श्रियः स्वेष्टाः, अकृत्वा पात्रसाच्च ताः । अहृत्वा चान्यदैन्यानि, कथं च स्यां गुणाकरः ? ॥ १ ॥ | १७८ |
| परगुणगहणं छंदाणुवत्तणं हिअमकक्कस वयणं । निच्चमदोसग्गहणं अमूलमंतं वसीकरणं ॥ १ ॥ | १८४ |



## उपयुक्तानि पद्यानि

विदधति तथापराधं, जन्मैव यथा वृथा भवति ॥

कतिपयदिवसस्थायिनि मदकारिणि यौवने दुरात्मानः । विदधति तथापराधं, जन्मैव यथा वृथा भवति ॥ कार्याशयाऽपि मरणं श्लाघाकरणं हि सुभटानाम् ॥ १ ॥

धिक् सेवकत्वं तं यः प्रभुकृत्ये बिभेति बत मृतितः । कार्याशयाऽपि मरणं श्लाघाकरणं हि सुभटानाम् ॥ १ ॥

काम ! जानामि ते रूपं, संकल्पात् किल जायसे । न त्वां सकल्पयिष्यामि, न च मे त्व भविष्यसि ॥ १ ॥

अइकोहो अइलोहो अइदोहो अइमओ अ अइमोहो । दूरं परब्भवमि अ इहेव हा हुंति दुहहेऊ ॥ १ ॥

अकृत्वा परसतापमगत्वा खलनम्रताम् । अनुत्सृज्य सता मार्गम्, यत् स्वल्पमपि तद् बहु ॥ १ ॥

दानमौचित्यविज्ञानं, सत्पात्राणां परिग्रहः । सुकृतं सुप्रभुत्वं च, पञ्च प्रतिभुवः श्रियः ॥ १ ॥

मृगमीनसज्जनानां तृणजलसन्तोषविहितवृत्तीनाम् । लुब्धकधीवरपिशुना निष्कारणवैरिणो जगति ॥ १ ॥

धर्मारम्भे ऋणच्छेदे, कन्यादाने धनागमे । शत्रुघातेऽग्निरोगे च, कालक्षेपं न कारयेत् ॥ १ ॥

सामी अविसेसन्नू अविणीओ परिअणो परवसत्तं । भज्जा य अणणुरूवा चत्तारि मणस्स सल्लाइ ॥ १ ॥

अतिलोभो न कर्तव्यो, लोभ नैव परित्यजेत् । अतिलोभाभिभूतस्य, चक्रं भ्रमति मस्तके ॥ १ ॥

रागपदे प्रेमपदे लोभपदेऽहंकृतेः पदे स्वपदे । प्रीतिपदे कीर्तिपदे नहि कैर्द्रव्यव्ययः क्रियते²॥ १ ॥

निन्द्यं मद्यादेरप्यन्त्यजवर्ज्यं गुणापहृतिहेतुम् । द्विविधदौर्गत्यदूतं द्यूतं व्यसनार्णवं विन्द्याः ॥ १ ॥

पुत्रमित्रवणिक्पुत्रभ्रातृजामातृसेवकाः । पत्नीसपत्नीयानारिस्नुषाः शिष्याश्च प्रागृणात् ॥ १ ॥

पत्राङ्काः

(५५/२ ५९)
५१
५२
(७३–१८)
(७७/२ ४२)
८०–३२
८१–४०
८१–४७
८७–१३
१०३–१६
१०९–२०
१०९–६
१०९

## उपयुक्तानि पद्यानि

| उपयुक्तानि पद्यानि | पत्राङ्काः |
|---|---|
| न निमित्तद्विषां क्षेमो, नायुर्वैद्यकविद्विषाम् । न श्रीर्नीतिद्विषामेकमपि धर्मद्विषां न हि ॥ १ ॥ | २९ |
| मलमइला पंकमइला धूलीमइला न ते नरा मइला । जे पावपंकमइला ते मइला जीवलोगंमि ॥ १ ॥ | ३० |
| ब्रह्मचर्यस्थितो नैकमन्नमद्यादनापदि । दन्तधावनगीतादि, ब्रह्मचारी विवर्जयेत् ॥ १ ॥ | ३० |
| क्षान्त्या शुद्ध्यन्ति विद्वांसो, दानेनाकार्यकारिणः । प्रच्छन्नपापा जापेन, तपसा वेदवित्तमाः ॥ १ ॥ | ३० |
| कुग्रामवासः कुनरेन्द्रसेवा, कुभोजनं क्रोधमुखी च भार्या । कन्याबहुत्वं च दरिद्रता च, षड् जीवलोके नरका भवन्ति ॥१॥ | ४२ |
| स्त्रीजातौ दाम्भिकता भीलुकता भूयसी वणिक्जातौ । रोषः क्षत्रियजातौ द्विजातिजातौ पुनर्लोभः ॥ १ ॥ | ४३ |
| दुर्विधदुर्भगदुष्कृतदुष्टानिष्टादिदयितसंयोगात् । नित्यं जीवन्मरणात् श्रेयस्करणं सकृन्मरणम् ॥ १ ॥ | ४० |
| "खादन्न गच्छामि हसन्न भाषे, गतं न शोचामि कृतं न मन्ये । द्वाभ्यां तृतीयो न भवामि राजन् !, अस्मादृशाः केन गुणेन मूर्खाः ?" ॥ १ ॥ | ४४ |
| सुवर्णपुष्पा पृथिवीं, चिन्वन्ति पुरुषास्त्रयः । शूरश्च कृतसेवश्च, यश्च जानाति सेवितुं ॥ १ ॥ | ४५ |
| अलसायंतेणवि सज्जणेण जे अक्खरा समुल्लविआ । ते पत्थरटंकुक्कीरियव्व न हु अन्नहा हुंति ॥ १ ॥ | ४६ |
| छिज्जउ सीस अह होउ वंधणं चयउ सव्वहा लच्छी । पडिवन्नपालणेसुं पुरिसाण ज होइ तं होउ ॥ १ ॥ | ४६ |
| कुविअस्स आउरस्स य वसणासत्तस्स रायरत्तस्स । मत्तस्स मरंतस्स य सब्भावा पायडा हुंति ॥ १ ॥ | ५० |

# अथ उपयुक्तानि पद्यानि ।

पत्राङ्काः

कुरंगमातंगपतंगभृंगा मीना हताः पञ्चभिरेव पञ्च । एकः प्रमादी स कथं न हन्यात् ? यः सेवते पञ्चभिरेव पञ्च ॥ १ ॥ ६

लालिज्जंते दोसा ताडिज्जंते गुणा बहू हुंति । गयवसभतुरंगाण व तो होज्ज सुसिक्खपरिवारो ॥ १ ॥ ७

लज्जां गुणौघजननी जननीमिवार्यामन्यन्तशुद्धहृदयामनुवर्तमानाः ।
तेजस्विनः सुखमसूनपि संत्यजन्ति, सत्यस्थितिव्यसनिनो न पुनः प्रतिज्ञाम् ॥ १ ॥ ७

विपद्युच्चैः स्थेयं पदमनुविधेयं च महता, प्रिया न्याय्या वृत्तिर्मलिनमसुभंगेऽप्यसुकरम् ।
असन्तो नाभ्यर्थ्याः सुहृदपि न याच्यः कृशधनः, सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम् ?॥ १ ॥ ७

कामरागस्नेहरागावीषत्करनिवारणौ । दृष्टिरागस्तु पापीयान्, दुरुच्छेदः सतामपि ॥ १ ॥ ७

पाण्योरुपकृति सत्त्वं, स्त्रिया भ्रमशुनो बलम् । जिह्वाया दक्षतामक्ष्णोः, सखिता शिक्षयेत् सुधीः ॥ १ ॥ १०

विभवो वीतसंगानां, वैदग्ध्यं कुलयोषिताम् । दाक्षिण्यं वणिजां प्रेम, वेश्यानाममृत विषम् ॥ १ ॥ १२

पक्षिणां वायसो धूर्त्तः, श्वापदेषु च जम्बुकः । नरेषु द्यूतकारश्च, नारीषु गणिका पुनः ॥ १ ॥ १३

उत्तमाः स्वगुणैः ख्याता, मध्यमास्तु पितुर्गुणैः । अधमा मातुलैः ख्याताः, श्वशुरैरधमाधमाः ॥ १ ॥ १५

अत्रैकोऽपि ग्रन्थः सूत्रं वा यन्नाम्नाऽधारि तन्नाम्नैवोदितं ततो नानेकत्रोक्तौ भिन्नता।

——>o<——

॥ अर्हम् ॥

# श्री श्राद्धप्रतिक्रमणे साक्षीभूता ग्रन्थाः.



| ग्रन्थाः | पत्राङ्काः | ग्रन्थाः | पत्राङ्काः | ग्रन्थाः | पत्राङ्काः |
|---|---|---|---|---|---|
| अनुयोगद्वार. ... | २–२०२ | आचाराङ्गवृत्तिः .... ... | १९३ | आवश्यकचूर्णिः वज्रस्वामिचरित्र .... | २०० |
| अनुयोगद्वारचूर्णिः .... .... | २ | आद्यपञ्चाशक .... | ३२–८३ | आवश्यकनिर्युक्तिवृत्तिः | ३४–१–१४९ |
| अनुयोगद्वारः हैमीवृत्तिः .... | २ | आयुर्वेदः .... .... | ११६ | आवश्यकनिर्युक्तिः वृहद्वृत्तिः .... | १४९ |
| अनुयोगद्वारः हारिभद्रीयवृत्तिः .... | २ | आलोचनापञ्चाशकं .... .... | १९७ | आवश्यकवृहद्वृत्तिः .... .... | २०२ |
| अंगविद्या .. . .... | २४४ | आवश्यककायोत्सर्गनि० .... | २०० | आवश्यकवृहद्वृत्तिः .... .... | १६५ |
| आगमः .... .... | १५० | आवश्यकचूर्णिः | २–३१–६०–१०८–१३६ | आवश्यकवृत्तिः .... .... | १६५ |
| आचारागसूत्र .... | २८–३८–२०० | | –१४९–१५०–१५०–१६३– | आवश्यकवृत्त्यादिः .... .... | १८८ |
| आचारांगपञ्चमाध्ययन .... | ३ | | १६५–१७३–२०१ | इतिहाससमुच्चयः .... .... | ४ |

॥ अर्हम् ॥

# श्री श्राद्धप्रतिक्रमणे साक्षीभूतानि ग्रन्थकाराणां नामानि.

॥ अर्हम् ॥

# श्रीश्राद्धप्रतिक्रमणे कथायामागतानां विशेषाभिधानानां अकाराद्यनुक्रमणिका.

१ " " इदं चिह्नं गद्यस्य ।

" इदं चिह्नं गद्यस्य "।

अर्हम् ।

# श्रीश्राद्धप्रतिक्रमणे साक्षीभूताऽऽगतानां श्लोकाना गाथानां चाकारादिअनुक्रमणिका.

| विषया. | पत्राङ्का. |
|---|---|

## अथ चतुर्थः शिक्षाव्रताधिकारः



## अथ पञ्चमः दोषाधिकारः

## अथ द्वितीयोऽणुव्रतपञ्चकाधिकारः

ॐ अर्हम्

# श्रीश्राद्धप्रतिक्रमणसूत्रस्य विषयानुक्रमणिका.

ये प्रकरणकारास्त एव श्रीललितविस्तराकारिणः,तैः संमता च स्तुतिश्चतुर्थी,वैयावृत्त्यकराणां सूत्रं च सर्वेषां करणीयतया चैत्यवन्दनकारिणां२०१

इत्येवं स्पष्टगाथाव्याख्यामयी विषयविवेचनप्रवणा काव्यबोधविधायिविविधच्छन्दोबद्धगद्यसंस्कृतप्राकृतभाषामयकथाकलिता ऐदंयुगीनानेकाऽऽशङ्कासमाधानसाधना चतुरचेतश्चमत्कारकारिण्यपीयं वृत्तिः "अर्थदीपिका" नाम्नी निर्मिताऽपि पूज्यपादैर्विहायौद्धत्यं शोधिता लक्ष्मीभद्रैर्विबुधैः, ततो निष्कलङ्का समभ्यसनीयाऽभ्यासपटिष्ठानामित्यभ्यर्थनापुरस्सरमर्थ्यन्ते.

उदन्वदन्ता आनन्दाः शैरमुन्यङ्केन्दुमिते हायने शुचिकृष्णद्वादश्यां सूर्यपुरे.

श्रीपालकथादिविधातारो रत्नशेखरा ये ते तु भिन्ना एवैभ्यः, यद्यपि तेऽपि पञ्चदशशताब्द्याः पश्चिमं भागमेवालंचक्रुः स्वजनुपा भूपयामासुश्च सवृत्तिकगुरुगुणषट्त्रिंशिकागुणस्थानक्रमारोहक्षेत्रसमासश्रीपालचरित्रच्छन्दःकोशादिभिः साहित्यकलां, यतस्ते बृहद्गच्छीयाः श्रीमद्वज्रसेनसूरिपट्टपूर्वाचलार्यमाभाः श्रीमद्धेमचन्द्रचरणकमलचञ्चरीकायमाणाः, इमे तु श्रीमत्तपागणनभोऽङ्गणभानुप्रभश्रीमद्भुवनसुन्दरसूरिपदसरोजहंसाः, श्रीमद्विहिताश्च ग्रन्था यद्यपि भविष्यन्त्यनेके तथापि श्रीमद्भिरेव प्रस्तुते ग्रन्थे एतद्भिन्नाः सूचिताः "श्राद्धविधिकौमुदी अर्थकौमुदी (आचारप्रदीपः) लघुस्तोत्रं" इत्येते निर्णीताः, अपरेऽपि यदि स्युः स्तवस्तोत्रादिभिन्नाः सूरिपादाः केऽपि सूचयिष्यन्ति तान् उपकृता भविष्यामः ।

के केऽत्र विषयाः कस्मिन् कस्मिन् विषये कानि कानि कथानकानि तदेतत् सर्वं विषयानुक्रमादवधार्य धीधनैः, ग्रन्थस्यास्याध्ययने वाचने चानुपेक्ष्या इमे उपयोगिनो विषयाः—

श्राद्धप्रतिक्रमणवृत्तिः श्राद्धविधिवृत्तिः आचारप्रदीपश्चेति, वि. १५१७ पौप० व० ६ दिने स्वर्गः, तदानी लुंकाख्यात् लेखकात् सं० १५०८ वर्षे जिनप्रतिमोत्थापनपरं लुंकामतं प्रवृत्तं, तन्मते वेपधरस्तु १५३३ वर्षे जातः, तत्र प्रथमो वेपधारी ऋ. भाणकाख्योऽभूदिति"

तथा हीरसौभाग्ये—

सूरेस्ततोऽजायत रत्नशेखरः, श्रीपुण्डरीको वृषभध्वजादिव। वाम्बीति नाम्ना द्विजपुङ्गवेन, न्यगादि यो वालसरस्वतीति ॥ १२८॥

टीका—ततस्तस्मात्—श्रीमुनिसुन्दरसूरीन्द्रात् रत्नशेखर इति नामा सूरिरजायत, क इव ?—यथा भरतचक्रवर्तिप्रथमसुतः श्रिया—गणभृ-ल्लक्ष्म्या कलितः पुण्डरीकनामा श्रीवृपभध्वजात्—वृपभलाञ्छनात्। 'ध्वजश्चिन्हे पताकायां, शिश्ने पूर्वदिशो गृहे। खट्वाङ्गे शौण्डिके माने' इत्यनेकार्थतिलके, आदिदेवाज्जज्ञे। यः श्री रत्नशेखरसूरिः स्तम्भतीर्थे वाम्बीनाम्ना द्विजपुङ्गवेन—ब्राह्मणश्रेष्ठेन अयं वालसरस्वती इति न्यगादि—कथितः तदादि वालसरस्वतीति विरुदं दधार ॥ इति रत्नशेखरसूरिः ॥

तेन ज्ञायते निश्चितमेतत् यदुत श्रीमद्भिर्गुर्जरावनिर्विशेषेण स्वविहारादिना पाविता। श्रीमतां च साधुरत्नमुनीन्द्राणां वैराग्यमकरन्दमुक्षु वचनेपु मुग्धो ग्रन्थकृन्मनोभ्रमरो, जगृहुश्च दीक्षां सशिक्षां श्रीमद्भिर्गुणरत्नसूरिभिः शिक्षितेभ्यो भुवनसुन्दरसूरिभ्यः, पट्टे तु श्रीमतां मुनि-सुन्दरसूरिवराणा, पर्युपासिपत च श्रीमद्भिः सत्यहंसादिभिः पण्डितप्रवरैः श्रीमत्पादाः, स्पष्टमेतच्छ्रीमद्वाक्यैः, एतदीयप्रस्तावनाप्रशस्तिवचनो-ल्लेखविचारकाणां न नूत्नमेतत्।

भाष्येण परिकरितत्वमावेद्य श्रीमदकलङ्कश्रीमद्देवेन्द्रादिविहितवृत्तिसमलङ्कृततां चाऽऽविर्भाव्य पूज्यपादैर्ग्रन्थकृद्भिरपि तथात्वं, सूत्रि चास्याऽऽर्पत्वे प्रत्यहं श्रमणोपासकक्रियायां द्विसन्ध्यमुपयोगित्वे चाऽऽवश्यकं तदीयार्थपरिज्ञानं, सूत्रस्याज्ञातार्थस्य स्वादरहिततया सिद्धान्तितत्वात् निःस्वाद्स्याध्यवसायाशोधकत्वात् अध्यवसायाशुद्धावतीचारपङ्कस्यानपगमात् अशुद्धस्य सुकृतस्य यथेरितफलाप्रापकत्वात् प्रागुवद्धस्याप्यतिचारदोपकर्मण आलोचनप्रायश्चित्तादिनिरस्यत्वात् श्रद्धावता मुमुक्षुणा श्राद्धेनावश्यं ज्ञेयं सार्थं प्रतिक्रमणाध्ययनं स्वकीयं, ज्ञात्वा चैतत् पूर्वसूरिभिरनेकैश्चूर्णिभाष्यादिरलङ्कृतं सूत्रमेतत्, तथापि पतत्प्रकर्षतया कालस्य, दुर्लभतया गीतार्थसाधुसमागमस्य अक्षणिकतया गार्हस्थ्यस्य स्थूललक्ष्यतयाऽऽरम्भपरिग्रहमग्नानां रसपोपकस्वभावतया काव्यस्य हिताहितप्रवृत्तिनिवृत्त्युत्पादकतया रसवद्बोधस्य विस्तृततमकथानिकानामेव यथावद्वृत्तनिवोधनचतुरत्वात् श्राद्धानुष्ठानविधौ संक्षिप्ततया विवृतेऽपि सूत्रेऽस्मिन् श्रीमद्देवेन्द्रसूरिभिर्विशेषेण विवृतं सूत्रमेतत् पूज्यैः श्रीमद्भिः सूरिभी रत्नशेखरैः।

ग्रन्थप्रणेतारश्च कदा कतमत् भूमण्डलं मण्डयामासुः पावयामासुश्च स्वजनुपं केपां श्रीगुरूणां वदनकमलविनिर्गतैर्वचनरसैर्दीक्षादानपद्मभिः करसरोजैश्चेति जिज्ञासायां श्रीमतां सत्तासमयः एतद्ग्रन्थप्रशस्तित एव चतुर्दशशताब्द्या अत्यन्तान्तिमः पञ्चदशशताब्द्याश्चादिमो भागोऽवसीयते, तथा च तत्पाठः

" एषां श्रीसुगुरूणां प्रसादतोऽब्दे षडङ्कविश्वमिते ( १४९६ )। श्रीरत्नशेखरगणी वृत्तिमिमामकृत कृतितुष्ट्यै ॥ ११"

श्रीमतामितिवृत्तं च पूज्यैः श्रीमद्भिर्धर्मसागरोपाध्यायैरेवं स्वकृतायां तपोगच्छपट्टावल्यां लिखितं—

"चउवंण रयणसेहरओत्ति—श्रीमुनिसुन्दरसूरिपट्टे पट्टे चतुष्पञ्चाशत्तमः श्रीरत्नशेखरसूरिः विक्रम सं० १४५७ कचित् १४५२ जन्म, १४६३ व्रतं, १४८३ पण्डितपदं, १४९३ वाचकपदं, १५०२ सूरिपदं, स्तम्भे तीर्थे वांवीनाम्ना भट्टेन वालसरस्वती नाम दत्तं, तत्कृताः

श्रीमद्वीरजिनेन्द्रो विजयतेतराम् ।

# श्राद्धप्रतिक्रमणीया प्रस्तावना.

विदितमेतद्विपश्चितां यदुत श्रीमद्वीरजिनशासनं सप्रतिक्रमणमाद्यार्हच्छासनमिव, ये च प्राक् ऋजुप्राज्ञतयाऽस्थितकल्पा आसन् जाताश्च पश्चात् तीर्थसंक्रान्त्या स्थितकल्पास्तेऽप्युररीचक्रुरेव सप्रतिक्रमणं शासनं, का हि वार्त्ता तर्हि वक्रजडानां प्रथमत एव स्थितकल्पानां मुनीनां प्रतिक्रमणक्रियाया नियतत्वे ?, एवं च सति वीरजिनयतीनां चेत् शासनान्तर्वर्त्तितासमीहाऽवश्यन्तया प्रतिक्रमणक्रिया करणीया, यथा च वाचयमाना व्रतातीचाराणा शोधनमसंयमादिविपयकेण प्रतिक्रमणाध्ययनेन तथैव देशविरतानामपि स्थूलहिंसाविरत्यादिगोचरातिचारमयेनैव प्रतिक्रमणाध्ययनेन तत्, यथाप्रतिज्ञमेवातिचारसंभवात् नोभयेपामतिचारसाम्यं न च समेन सूत्रेण प्रतिक्रान्तिः, ततो युक्तमेव श्रमणोपासकानां प्रतिक्रमणेन भिन्नेन प्रतिक्रमणं, साम्ये जिनस्तुतौ गुरुवन्दने कायोत्सर्गे प्रत्याख्याने च नास्ति तथाविधो विशेपो यादृशोऽणुव्रतेपु, तेनान्यसूत्राणां सर्वथा पार्थक्याभावेऽप्यस्य विशेपभेदवत्त्वेन पार्थक्यं सर्वथा प्रतिक्रमणसूत्रस्य, यथा च आद्यावश्यके सर्वशब्दवर्जो यावन्नियमाङ्कितो द्विविधत्रिविधपाठपूर्ण आलापकः स्थूलहिंसादिनिग्रहमयश्चान्यावश्यके श्रावकाणां योग्यतयाऽऽलापकस्तद्वदेव तत्कर्तृप्रणीतमिदमपि सूत्रं, सिद्धान्तितं चात एव पूज्यपादैः श्रीमद्भिरभयदेवसूरिभिराद्यपञ्चाशकेऽस्यार्षत्वं, ये नैवं मन्वते तैर्दर्शनीयमन्यद् श्राद्धप्रतिक्रमणसूत्रं प्रत्न, नो चेदेवं सूत्राचार्यवचनोत्तीर्णवादिभिः सहालं चसूर्या, स्पष्टीकृतमत्रापि २०२ तमपृष्ठे अस्य श्रीमद्विजयसिंहाचार्यकृतया चूर्ण्या श्रीमज्जिनदेवसूरिदृब्धेन